प्रभृतयः विज्ञानिनः व्यवहाराणां दर्शने निर्भरत्वं प्रदर्शितवन्तः आसन्। परं वाट्सन्-महोदय एव अस्य सिद्धान्तत्वेन प्रतिष्ठापनमकरोत्। अस्यायमाशयः।

मनोविज्ञानं चैतन्यमधिकृत्य न विचारयितुं प्रभवेत्। किन्तु **दृश्यमानं** जीवानां व्यवहारमेवाश्रित्य प्रवर्तेत। व्यवहारशब्दः न केवलं प्राणिनां व्यवहारं परन्तु मनुजानां दुर्विभाव्यं व्यवहारमपि निर्दिशति। व्यवहारश्च शरीरचलनात्मकः(Motor activity) स्वररूपः, (Vocal activity) अन्तरवयवचेष्टामयः, (Internal bodily activity) इति त्रेधा विभज्यते। व्यवहारस्य निदानं प्रेरकमेव (Stimulus) ; तेन च प्रतिक्रिया (Response) जायते। अतिप्रकाशे दृष्टे स्वतो जायमानः अक्षिसंकोचः अत्रोदाहरणं भवितुमर्हति। तथा च व्यवहारे



वाट्सन्

---

जातः ; मनोविज्ञानस्य विज्ञानत्वं संपादयितुं बहु प्रयेते। तदर्थं च साक्षात् दर्शनं प्रयोगं च प्राधान्येन स्वीकृतवान्। एतदुपज्ञमेव व्यवहारसिद्धान्तः ; तत्तदनुकूले वातावरणे रक्षिताः बालाः, विद्वांसो धूर्ता वा कल्पयितुं शक्या एवेत्ययं मन्यते स्म। अयं 1958-तमे वर्षे मृतः।

सर्वत्र प्रेरकप्रतिक्रियासम्बन्धो दृश्येत। प्रतिक्रिया स्वाभाविक्यपि कदाचित् कृत्रिमप्रेरकेणापि उत्पादयितुं शक्या। अस्मिन् सिद्धान्ते चैतन्यं, मनः, बिम्बनं, भावः इत्यादयः सत्तां न लभन्ते। अत्र च प्रणाली बाह्यव्यवहारावेक्षणमेव; न त्वन्तरवेक्षणम्, शिक्षणं च तन्त्रिकासूत्पाद्यमानः संस्कारविशेषः; स चासकृत् प्रेरकोत्पादनेन प्रतिक्रियासंपादनेन च निष्पाद्यते। वीणावादनाय, टैप् करणाय वा प्रवृत्तः कश्चित् प्रथमं तन्त्रिकासु संस्कारोत्पादनाय प्रवर्तते। चिराभ्यासेन, प्रतिक्रिया पश्चात् स्वतः अनायासं च जायते। एवमनायासं प्रतिक्रियोत्पादनमेव शिक्षणमिति अयं सिद्धान्तः अभिप्रैति। केषांचित् विषयाणां शिक्षणे अयं सिद्धान्तः स्वप्रभावं निरूपयति स्म।

शिक्षणे प्रेरणानुगुणं बालेषु कथं प्रतिक्रिया जायते इत्यादिविचारे तदनुगुणसिद्धान्तदर्शने चास्ति अस्य सिद्धान्तस्योपयोगः। किन्तु सर्वेष्वपि शिक्षाविषयेषु अयं सिद्धान्तः उपयुज्यते इति नैव वक्तुं शक्यम्। अत्रायं दोषो निर्दिश्यते। मनुजस्य व्यवहारः सर्वोऽपि केवलं प्रेरकप्रतिक्रियासंबन्धरूपेण निरूपयितुं न शक्यते। अनागतं अथवा भविष्यन्तमर्थमधिकृत्यापि केचन कथयितुं शक्नुवन्ति। केवलं मनसा विभावनीयं उच्चतरं तत्त्वमधिकृत्य ये विचिन्तयन्ति, प्रकाशयन्ति च स्वाशयं, तेषु कीदृशं प्रेरकं कथंभूतां प्रतिक्रिया-मुत्पादयति? अन्यसिद्धान्तनिराकरणाय सोत्साहं प्रवर्तमानाः वाट्सन्-प्रभृतयोऽपि मनः उपयुज्यैव स्वाभिमतं साधयन्तीति इदं, अकामैरपि तैरङ्गी-कर्तव्यमेव। अक्षिसङ्कोचादयः प्रतिक्रियारूपेणाविदितमेव भवेयुः। परं पत्रलेख-नादिकं तु मनसा विचिन्त्यैव क्रियते। कदाचित् लेखनाय प्रवृत्तः पश्चाद्विरमति च। इदमपि चिन्तनादेव जायते; मनुजस्य चिन्तन-विभावन-इच्छाप्रभृतयो बहवो मानसव्यापाराः वर्तन्ते। तस्मात् मनः इति किमपि तत्त्वं वर्तते इति अवश्यमभ्युपेयमेवेति बहूनामाशयः॥

### ५. मनःप्रेरकपरिशीलनसिद्धान्तः (Purposivism)

अयं सिद्धान्तः पूर्वोक्तसिद्धान्तादत्यन्तं भिन्न इति मन्तुं शक्यते। अस्य चोपक्रमः **मक्डूगल्**-महाशयेन[1] कृतः। (McDougall 1871 - 1938) एतत्सिद्धान्तानुसारेण व्यवहारः सर्वोऽपि किञ्चिल्लक्ष्यकः (Purposive) एव भवति। किञ्चिल्लक्ष्यमनुरुणद्धि व्यवहारः। जीवेषु प्रेरकं किमपि तत्त्वं वर्तते, तस्य च नाम हार्मे (Horme) इति। इदमेव मनसः प्रेरकं भवति। अनेन प्रेरिता मनुजाः पशवः अन्ये जीवाश्च व्यवहरन्ति। तस्मात् मनुजव्यवहारज्ञानाय प्रेरकज्ञानमावश्यकम्। प्रेरकं च मूलप्रवृत्ति (Instinct)-द्वारा नरं प्रेरयति। एता एव मूलप्रवृत्तयः मनुजस्य सर्वमपि व्यवहारं जनयन्ति। मूलप्रवृत्तयः चतुर्दश इति गणनापि कृता। मूलप्रवृत्तिसंख्याविषये मतिभेदो वर्तते। परन्तु मनुजव्यवहारे संवेगानां मूलप्रवृत्तीनां च कारणत्वं सर्वाभ्युपगतमेव।

### ६. सविकल्पमनःपरिशीलनसिद्धान्तः (Gestalt Psychology)

अस्य **अवयविमनोविज्ञान**मित्यपि नाम। **एरेन्फेल्स्** (Christian von Ehrenfels 1859-1932)—नामकः विज्ञानी 1830-तमे वर्षे पूर्णाकाराख्यं (Gestalt) भावं निर्दिष्टवान्। 1912-तमे वर्षे **वेर्तिमेर्**-(Max Wertheimer 1880-1934), **कोफ्का** (Kurt Koffka 1886-1941), **कोलर्** (Wolfgang Köhler 1887- ) इत्येते त्रयः अमुं सिद्धान्तं प्रतिष्ठापितवन्तः। इमे त्रयोऽपि प्रत्यक्षं शिक्षणप्रक्रियां चाधिकृत्य व्यचारयन्। तत्र प्रत्यक्षं परमं ज्ञानसाधनमिति तत्स्वरूपमधिकृत्य विचारः। कस्याप्यवयविनो दर्शने जायमानं ज्ञानं उत्पत्तावेव अवयविविषयकमेव भवति। प्रथमं अवयवानां ज्ञानं

---

[1]**मक्डूगल्महाशयः** (1871 – 1938); आंग्लदेशीयः अयं पश्चात् अमेरिकादेशे निवसति स्म। अनेनोपज्ञातः सिद्धान्तः सामाजिकमनोविज्ञाने (Social Psychology) बहूपकृतवान्। मूलप्रवृत्तीः संवेगांश्च (Emotions) अधिकृत्य अधिकं वैशद्यमापादयति स्मायम्॥

ततः परम् अवयवि-ज्ञानमितीयं प्रक्रिया नाङ्गीक्रियते । अस्मच्छास्त्रकारेषु केचन प्रथमं निर्विकल्पक-ज्ञानं, ततश्च नीलोऽयं घट इति सविकल्पकज्ञानं जायमानं कथयन्ति । नागृहीतविशेषणा बुद्धिः विशिष्टमवगाहते इति तन्मतम् । इदं तु नाङ्गीकुर्वन्ति एते आधुनिका विज्ञानिनः । अवयवातिरिक्तं अवयविद्रव्यं तु वाञ्छन्ति ; इमे वैज्ञानिकाः इदं स्वीकुर्वन्ति । अवयवगतधर्मापेक्षया अवयविनि केचन विलक्षणधर्मा वर्तन्त एव । तस्मादवयवज्ञानेन अवयविज्ञानं नैव जायेत पूर्णतया । अत्र चतुर्भिरन्धैः कृतं गजवर्णनं स्मर्तव्यम् । अन्धानां गजमधिकृत्य पूर्णं ज्ञानं नैव जातम् । ततश्च वुण्ड्ट्-महोदयेन, टिच्नेर्—महोदयेन च यन्मनसः अवयवान् विश्लिष्य मनः ज्ञातव्यमिति उपदिष्टं मनःपरिज्ञानाय, तन्नेष्टमेतेषां त्रयाणां विज्ञानिनाम् । प्रत्यक्षं च कस्यापि वस्तुनः अंशेन न भवति । पर्वतोपत्यकास्थवृक्षप्रत्यक्षे वृक्षस्याधारभूतोपत्यकादर्शनमपि भवेदेव ; यथा वृक्षप्रत्यक्षं तदाधारप्रत्यक्षेण सहैव जायते एवमेव सर्वमपि प्रत्यक्षं भवति । व्यवहारवादिनस्तु केवलं प्रेरकं, केवलां प्रतिक्रियां च परिशीलयन्ति ; इदमपि न संमतं अवय-



केर्तिमेर्

विवादिनां एतेषां विज्ञानिनाम्। यत्र वातावरणे प्रेरकं जायते यत्र प्रतिक्रिया च जायते तयोरुभयोरपि परिशीलनं ताभ्यां सहैव लब्धेन वातावरणप्रत्यक्षेण सह कार्यमिति मन्वाना एते व्यवहारवादमपि नाद्रियन्ते। प्रत्यक्षमपि, यथाकथंचित् जायते इत्यपि न मन्तव्यम्; बहिः स्थितेन वस्तुना प्रथमं इन्द्रियसन्निकर्षः जायते; अयं सन्निकर्षःकेवलं संवे-दनं (Sensation) जनयति। ततः मानवः स्वेन लब्धस्य



2. पर्वतः वृक्षश्च

संवेदनस्य स्वानुभवानुगुणं वृक्षप्रत्यक्षं वानरप्रत्यक्षं वा प्राप्नोति; एवं यत् संवेदनस्य निश्चितप्रत्यक्षत्वं जायते तन्मनुजस्य अनुभवसहकृतेन मनसा आपाद्यते; बहिः स्थितस्य वस्तुनः पूर्णरूपेण (Gestalt) यन्मनस्यवस्थापनं तत्संकलितं (integrated), आपादितरूपं (Patterned phenomenon) च वर्तते। अत्र पूर्णतासंपादनं तदीयपरिवेषेणैवोत्पाद्यते। अत्र तृतीये चित्रे एकः चषकः, मुखद्वयं च द्रष्टुं शक्यम्। मुखस्य चषकस्य च एकस्मिन्नेव क्षणे दर्शनं न सुशकम्। तत्रैकं अन्यस्य परिवेषत्वं भजते। तस्मात् बालकः तदीयव्यवहारानुभवाभ्यां वातावरणेन च सहैवावगन्तव्यः; अयं सिद्धान्तः बालमनोविज्ञाने शिक्षाविषये च स्वोपस्कारमाधत्ते। गेस्टाल्ट् इति (Gestalt) जर्मन्भाषापदं

क्वचित् पदार्थानां धर्मान् चतुरश्रत्वादीन् निर्दिशति। अयमस्य प्राथमिकोऽर्थः। आकारवान् अथवा संस्थानयुक्तः पृथक् वर्तमानः कश्चन पदार्थ इत्यपि अस्यार्थो वर्ण्यते कोलरेण। एतत्समानार्थकं पदं भाषान्तरेषु न वर्तते इति भाषाविदः कथयन्ति। शिक्षा-विषये अस्य आश-यस्य यः प्रभावो वर्तते सः पश्चात् प्रकरणान्तरे वक्ष्यते।



3. चषकः, आस्यम् च

एवं बहूनां सिद्धान्तानां दर्शनेन कदाचित् केचन, को वा सत्यः सिद्धान्त इति विचिकित्सां प्राप्नुयुः। प्राधान्येन व्यपदेशा भवन्तीति अस्मच्छास्त्रकारा वदन्ति। तथा च कस्मिन्नप्येकस्मिन्नंशे श्रद्धावन्तः केचन विज्ञानिनः पृथक् सिद्धान्तान् प्रवर्तयामासुः। वस्तुतः एते सिद्धान्ताः इदानीं मनोविज्ञानेतिहासविषयाः केवलं वर्तन्ते। सर्वेऽपि सिद्धान्ताः मनोविज्ञानाधिगमे उपकारं कृतवन्त एव। ततश्चैकस्य परित्यागेनापरस्य स्वीकरणं नोचितम्। सर्वेऽपि सिद्धान्ता अपेक्षिताः। मनोरचनापरिशीलनसिद्धान्तः संवेदनं, अवयविवादः प्रत्यक्षं, मनोविश्लेषणसिद्धान्तः इच्छादिकं, प्रयोजनवादसिद्धान्तः सलक्ष्यं कार्यकरणं, व्यवहारवादश्च शारीरक्रियां निरूपयन्तीति मनःस्वरूपं जिज्ञासूनां सर्वसिद्धान्तसमाहार एवापेक्ष्यते॥

## मनोविज्ञानविषयभेदाः

( Fields of Psychology )

मनोविज्ञाने विचार्या विषया बहवो वर्तन्त इति विषयभेदेन बह्व्यः शाखाः मनोविज्ञानस्य उत्पन्नाः। तत्रैकैकापि शाखा कमपि विषयमधिकृत्य विपुलतरं विचारमारचयति। तत्र प्राधान्यानुसारेण काश्चन शाखाः निर्दिश्यन्ते।

### सामान्यमनोविज्ञानम् (General Psychology)

अत्र सर्वमनोविज्ञानशाखानां समाना धर्मा विचार्यन्ते। इयं शाखा प्रवयसां अपसामान्यत्वादिदोषरहितानां साधारणमनुजानां व्यवहारं विचारयति। अत्र इन्द्रियजन्यं प्रत्यक्षं, भावनाः, संवेगाः, चिन्तनम्, युक्त्यनुसन्धानम्, कार्यप्रेरकं (Motivation), कार्योद्देश्यम्, शिक्षणं चाधिकृत्य विचारो भवति। कदाचित् केषुचित् व्यक्तिविशेषेषु विद्यमानान् कांश्चन



कोलर्

विभिन्नान् व्यवहारान् तत्कारणानि च परिशीलयति। अत्र प्रतिपादितानां सिद्धान्तानां अन्यशाखीयविषयेषूपयोगश्च क्रियते।

## अपसामान्यमनोविज्ञानम् (Abnormal Psychology)

साम्यावस्थातः भ्रष्टानां तन्त्रिकारोगयुक्तानां बुद्धिभ्रंशादिधर्मवतां स्वभावं परिचाययति इयं शाखा। फ्रायड्-महोदयेन उपस्थापितो मनोविश्लेषणसिद्धान्तः अत्र बहूपकरोति। अयं सिद्धान्तः मनोविकारचिकित्सातन्त्रेण (Psychiatry) संबद्धः।

## बालमनोविज्ञानम् (Child Psychology)

बहवो विज्ञानिनः बालानां स्वभावाधिगमाय प्रवृत्ताः। अत्र चोपायाः बालप्रकृत्यनुगुणं विभिन्ना भवन्ति। इयं शाखा बालेषु दृश्यमानान् वंशपारम्पर्यागतान् परिवेषप्राप्तांश्च धर्मान्, परिवेषानुगुणं बालैः प्राप्तं समञ्जसत्वं, बालानां बुद्धिविकासं, शारीराभिवृद्धिं, अन्यांश्चैतादृशानंशान् विचारयति ॥

## पशुमनोविज्ञानम् अथवा तुलनात्मकमनोविज्ञानम्
## (Animal or Comparative Psychology)

केचन विज्ञानिनः पशुपक्ष्यादीनां मनसः परिज्ञानाय बहु प्रायतन्त। पशुमनोविज्ञानं मनुजमनोविज्ञाने उपकरिष्यतीत्येते मन्यन्ते स्म, यतः मनुजस्य पशूनां च जीवनं समानमेवेति सिद्धान्तो वर्ण्यते। अत्र पशुमनोविज्ञानेन मनुजमनोविज्ञानस्य तुलना क्रियते। पशुमनोविज्ञानेन मनुजस्य केषुचित् नोच्चतरव्यवहारेषु आहारनिद्रादिषु किञ्चित् ज्ञानं प्राप्यते एव। किञ्च, मनोविज्ञानसिद्धान्ताधिगमाय मनुजेषु क्रियमाणः प्रयोगः अधिकं कालमपेक्षेत; स एवाल्पेन कालेन मूषिकादिषु कर्तुं शक्यते। ऐसेङ्क् - नामकः (H. J. Eysenck) मनोविज्ञानी श्वेतमूषिकाणां पञ्चदशसन्ततीः (अथवा परम्पराः generations) संवर्ध्य कांश्चन प्रयोगान् कृत्वा अल्पेन कालेन कांश्चन नियमविशेषानुपलेभे। एतादृशः प्रयोगविशेषः (experiment) मनुजजातौ कर्तुमशक्य एव। शिक्षाविषये **तार्ण्डैक्** - महोदयेन मार्जारे, कोलर्महोदयेन वानरे च कृतः प्रयोगः अत्र स्मर्तव्यो भवति।

### सामाजिकमनोविज्ञानम् (Social Psychology)

मनुजाः सर्वदा मनुजसमाजमध्ये एव जन्मप्रभृति मरणपर्यन्तं निवसन्ति। अयं समाजः कुटुम्ब-ग्राम-नगर-देशरूपेण वर्तते; उत्सवादिषु सद्यः सङ्गतानां मनुजानां समुदायरूपेणापि विद्यते। स्ववर्गेषु समाजेषु च मनुष्याणां स्वभावः कथं भवति? कश्चन समाजः अन्यं समाजमुद्दिश्य कीदृशं प्रद्वेषं (prejudice) वहति? कस्माच्च वहति? वर्ण (colour)-भेदेन कथं जनसमाजे प्रद्वेषादयो भवन्ति? नेता कथं स्यात्? इत्येवमादिकं वर्णयति इदं विज्ञानम्। अस्य विभागस्य पृथगभिवृद्धौ मक्डूगल्महाशयः प्रधानं कारणं भवति।

### शारीरमनोविज्ञानम् (Physiological Psychology)

शरीरं मनः स्ववशे करोति। मधुपानानन्तरं मधुसारो रक्ते प्रविश्य तदनुगुणं चेष्टयति नरम्। एवं संवेगयुक्तं मनः, शरीरं स्ववशे करोति इति वर्तत एव शरीरस्थित्यनुवर्तित्वं मनसः। तस्मात् केचन मनोविज्ञानिनः मनः-कार्यं सर्वमपि शरीरसंस्थानसंबद्धं मत्वा, शरीरसंस्थानस्य परिशीलनं विशिष्य कुर्वन्ति। शरीरं मनश्च परस्परं सम्बद्धे एव। ततश्च विश्लेष्य पृथगध्ययनं किमर्थमिति शङ्का उदियात्। अथापि तन्त्रिकातन्त्रं (Nervous System) ग्रन्थिकार्याणि च (Functions of the glands) अधिकृत्याधुना कृतो विचारः मनःकार्यम्, तत्रापि मस्तिष्कस्वरूपं, तत्प्रयुक्तं कर्मजातं चावगमयत्यस्मान्। प्रथमे मनोविज्ञानिनः शरीरतन्त्रनिष्णाताः (Physiologists) भिषज एवाभूवन्। प्रत्यक्षादिविषये विचारं कुर्वन्तः भौतिकविज्ञानिनोऽपि (Physicists) मनोविज्ञा-नाधिगमे साहाय्यकारिणो वर्तन्ते। मनोविज्ञानसम्बद्धं इदं शरीरतन्त्रं अधुना तन्त्रिकातन्त्रं परिशीलयत् बहूपकरोति।

### विकासमूलकमनोविज्ञानम् (Genetic Psychology)

इयं शाखा नराणां बुद्धिविकासं परिचिनोति। मनुजस्य सर्वोऽपि व्यवहारः यौवने सहसा प्रादुर्भवतीति नैव मन्तव्यम्। सर्वोऽपि व्यवहारः जन्मप्रभृति

अथवा बाल्यात् प्रभृति क्रमशो विकासं प्राप्नोति ; ततः शिशूनां, बालानां, यूनां, प्रवयसां च व्यवहारज्ञानं तेषां पूर्वावस्थाज्ञानेनैव जायेत । व्यवहारेषु कियान् मातृतः पितृतश्च प्राप्तः ? कियांश्च शिक्षणवातावरणादिभिः लब्ध इति विचारणीयम् । इदानीं केनचिद्रूपेण दृश्यमानः मनुजः कथं एवं जात इति विचार्यते । कीदृशो विपरिणामः चिन्तने, आचरणे च तस्यां तस्यामवस्थायां जातः इति, अयमपि अस्याः शाखायाः विषयः । बालेषु श्रद्धावतां अध्यापकानां, इयं शाखा, कुतः केचन बालकाः निष्कारणं बिभ्यति ? कुतो दुरभ्यासान् परिचिन्वन्ति ? कुतः स्तेयमाचरन्ति ? अनृतं वदन्ति ? आत्मप्रशंसां कुर्वन्ति ? परान् उपद्रवन्तीत्येवमादिषु विषयेषु मूलं कारणमभिव्यञ्जयति । बालानां व्यक्तित्व-चारित्र-बुद्धिशक्तिपरिज्ञाने समीचीनशिक्षणपद्धत्यनुसरणे च इयं शाखा अतीवोपयुज्यते ।

मनोविज्ञानं तावत् द्वेधा विभक्तुं शक्यते । मनुजस्य मनः तदीयव्यवहारांश्चाधिकृत्य विचार्य, मूलभूताः सिद्धान्ताः येन विभागेन विव्रियन्ते तस्य **शुद्धमनोविज्ञानम्** (Pure Psychology) इति नाम । एवं लब्धानां सिद्धान्तानां उपयोगो येन मनोविज्ञानेन क्रियते तस्य **व्यवहृतमनोविज्ञानम्** (Applied Psychology) इति नाम । अत्र द्वितीयविभागे अन्तर्भवन्ति शिक्षामनोविज्ञान-नैदानिकमनोविज्ञानप्रभृतयः शाखाः ॥

## शिक्षामनोविज्ञानम्

(Educational Psychology)

शिक्षामनोविज्ञानमस्माकं प्रधानमिति तदधिकृत्योपाध्यायैः विशिष्याव-गन्तव्यम् । पूर्वकाले शिक्षामधिकृत्य एवमाशयः आसीत् । 'शिक्ष' अवबोधने इत्यस्माद्धातोर्निष्पन्नं 'शिक्षा' इति पदं अवबोधनं, ज्ञानप्राप्तिं, णिचि ज्ञानोत्पादनं च सूचयति । प्राक्तनकाले शास्त्रादिविषयज्ञानोत्पादनं प्रधानं बभूव । तदर्थं च वेद्यं सर्वं संगृह्य बालबुद्धौ न्यवेशयन् । कण्ठस्थीकरणं च बह्वपेक्षितम् । बालाश्चोपदिष्टं सर्वं गृहीत्वा मनसि धरन्ति स्म । शास्त्रार्थगोष्ठीषु अधीतं सर्वं पुनः पुनः कथयन्ति स्म । एवं अधीतविद्याः बहवः, प्राचीनकालादाराभ्य क्षुण्णात् वर्त्मनः रेखामात्रमपि परं न व्यतीयुः । स्वातन्त्र्येण चिन्तनं शशशृङ्गायते स्म । शुकवत् केवलं पठन्तः पाठयन्तश्चासन् । अधुना शिक्षासिद्धान्ताः एतादृशं पाण्डित्यं नाभिनन्दन्ति । शिक्षया लब्धस्य ज्ञानस्य क्वचित् समुचितोपयोगः अपेक्ष्यते । ज्ञानं ज्ञानार्थम् (Knowledge for knowledge's sake) इति यदुक्तं तन्न समीचीनमिति इदानीं प्रत्ययो वर्तते । 'यस्तु क्रियावान् पुरुषः स विद्वान्' । क्रियाकरणकौशलमेव ज्ञानमिति, बह्वीषु पाठशालासु क्रीडा-अभिनय-मानसोल्लास-शिल्पादीनां प्राधान्यं दत्तं वर्तते इदानीम् । न केवलं ज्ञानं किन्तु करणकौशलमप्युत्पाद्यते अत्र । करणेन ज्ञानं प्राप्तव्यमित्यपि (learning by doing) वर्तते मतिः शिक्षासिद्धान्ताभिज्ञानामधुना । शिक्षायाः प्रयोजनमधिकृत्य शिक्षासिद्धान्त एव निरूपयितुं प्रभवति । न तु मनोविज्ञानम्; मनोविज्ञानं तु किमपि लक्ष्यं प्राप्तुं दीयमाना शिक्षा कथं कर्तव्येति उपायनिर्देशे स्वाधिकारं बिभर्ति । अथाप्यत्र प्रसङ्गात् शिक्षालक्ष्यं किञ्चिन्निर्दिश्यते । शिक्षधातु-समानार्थकः आंग्लेयीभाषाधातुः 'एडुकेट्' (Educate) इति वर्तते । अस्य चायमर्थः, यत् बालस्य मनसि निगूढं स्थितायाः शक्तेः बहिरानयनम्, अर्थात् विकासनम्; न तु उपधानभस्त्रिकायां तूलनिधानमिव बालबुद्धौ अध्याप्य-विषयाणां बलात् अर्पणम् इति ।

शिक्षाप्रयोजनानि च इमानि—

१. शिक्षणं, मानवे वर्तमानस्य पूर्णत्वस्याविष्कारकं भवतीति स्वामी विवेकानन्दः।

२. शिक्षणं नरं भव्यजीवनाय सन्नद्धं करोति। शिक्षितः ज्ञानं कौशलं च प्राप्य वृत्तिं लब्ध्वा जीवनं सम्यग्वर्तयति। सामाजिकगौरवमपि प्राप्नोति।

३. शिक्षणं सच्चारित्रमापादयति। उपदेशेन सच्चरित्रप्रदर्शनेन स्वयमाचरणेन च सदभ्यासान् सदाचरणानि सद्भावांश्च अध्यापकाः छात्रेषु जनयेयुः।

४. शिक्षणं मनुजस्य मानसीं शारीरां च शक्तिं समं संवर्धयति। बालेषु बहवः शक्तिविशेषा वर्तन्ते। तेषां चानुपातानुगुणं अभिवृद्धिः संपाद्यते शिक्षया।

५. शिक्षा बालान् सदभ्यासयुक्तान् करोति। बालाः देशेन अपेक्षितं सर्वमाचरितुं शक्ता भवन्ति शिक्षया।

६. शिक्षा कालं सम्यग्यापयितुमुपदिशति। जीवनं तावत् क्लेशसाध्यं वर्तते। शिक्षणं विरामावकाशं सम्यगुपयुज्य मनसः शरीरस्य च विश्रान्तिसम्पादने उपकरोति।

७. शिक्षणं वातावरणानुगुणमात्मनो जीवनं वर्तयितुं नरमुद्योजयति। विभिन्नाशयैः जनैः सह वर्तनं शिक्षयति च।

८. शिक्षा च, नरं आत्मनः आशयं कलाकौशलं वा सुष्ठु आविर्भावयितुं शाकयति।

९. शिक्षणं बालस्य व्यक्तित्वं शोभनैरुपायैः वर्धयति इति। एवमन्यानि अनेकानि प्रयोजनानि वर्ण्यन्तेऽभिज्ञैः।

अथ का नाम शिक्षेत्याधुनिकानां दृष्ट्या शिक्षास्वरूपमपीषदवगन्तव्यं वर्तते। शिक्षणेन बालेषु पूर्वं दृष्टा व्यवहाराः परिष्कृताः परिवर्तिताश्च भवन्ति। कश्चन बालः भोजनमपि सम्यगाहर्तुं न जानीयात्। ततश्चैवं भोक्तव्यमित्युक्तः भोजनक्रियां सुपरिष्कृतां निर्वर्तयेत्। कस्यापि श्लोकस्य अर्थमजानतः सतः

बालस्य व्यवहारः अन्यः। श्लोकार्थं जानतः तस्यैव व्यवहारः अन्यः वर्तते। एवं शिक्षया व्यवहारमन्यथयन् बालः जनसमाजे आत्मनः समञ्जसत्वमापादयतीति कथयन्ति। शिक्षाप्रयोजनानां शिक्षास्वरूपस्य च ज्ञानं केवलमुपाध्यायस्य न पर्याप्तम्; बालमनोज्ञानमपि अपेक्ष्यते। शिक्षासम्बन्धिबालमनोज्ञानं च शिक्षामनोविज्ञानेनैव प्राप्यत इति अस्त्यावश्यकतोपाध्यायानां शिक्षामनोविज्ञानस्य। सामान्यमनोविज्ञानसिद्धान्तः एव शिक्षाविषये यथायोगमुपयुक्तः शिक्षामनोविज्ञानमिति व्यवह्रियते॥

तथा च शिक्षामनोविज्ञानस्य लक्षणमेवमुच्यते पील्महोदयेन; "शिक्षासम्बन्धि विज्ञानमेव शिक्षामनोविज्ञानं भवति यत् स्वाध्याप्यबालानां मनसो विकासं, तेषां शक्तिसीमानं, शिक्षणप्रक्रियाः सामाजिकसम्बन्धं च अवगन्तुमुपाध्यायानां साहाय्यमाचरति[1]" इति।

## शिक्षायाः मनोविज्ञानस्य च सम्बन्धः

शिक्षाकुशलः स्विट्जर्लाण्ड्-अभिजनः **पेस्टलाड्जि** (Pestalozzi)-नामकः कश्चन उपाध्यायः स्वकृतमध्यापनमधिकृत्य शोचति स्म। 'मम पुत्रमध्यापयन् अहं अर्थविवरणकाले न कदापि पदस्य अर्थभूतं वस्तु प्रदर्शितवान्। पुष्पं वा प्रवाहो वा भवतु। केवलपर्यायपदकथनेनैव मम बालकं पीडितवान्। नैव कुसुमं नदीजलं वा प्रदर्शितवानि'ति। स्वानुभवात् ज्ञानं प्राप्य वर्तते। स कथयति स्म—'[2]शिक्षणं (अनुदेशनं च) मनोविज्ञानानुसारि कुरुत' इति। एवं **तामस् फुल्लेर्** (Thomas Fuller)–नामकः शिक्षाकुशलः उपाध्या-

---

1. Educational Psychology is the science of education and helps the teacher to understand the development of his pupils, the range and limits of their capacities, the processes by which they learn, and their social relationships." Peel, E. A., *The Psychological Basis of Education*: 1956, quoted by Jayaswal. p: 18.

2. Psychologize education.

यस्य योग्यतामधिकृत्यैवं लक्षयति ; " स स्वच्छात्रान् अवगच्छति[1] " इति । अस्मिन् प्रसङ्गे **आदम्स्**-महोदयस्य (Sir John Adams) वाक्यमपि स्मर्तव्यमेव । 'शिक्षार्थको धातुः द्विकर्मकः, बालः विषय इति उभयमपि ईप्सितमेवेति' ; उदाहरणम्–आचार्यः माणवकं धर्मं ब्रूते शास्ति वा[2] इति । यथा आचार्यस्य अध्याप्यविषयज्ञानमपेक्षितं एवं बालज्ञानमपि अवश्यापेक्षितम् । अत एव तमिल्-भाषाया व्याकर्ता **भवनन्दी** कथयति, 'अध्येतुः ग्रहणशक्तिमवगत्य तदनुगुणं क्रियमाणमध्यापनमेव वरम्' इति । पूर्वमध्यापनं विषयकेन्द्रमासीत् । इदानीं तु बालकेन्द्रमेवेष्यते तत् । मनोविज्ञानिना क्रियमाणमध्यापनं ललितं स्यात् ।

## शिक्षामनोविज्ञानम्

शिक्षामनोविज्ञानं, सामान्यमनोविज्ञानसिद्धान्तान् उपयुङ्क्ते शिक्षायाम् । पाठशालारूपवातावरणेन पाठ्यचर्यया च बालानां शक्तिः आचरणं च कथमन्यथा जायते इति विचारयति । समीचीनवातावरणोत्पादनेन, उचितपाठ्यचर्याकल्पनेन च बालानां शक्तिः सम्यग्विकसिता जायते । अध्यापनं अध्ययनं इतीदमुभयमपि समीचीनं क्रियते अनेन मनोविज्ञानेन । शिक्षितं च यथा स्थिरं स्यात् तथा कल्पयति इदं मनोविज्ञानम् । बालानां शक्तिः विद्यावगमे कियती वर्तते इति अवबोधयति ; शिक्षानियमानुसारं (Laws of learning) अध्यापयितुमुपाध्याय-मुद्योजयति । बालानां बुद्धिपरीक्षां उपलब्धिपरीक्षां च कृत्वा कक्ष्यायां स्थितान् विभिन्नबुद्धिस्तरान् बालानध्यापयितुमुपाध्यायस्योपकरोति । मन्दबुद्धीनामप्युचिता-ध्यापनं कर्तुमुपाध्यायं प्रेरयति । बालेषु चिन्तन-कल्पन-युक्त्यनुसन्धानादि-कौशलं वर्धयितुमिदमेव शिक्षामनोविज्ञानं साहाय्यमाचरति । केचन बालाः वंशधर्मप्राप्त्या बुद्धिमन्तः अबुद्धिमन्तो वा भवेयुः । परिवेषादपि बुद्धिमान्द्यं जायेत; ततश्चात्र यथोपाध्यायः स्वच्छात्राणां शक्त्यादिकं सम्यगवगत्याध्यापयेत् तथा तस्य कौशलमापादयति इदं शिक्षामनोविज्ञानम् । कठिनमपि विषयं सरसं

---

1. He studieth his scholars.

2. The master taught John Latin, Adams' sentence.

सुखतरं चाध्यापयितुं ज्ञानं अनेनैव विज्ञानेनोत्पाद्यते। शिक्षामनोविज्ञानं न केवलं सामान्यमनोविज्ञानधर्मान् उपयुङ्क्ते; किन्तु स्वयमपि कांश्चन सिद्धान्तान् प्रवर्त्य मनोविज्ञानस्य विषयवैपुल्यमापादयति स्म। तत्रापि वर्तनीज्ञानोत्पादने गणितशिक्षणे पद्याध्यापने वाचनशिक्षणे च मनोविज्ञानसिद्धान्तानां प्रभावो महान् वर्तते। "शिक्षा नाम अंशद्वयवती प्रक्रिया[1]" इति सिद्धान्तकुशलाः कथयन्ति। यथा बालः शिक्षायां प्रधानः एवं उपाध्यायोऽपि प्रधान एव। शिक्षामनोविज्ञानेन उपाध्यायो न केवलं बालानां मनोज्ञानं प्राप्नोति किन्तु आत्मनोऽपि मनसो ज्ञानं प्राप्य तत्र स्थितान् दोषान् परिहृत्य स्वमनसः सामञ्जस्यं प्राप्तुं अनेनैव विज्ञानेन शक्तो जायते। शिक्षामनोविज्ञानवानेवाचार्यः अध्यापनप्रणालीः सम्यगवगत्याध्यापयितुं शक्तः स्यात्। कियत् बालो जानाति, कियच्च बालेनाध्येतुं शक्यमिति, अवश्यापेक्षितमेवाध्यापयेत्; न ततोऽधिकम्। मनोविज्ञानविदेव आचार्यः शिष्येष्वनुकम्पावान् स्यात्। तदीयव्यवहाराणां मूलं कारणमन्विष्यावगच्छेत् बालस्वभावम्। दोषाणां शोधनमपि कुर्यात्। तीव्रं दण्डनं नैव विदध्यात्। विभिन्नस्वभावैर्विद्यार्थिभिः वर्तितुं शक्नुयात्। कक्ष्यायामनुशासनमपि रक्षितुं प्रभवेत्। अध्याप्यविषयाणां क्रमिकत्वं संपाद्य रुचिपूर्णमध्यापनं कुर्वीत। अयमेवाचार्यः संकटे स्थितानां प्रगतिरहितानां मन्दमतीनां च बालानां उचितया प्रणाल्या अध्यापनं कुर्यात्। विद्यार्थिनां विद्यासिद्धिं समुचितां परीक्षापद्धतिमाश्रित्यावगन्तुं शक्नुयात्। बालानां दुरभ्यासानपाकृत्य सदभ्यासानापादयितुमयमेव समर्थो भवति। बालानां व्यवहारान् सर्वानवगत्य तेषां वैयक्तिकधर्मविकसने चोपकुर्यात्। संग्रहेणैवं वक्तुं शक्यं यद् बालमनःकमलमुकुलविकासे शिक्षामनोविज्ञानवानेवाचार्यः सहस्रभानुर्भवतीति।

मनोविज्ञानज्ञानमुपाध्यायस्य कथं जायते? यथा भैषज्यवृत्तिं स्वीकर्तुमिच्छतां भैषज्यसिद्धान्तज्ञानमुत्पाद्यते तस्मिन्नेव समये प्रायौगिकज्ञानमपि दीयते

---

1 Education is a bipolar process.

एवं आचार्यकं स्वीकर्तुमभिलषतां तद्वृत्त्यर्थं शिक्षामनोविज्ञानदानाय शिक्षाप्रक्रियाज्ञानोत्पादनाय च उपाध्यायप्रशिक्षणकलाशाला: (Teachers Training Colleges) वर्तन्ते। तत्र स्वयमधीत्य बालानां मनोविज्ञानं, अध्यापनप्रणालीज्ञानं च प्राप्य प्रायौगिकमध्यापनमपि कृत्वा वृत्त्यपेक्षितं ज्ञानं प्राप्नुयुराचार्या:। पश्चाच्च एतद्विषयप्रतिपादकग्रन्थपठनेन शिक्षासिद्धान्तेषु शिक्षाप्रणालीषु च क्रियमाणानामनुसन्धानानां फलं तदा तदाविष्कृतं च जानीयु:। स्वयमपि कक्ष्यायामध्यापनानुभवेन प्रशिक्षणेन लब्धं ज्ञानं विपुलं कर्तुं शक्ता भवेयु:। आत्मनो बाल्ये अध्ययनसमये अनुभूतानि कष्टानि सुखोपायांश्च विचिन्त्य आत्मानं विद्यार्थिस्थाने निवेश्य आत्मौपम्येन विद्यार्थिनां कष्टमपि विभाव्य अध्यापनादिषु उचितं परिवर्तनमपि कृत्वा अध्यापनं छात्रचित्ताकर्षकं विदध्यु:। विद्यार्थिनां व्यवहारान् सूक्ष्मेक्षिकयावलोक्यापि बालमनोज्ञानं प्राप्तुं शक्यम्। ज्ञानं सम्यगवेक्षणमिति यदुक्तं योगवासिष्ठे तत् सर्वथा मनोज्ञानप्राप्तौ अन्वर्थं वर्तते॥

# द्वितीयोऽध्यायः

## जीवोत्पत्तिः

मनोविज्ञानसिद्धान्तानां शिक्षायामुपयोगेनेदमवगतं यद् उपाध्यायस्य बालज्ञानमवश्यापेक्षितम् इति। बालज्ञानमित्यनेन, इदमभिप्रेयते यत् तदीयप्रकृति-शरीरसंस्थानजनकधर्म - तच्छक्ति, तच्छक्तिसीम - तद्व्यक्तित्वप्रभृतीनामेव ज्ञानं बालज्ञानमिति। न तु केवलं पुरतः स्थितस्य बालस्य दर्शनेन जातं प्रत्यक्षम् इति च। अध्यापनकाले इदमप्यवगतं स्यात् यत् केचन बालाः बुद्धिमन्तः, केचन मध्यमाः, केचन मन्दबुद्धय इति। पाठशालाख्यपरिवेषे समे सत्यपि एवं भेदो दृश्यते विद्यार्थिनां बुद्धिविषये। इदमप्युपाध्यायस्य ज्ञातं स्यात् यत् बुद्धिमतां विदुषां मन्दमतयः पुत्रा जायन्ते। मन्दमतीनां पितॄणां निशितबुद्धयः कुमारा उत्पद्यन्ते। साधुचरित्राणां पुत्राः दुष्टा वर्तन्ते; दुष्टानां च पुत्राः सदाचारा भवन्ति इति। एवमपत्योत्पत्तौ पूर्वजन्मकृतं कर्म कारणं इतीदं सिद्धमुत्तरं दीयते कैश्चित्। परमिदं विज्ञानिभिः नैवाङ्गीक्रियेत। कारणं तु अन्विष्यते विज्ञानिभिः। बालस्तावत् स्वयंभूर्न भवति। कयोश्चन पित्रोः पुत्रत्वेन जातः। तत्र बाह्यं वातावरणमपि उपस्कारकं वर्तत इति इदं कारणद्वयं परिशील्य तदनुगुणं बालस्य मनसो ज्ञानं संपादनीयमिति तेषां आशयः। तत्र प्रथमं जीवः कथं जायत इति विचार्यते।

दम्पत्योः समागमे, स्त्रियाः अण्डाशयात् (Ovary) अपत्योत्पत्त्यनुकूलः कश्चन पदार्थः (अस्य स्त्र्यंशस्य अण्डाणुः- Ovum -इति नाम) निर्गत्य गर्भाशयं प्रविश्य पुरुषांशेन शुक्राणुना (Sperm) संगच्छते। एवं संयुक्तयोराकारः सर्षपाकारादपि न्यूनो वर्तते। अस्य एकैकस्यांशस्य कोशिका (cell) इति व्यवहारोपयोगि नाम। यदेदं कोशिकाद्वयं परस्परं संयुक्तं सत् फलति तदा अयमंशः (Zygote), कोशिकाधर्मानुसारं स्वयमात्मानं विभजते। प्रथमं द्वे, ततः चतस्रः, ततः

अष्टौ इति विभागं प्राप्य वर्धते कोशिका। एवं विभजनेन विभक्तायाः कोशिकायाः आकारः नैव न्यूना स्यात्। एवं विभजमाना कोशिका जनिष्यमाणस्य शिशोः




4. कोशिका

1. कोशिकात्वचिका - Cell membrane. 2. कोशिकासारः-Cytoplasm.
3. कोशिकाकेन्द्रम् - Nucleus. 4. क्रोमोसोमानि - Chromosomes.

शरीरापादकानां अस्थि-पेशी-रक्त-मज्जा-प्रभृतीनां भागानां ये अंशाः (Tissues ऊतकानि) निर्मातारो भवन्ति तत्तदात्मना स्वयं परिणमते। काश्चन कोशिकाः



5. कोशिकाविभागः – Division of Cell

त्वचो भवन्ति। काश्चन पेशीकोशिकाः। काश्चन तन्त्रीकोशिकाः। काश्चन

इन्द्रियापेक्षितकोशिकाः । एवं विभजने प्रायशः नैव वैपरीत्यं किमपि जायते । कोशिकायाः मध्ये कोशिकागर्भो वर्तते । तत्र संस्थानयुक्तानि (Structure) क्रोमोसोम (Chromosome-गुणसूत्रम्)-नामकानि स्थूलदर्शिन्या केवलं द्रष्टुमर्हाणि कानिचन वस्तूनि वर्तन्ते । वर्णरूषितानामेवैतेषां दर्शनं शक्यमिति क्रोमोसोम् इति नाम दत्तम् । (Chromo इति ग्रीक्भाषापदस्य वर्ण इत्यर्थः, ततः निष्पन्नमिदं पदम् ) एतानि च क्रोमोसोमानि (वर्णद्रव्याणि) जैवरसायनकार्यशीलानि (जीवसम्बन्धीनि रासायनिककार्यकारीणि-of bio-chemical activity ) वस्तूनि वहन्ति येषां नाम जीनस् (Genes) इति । अस्य पदस्य निश्चायकद्रव्याणि (determiners) अथवा जनकानि इत्यर्थः । एतानि जनकान्येव वस्तुतः वंशपारंपर्यागतान् पुत्रैः मातृतः पितृतश्च प्राप्तव्यान् धर्मान् वहन्ति । शारीरान् मनस्संबद्धांश्च धर्मान् एकस्याः सन्ततेः (generation) अपरां सन्ततिं प्रति एतान्येव नयन्ति ।



6. मानवस्य क्रोमोसोमानि

चिरं मनुजस्य एकैकस्यामपि कोशिकायां अष्टचत्वारिंशत् क्रोमोसोमानि (चतुर्विंशतियुगलरूपेण (24-pairs) वर्तन्त इति प्रत्ययः आसीत् । परमिदानीमस्मिन् विषये कृतमनुसन्धानं क्रोमोसोमद्वन्द्वानां संख्यां त्रयोविंशतिरिति अभिप्रैति। तत्र स्त्रीकोशिकाद्वन्द्वेषु एकैकस्मिन्नपि समानप्रकाराणि क्रोमोसोमानि वर्तन्ते । अन्तिमद्वन्द्वस्य X द्वन्द्वं इति नाम। पुरुषकोशिकायां तु द्वाविंशतिद्वन्द्वानि समानप्रकाराणि अन्तिमद्वन्द्वे XY इति क्रोमोसोमद्वयं वर्तते । X Y इति याद्दच्छिकं नाम; न तु सकारणकम् । केचित्तु दीर्घाणां X इति,ह्रस्वस्य क्रोमोसोमस्य Y इति नाम इत्यपि कथयन्ति ।

एकैकस्यामपि कोशिकायां 46- क्रोमोसोमानि वर्तन्ते। यदा च स्त्रीकोशिका पुंस्कोशिका च संयुक्ते भवतः तदा तत्र 92-क्रोमोसोमभिः वर्तितव्यम्। परं 46-क्रोमोसोमान्येव भवन्ति। अत्र किं कारणम्? उच्यते। यदा कोशिकाद्वयं संयुनक्ति तदा एकैकापि कोशिका क्रोमोसोमसंख्यां एकैकस्मादपि क्रोमोसोमद्वन्द्वाद् एकैकस्य क्रोमोसोमस्य परित्यागेन (meiosis) न्यूनयति। ततश्च स्त्रीकोशिकायां एवं संयोक्ष्यमाणायां X -क्रोमोसोमानि 23-एव वर्तेरन्। पुरुषस्य कोशिकायां तु X




7. पितृभ्यां दीयमानानि क्रोमोसोमानि

क्रोमोसोमानि 22 भवेयुः; अवशिष्टं एकं क्रोमोसोमं तु X वा स्यात्; Y वा

स्यात्; कानि क्रोमोसोमानि परित्यज्यन्ते? कानि च संयुक्तानि भवन्तीत्यत्र कारणं किमपि वक्तुं नैव शक्यम्। तत्सर्वं याद्दच्छिकमेव। क्रोमोसोमानां संयोजनं तु नियमेन एवमेवेति नैव वक्तुं शक्यम्। अत एव एकयोः मातापित्रोः जाताः पुत्राः विभिन्नाकारा भवेयुः। एकः पुत्रः मातृवंशीयाननुकुर्यात् अपरश्च पितृवंशीयान्।

[1]पुरुषस्य कोशिकायां अन्तिमं द्वन्द्वं X Y इति स्यादित्युक्तम्। यदि स्त्रीकोशिकायां सर्वाण्यपि क्रोमोसोमानि पुंस्कोशिकास्थितैः संयुञ्जन्ति अन्तिम-संयोजनं च पुरुषीय X-क्रोमोसोमेन भवति तर्हि जायमानमपत्यं स्त्री भवति; यदि अन्तिमसंयोजनं पुरुषीय Y-क्रोमोसोमेन भवति तर्हि पुमपत्यं जायते। अत एवानयोः अन्तिमयोः X-Y क्रोमोसोमयोः लिङ्गनिश्चायकक्रोमोसोमे इति नाम। माता न कदापि लिङ्गनिश्चायकक्रोमोसोमं धत्ते। तत्तु पितर्येव वर्तते।

एकस्मिन् मासे स्त्रियाः एक एवाण्डाणुः गर्भग्रहणयोग्यः सन् अण्डाशयात् गर्भाशयं प्रविशति। शुक्राणुना संयुज्य एकमपत्यमेव जनयति। कदाचित् अण्डद्वयं अथवा ततोऽप्यधिकसंख्याकं वा अण्डं गर्भग्रहणार्हं सत् गर्भाशयं प्रविशति। एतानि अण्डानि च यदि शुक्राणुभिः पृथक् पृथक् संयुक्तानि भवन्ति समकालमेव तर्हि अण्डसंख्यानुरोधेन अपत्यद्वयं (अपत्यत्रयं वा) जायेत। एवं जाते अपत्ये (Fraternal twins) समानपितृकयमलौ इत्युच्येते। वस्तुतः उभे अपि समाने काले उत्पादिते विभिन्ने द्वे अपत्ये एव। अत्र उभयोरप्यपत्ययोः क्रोमोसोमसंयोजनं कदाचित् समानं न स्यात्। ततश्चैकमपत्यं स्त्री अपरं च पुरुषः स्यात्; शीलादिक-मप्यनयोरन्यथा भवितुमर्हति। अनयोः आकारादिकं यदि समानं स्यात् तर्हि तत् विभिन्नकाले जातयोः भ्रात्रोः (siblings) सहोदरयोः आकारादिकमिव स्यात्।

यमलौ अन्यथापि जायेयाताम्। यदा संयुक्ता कोशिका फलवती भूत्वा आत्मानं विभजते तदा विभक्ते द्वे कोशिके (Daughter cells) स्वयं पूर्णे (complete in themselves) भूत्वा पुनरपि विभजनं प्राप्य जीवैकस्थाने जीवद्वय-

---

1: क्रोमोसोमान्यधिकृत्य पुनरपि अनुबन्धे वक्ष्यते किञ्चित्। तदपि द्रष्टव्यम् वैशद्याय।

मुत्पादयेताम्। कस्मादेवं कोशिकायाः समग्रगुणयुक्तो विभागो जायते इत्यत्र विज्ञानं मूकीभवति। यतः जीवद्वयमपि फलीकृतायाः (fertilised) एकस्या एव कोशिकायाः जातम् ततः अनयोः निष्पादकानि क्रोमोसोमानि समानगुणकान्येव भवेयुः। कोशिकाया विभजनकालेऽपि इदं समानत्वं अनुवृत्तं वर्तत इति यमलयोः समानवंशधर्म एव स्यात्। इमौ यमलौ च बहुष्वंशेषु समानौ भवतः; समानलिङ्गौ (Identical) च। वृद्धिं प्राप्नुवतोरनयोर्यदि गुणादिषु भेदो दृश्येत सः तर्हि परिवेषकृत एव भवेत्, न तु जनिकृतः।

अन्योऽप्यंशः अत्रावधानमर्हति। यथायं शिशुः मातृतः पितृतश्च क्रोमोसोमानि लब्धवान् एवं तावपि स्वपितृभ्यां क्रोमोसोमानि लब्धवन्तौ, तयोः पितरावपि तत्पितृत इति, इयमादानप्रक्रिया सुदूरं पश्चात् गच्छति। तथा च शिशुः यानि क्रोमोसोमानि प्राप्नोति तानि सर्वाण्यपि स्वमातापितृतः एव प्राप्नोति इति न। किन्तु कानिचन साक्षात् पितृतः, कानिचन पूर्वतनानां क्रोमोसोमानि पितृद्वारा, इति शिशुः सर्वाकारेण पितुरंशो न भवति; अंशतः पितरं मातरं, अंशतः पितामहं पितामहीं, अंशतः मातामहं मातामहीं चानुकुर्यात्। एकैकोऽपि स्वकौशलादीनामर्धं पितृतः, पदांशं पितामहात्, अष्टमांशं ततः पूर्वस्मात्, अवशिष्टं ततः पूर्वतनाच्च दायत्वेन प्राप्नोतीत्यपि केचनाभिप्रयन्ति।

एवं क्रोमोसोमानां जनकद्रव्याणां च पितृतः शिशौ संक्रमणेन के धर्माः प्राप्ता भवन्तीति विचारे शरीराकारादयः सामान्यतः प्राप्ता भवन्ति। उच्छ्रायवतोः दम्पत्योः उच्छ्रायवानेव पुत्रो जायते। वामनयोस्तु वामनः। एवमन्येऽपि धर्मा भवन्ति। बुद्धिधर्मेषु विशिष्टाः शक्तयः काश्चन पुत्रेषु दृश्यन्ते एव। पित्रा गीत-गणित-संस्कृतादिषु अर्जिता शक्तिः पुत्रेषु नैव संक्रामति। कदाचित् परिवेषबलात् संगीतविदुषां कुटुम्बे जाताः शिशवोऽपि संगीतासक्ताः बाल्ये एव संगीतकुशला भवेयुः। अन्यच्च; संक्रमणकाले जनकद्रव्याणि कदाचित् कामपि विकृतिं (mutation) भजन्ते। ततो जायमानमपत्यं पितरं मातरं वा नानुकुर्या-दाकारे अन्यत्र च। कदाचित् एतानि जनकद्रव्याणि अनन्तरायां सन्ततौ

अकार्यकारीणि (recessive) भूत्वा तदनन्तरायां सन्ततौ संक्रान्तिं प्राप्य कार्यकारीणि भवन्ति। अत एव विदुषां पुत्राः मन्दमतयो वर्तन्ते। तत्पुत्रास्तु विद्वांसो भवन्ति। विद्वत्पुत्रे जनकद्रव्याणि अकार्यकारीणि भूत्वा, तत्पुत्रे स्वप्रभावं प्रदर्शयन्तीति इदमेवात्र कारणम्। अत्र जनकद्रव्यस्वभावो मनुजैरन्यथाकर्तुं नैव शक्यः।

वंशधर्मप्राप्तिविषये आस्ट्रियादेशीयः **मेण्डल्** (Mendel) - नामकः (1822-1884) ईसवीयमतसन्न्यासी कश्चित्, अष्टसु वर्षेषु कलायक्षुपेषु (Pea-plants) वंशधर्मप्राप्तिमधिकृत्य स्वदृष्टान् नियमान् 1866- तमे वर्षे प्राचीकशत्। अन्येऽपि केचन विचारं कृत्वा कांश्चन नियमान् (Laws of heredity) निर्दिष्टवन्तः।


**मेण्डल्**

१. शिशवः मातापितरौ अनुकृत्य जायन्ते। अत्र निदानं वंशधर्मः।

२. वंशधर्मः कार्त्स्न्येन सदृशानेवोत्पादयतीत्यपि न। साधर्म्ये सति, वैधर्म्यमपि (variation) किञ्चित् भवेत्।

३. वंशपरम्पराप्राप्तेषु धर्मेषु ईषत् ह्रासोऽपि भवेत्। पितरि यावन्तो धर्माः दृश्यन्ते पुत्रेषु तावन्तो धर्माः न भवन्ति। पितृवत् बुद्धिमानपि पुत्रः पितृबुद्धिपरिमितामेव बुद्धिं प्राप्नोतीत्यपि नास्ति नियमः। एवं जडपितॄणामपि

बुद्धिमन्तः पुत्रा जायन्ते। तत्र निदानं पितामह-मातामहादीनां धर्म एव स्यात्।

४. बालेषु विद्यमाना धर्माः पितृत एव प्राप्यन्त इत्यपि न विद्यते नियमः। अतिव्यवहितात् कस्माच्चन मूलपुरुषादपि लब्धा भवेयुः।

यथा वंशधर्मः नरस्याभिवृद्धौ कारणं भवति एवं परिवेषोऽपि तदभिवृद्धौ कारणं भवति। जीवात् भिन्नः बहिरवस्थितः, तद्गुणादीनामुपस्कारक एव परिवेषशब्दवाच्यो भवति। अयं परिवेषः अभिवृद्धौ हेतुः वर्तते। क्वचित् अभिवृद्धेः विघ्नमप्याचरेत्। परिवेषश्च बहुधा विभक्तुं शक्यः। तत्र जननात् पूर्वं स्थितः परिवेषो मातुः गर्भाशये वर्तते। गर्भस्थितिकाले मात्रा क्रियमाणं भोजनं, गृहीतं भेषजं, तच्छरीरस्थितिः, मनसः संवेगाः इत्येते सर्वेऽपि गर्भकाले शिशुमुपस्कुर्वन्ति। भ्रूणावस्थायामपि, कोशिकानां विभजनकालेऽपि परस्परसन्निकर्षजातसङ्घर्षेण रसायनविपरिणामेन कश्चन परिवेषो वर्तते। पश्चात्, मातुः शरीरे स्थितानां ग्रन्थीनां रसोऽपि शिश्वभिवृद्धिमुपस्करोति। जननात् परं स्थितः परिवेषस्तु (Post-natal environment) कुटुम्बपरिवेषः, शीतोष्णस्थितिपरिवेषः मतपरिवेषः, भाषापरिवेषः, संस्कृतिपरिवेषः इति बहुधा वर्तते। एष्वेकैकोऽपि स्वप्रभावं बालाभिवृद्धौ प्रदर्शयति।

## वंशधर्मपरिवेषयोः प्राधान्यम्

वंशधर्मपरिवेषयोः कस्य प्राधान्यमिति केचन विचारयितुमुद्युञ्जते। उभयोरपि शिक्षायां प्रभावो वर्तत इत्यभ्युपगतमेव। ये तावत् वंशधर्मस्य प्राधान्यमङ्गीकुर्वन्ति ते त्वेवमभिप्रयन्ति। शोभनवंशजाता एव बालकाः शोभनचरित्राचरणाः वर्तन्ते। अनुचिते परिवेषे वर्धिता अपि स्वप्रकृतिं अनुसृत्यैव वर्धेरन् इति। अत्र केचन विज्ञानिनः प्रयोगान् कृत्वा एवं कांश्चन विषयान् दृष्टवन्तः। पश्वादिषु संकीर्णजात्युत्पादने क्रियमाणा श्रद्धा वंशधर्मप्रभावं प्रदर्शयति। **फ्रान्सिस् गाल्टन्** (Francis Galton 1822–1911)-नामकः विद्वान् स्वजीवकाले स्थितानां 977-

मेधाविनां वंशचरित्रं परिशीलितवान्। तेषां पूर्वतनाः बहवः मेधावन्तः एव आसन्। मेधाविनां सन्निकृष्टाः 332-बान्धवाः, विप्रकृष्टाः 203-बान्धवाश्च बुद्धिमन्तः कासु- चिद्विद्याशाखासु लब्ध- पाण्डित्याश्चासन्।ततश्च एवमयं निश्चिकाय यत् बुद्धिशक्तिः परंपरा- गतेति। यथा शारीरं संस्थानं पित्र्यमनुसरति तथा गुणा अपि पितृत एव प्राप्यन्ते इत्यव- सेयमिति च। गाल्ट- नस्य शिष्यः **कार्ल् पियर्सन्** (Karl Pearson) - नामकः विज्ञानी गाल्टनीय- कुटुम्बमेव परिशीलयति स्म। गाल्टनस्य सन्नि- कृष्टौ बन्धू (Cousins)




गाल्टन्

**डार्विन्** (Darwin) **वेड्ज़्वुड्** (Wedgewood)- नामानौ। उभावपि गाल्टन्वत् प्रकृष्टबुद्धी विज्ञानिनौ च आस्ताम्। एतेषां त्रयाणां पूर्वतनानधि- कृत्य कृते विचारे इदं ज्ञानमासीत् यत्ते सर्वेऽपि बुद्धिविषये विशिष्टा एवासन्निति। यथा बुद्धिसच्चारित्रादिमत्त्वं परंपराधर्मः एवं दुराचारमन्दबुद्ध्यादिकमपि परंपराधर्म एव। अत्रोदाहरणम्। **जूकूस्** (Jukes)-नामकस्य कुटुम्बे मातापितरौ आग- स्कारिणौ (Criminals)। अत्र पञ्चसु सन्ततिषु जातान्, 1200-जनानधिकृत्य कृतं विचारं **कीटिञ्ज्** (Keatinge)- नामकः विज्ञानी एवं निर्दिशति। एते अमेरि- कादेशे विभिन्नप्रान्तेषु निवसन्ति स्म।

300-जनाः अल्पायुषः बाल्ये मृताः ।

310-जनाः दरिद्रगृहेषूषुः (एषां समुदितः आयुष्कालः 2300-वर्षाणि)

440-जनाः व्याधिना पीडिताः ।

123-जनाः कृतापराधाः दण्डिताः ।

7-जनाः हत्याकारिणः ।

20-जनाः एव कामपि वृत्तिं परिचित्य जीवनमवर्तयन् । एवं **कल्लिकाक्**-नामकस्य कुटुम्बचरित्रविचारोऽपि कृतो वर्तते । अयं सत्कुलोत्पन्नां भार्यामुवाह । अनयोर्जातायां परम्परायामुत्पन्नेषु 496-जनेषु पञ्च विहायान्ये सर्वेऽपि बुद्धिमन्तः भव्यं जीवनं चक्रुः । अयं दुश्चरितवतीं दुष्कुलोत्पन्नामन्यामपि स्त्रियं पर्यणयत् । अत्र सन्ततौ जातेषु 480-जनेषु 434-जनाः दुश्शीला अपराधिन एवासन् । ततश्च ज्ञायत एव वंशधर्मप्रभावः । इदमुभयमप्युदाहरणं परिवेषप्रभाववादिनां मतं समूलकाषं कषति । "कार्यं निदानाद्धि गुणानधीते" । कारणं स्वगुणं कार्ये संक्रामयत्येव । कारणभूतात् मातापितृतः कांश्चन गुणान् प्राप्यैवापत्यं जायते । रुचिं प्रद्वेषं बुद्धिशक्तिं चरित्रं च शरीरसंस्थानेन सह प्राप्नोति बालः । कष्टतरे परिवेषे स्थिता अपि केचन परम्पराधर्मबलेनैवोन्नतां स्थितिं प्राप्तवन्तो दृश्यन्ते । सन्दर्भानुकूल्यं केषांचित्तु स्यात् । नैतावता सिद्ध्येत् परिवेषप्राधान्यम् । समेऽपि शिक्षणे कक्ष्यायां स्थितेषु बालकेषु केचनैव प्रगतिमन्तो भवन्ति । केचन मन्दाः । अत्र निदानं वंशधर्म एव स्यात् । 'वितरति गुरुः' 'पात्रविशेष-न्यस्तं' इत्यादि चामुमेव सिद्धान्तमुपोद्बलयति । तथा च सत्कुलप्रसूता एव बालकाः शिक्षाधिगमयोग्या भवन्ति इति बालानां वंशधर्मप्राधान्यं मनसि धर्तव्य-मुपाध्यायैरिति केचन ।

परिवेषप्रभाववादिनामयमाशयः । यथा वंशधर्मः तथा परिवेषोऽपि मानवस्य स्वभावादिकमुपस्करोति । बालस्य बुद्धिः मृदिवाभिमतरूपसम्पादनार्हा वर्तते । वंशधर्मस्य प्राधान्यं यद्यङ्गीक्रियते, तर्हि महतां केषांचित् पितरः पुत्राश्च

कस्मान्न महान्तो बभूवुः ? परिवेषवशादेव महत्त्वं प्राप्तं कैश्चित् । दरिद्रकुलात् स्वीकृताः पुत्राः समीचीनपरिवेषे वर्धिताः उन्नतां स्थितिं प्राप्तवन्तो दृश्यन्ते । मानवसंस्कृतिचरित्रावलोकनेऽपि इदं भायात् यत् मानवाः पूर्वकाले मृगवत् जीवन्तोऽपि परिवेषानुगुणं अनुभवानुगुणं च गृहनिर्माणवस्त्रनिर्माणादिकलाः विज्ञानादिकं च संकलय्य नागरिकताश्रेण्यामुत्तमं सोपानमधितिष्ठन्ति स्म इति । **लैसन्को** - (Lysenko) - नामकः रूसोविज्ञानी, ‘ परिवेषः जनकद्रव्याण्यपि (Genes) अन्यथा कर्तुं शक्नोति ’ इति निरूपितवान् । गतमहायुद्धसमये अणुगोलस्फोटनेन जपान्देशे मानवरूपे विकृतिरुत्पादिता दृश्यते । **दे काण्डोल्** (De Candolle 1778-1841) - नामकः विज्ञानी गाल्टन्-सिद्धान्तस्य प्रतिकूलं परिवेषप्रभावसिद्धान्तं प्रथयामास । एकस्याः फलवत्याः कोशिकायाः जातौ यमलौ (Identical twins) विभिन्ने परिवेषे वर्धितौ विभिन्नस्वभावशक्तिमन्तौ दृष्टौ । (महाभारतोक्तं शुकोपाख्यानं स्मर्तुमर्हमत्र ) । अमेरिकादेशे ऐयोवा (Iowa) - विश्वविद्यालये वर्षत्रयवयसः शिशवो बहवः वर्गद्वयात्मना विभक्ताः । तत्र प्रथमो वर्गः शोभनपरिवेषयुक्तायां शिशुपाठशालायां वर्धितः । अन्यो वर्गः साधारणपाठशालासु रक्षितः । केभ्यश्चन वर्षेभ्यः परं यदा बुद्धिपरीक्षा उभयोरपि वर्गयोः कृता तदा शोभनपाठशालासु रक्षितानां बालानां बुद्ध्युपलब्धिः (IQ) अधिका आसीत् । बालानां अपराधित्वे परिवेषः एव कारणमिति **सिरिल्बर्ट्** (Cyril Burt)- नामकः आधुनिकः आङ्ग्लविज्ञानी अभिप्रैति; ‘ दुर्मैत्र्या बाला दुष्टा जायन्ते’ इति च । परिवेषप्रभावः करतलामलकवत् स्पष्टं प्रतिभातीत्यन्ये । तस्मात् शिक्षणे उभयोरपि कियदुपकारकत्वं वर्तत इति निष्कृष्य ज्ञातव्यमेवोपाध्यायैः । यदि उपाध्याया न जानन्ति अथवा अन्यथा जानन्ति तर्हि तैः क्रियमाणमध्यापनं दुष्टं स्यात् ।

ये अध्यापकाः परिवेषप्राधान्यमङ्गीकुर्वन्ति ते सर्वानपि बालकान् नागरिकान् कृतधियश्च कर्तुं प्रयतमानाः, प्रयत्ने विफले जाते भग्नाशा भवन्ति । यथा बीजं तथाङ्कुरः इतीमं न्यायं नैते स्मरन्ति । वंशधर्मेण अप्राप्ता शक्तिः

प्रयत्नशतैरपि नोत्पादयितुं शक्या । 'न प्रयत्नशतेनापि शुकवत् पाठ्यते बकः'। ये वंशधर्मप्राधान्यमङ्गीकुर्वन्ति ते प्रकृष्टवंशधर्महीनेषु बालेषु उदासते ।

अत्रेदमवधेयं वर्तते। उभावपि इमौ सिद्धान्तौ परस्परं विरुद्धाविति आपातप्रतीतौ भायाताम् । वस्तुतस्तु उभयोरप्यंशयोः शिक्षणे कार्यकारित्वं वर्तते एव । परिवेषहीनः बालः न कोऽपि भवति । एवं कमपि वंशधर्ममप्राप्य स्थितो बालोऽपि नास्ति जगति । तस्मादनयोरविनाभावः न कदापि परित्यक्तुं शक्यः । ततश्चोपाध्यायेनैकतरस्यादानं न सुशकम् । अनयोः सुश्लिष्टः सम्बन्धः अनेन उदाहरणेन विशदीक्रियेत । न केवलं माता नापि पिता पुत्रमुत्पादयितुं शक्नोति । बीजमपि स्वयमङ्कुरं नोत्पादयितुमलम् । अङ्कुरोत्पादने जलं शोभनां मृदं चापेक्षते बीजम् । ('अपेक्षते प्रत्ययमुत्तमं त्वां बीजांकुरः प्रागुदयादिवाम्भः' इति इन्द्रः कामं प्रति कथयति) । उचिता शीतोष्णस्थितिः बीजप्ररोहजननी (manure) च बीजेनापेक्ष्यते एव । एवमेव केवलवंशधर्मः विद्यां दातुं नैवालं भवति । वंशधर्मेण सामान्यगुणाः प्राप्यन्ते न तु विशिष्टं गणितपाण्डित्यं पित्रा अर्जितम् । तत्तु उचितपरिवेषे कृतेनाध्ययनेनैव प्राप्येतेति । विद्यावतां उपाध्यायानां परिवेषे वर्तमानो बालः विद्यायामभिरुचिं प्रदर्शयेत् । अतः परिवेषस्यापि वर्तते एव भागो विद्यादाने । अतः बुद्धिमन्तः उपाध्यायाः वंशधर्मकृतं परिवेषकृतं वा अल्पं प्रातिकूल्यं महत् अगणयन्तः उचितं परिवेषं कल्पयन्तः वंशधर्मानपि जानन्तः बालशिक्षणे श्रद्धावन्तो भवेयुः । अत्र प्रसङ्गादन्यत्किञ्चिदुच्यते ।

परिवेषबलात् यानि फलानि प्राप्यन्ते तानि वंशधर्मवत् सन्ततिषु संक्रामन्ति किमिति प्रश्नो भवेत् । परिवेषबलाद् केनापि संगीते प्राप्तं पाण्डित्यं तत्पुत्रे नैव संक्रामति । अत एव एकैकस्या अपि सन्ततेः आदित आरभ्य विद्याभ्यासः कर्तव्यो भवति । उपाध्यायानां वृत्तिश्चानुच्छिन्ना वर्तते । एकस्यां सन्ततौ उपाध्यायैरशोभनाध्यापनेनोत्पादितो दोषोऽपि मृतया तया सन्तत्या सह स्वयमपि नश्यति । उपाध्यायकृतो दोषः अनन्तरां सन्ततिं नानुगच्छतीति तैः सन्तोष्टव्यमेव ।

यद्यपि विद्यया प्राप्तो धर्मः पुत्रं नैव गच्छति; अथापि एकैकस्मिन्नपि समये विद्यया सामाजिकपरिवेषस्तु अन्यथा भवत्येव। इदानीं (1971) यः परिवेषो लोके अथवा भारते वर्तते सः त्रिंशतो वर्षेभ्यः पूर्वं नासीत् । त्रिंशतः वर्षेभ्यः परं एतादृश एव परिवेषः न भविष्यति । तथा च प्राप्तविद्यैः जनैः सामाजिकपरिवेषः परिवर्तनं प्राप्नोत्येव । अस्माकं संस्कृतिषु, आचारेषु, व्यवहारेषु च दृश्यमानः सर्वोऽपि भेदः अस्माभिरिदानीं कल्पितः। साहित्यग्रन्थाः, कलाः, औद्योगिकज्ञानं, धार्मिकमतम् , जीवनलक्ष्यं, आचारः, व्यवहारः, सत्यधर्मादीनां स्वरूपम् , आत्मगुणा इति एते सर्वेऽपि सामाजिकपारंपर्ये (Social heredity) अन्तर्भवन्ति। एते एव वंशपारंपर्यप्राप्तां बालेषु स्थितां शक्तिं विकासयितुं शक्नुवन्ति । वंशपारम्पर्ये यदि या कापि न्यूनता वर्तेत सा तर्हि कदाचित् सामाजिकधर्मेण प्रतिपूरयितुं (Compensate) शक्येत। सामाजिकपारम्पर्यं च प्रतिसन्तति (Generation) वर्धमानमेव वर्तते। शिक्षा च सामाजिकपारम्पर्यं संवर्ध्य अनन्तरसन्तत्यै ददाति । इदमपि शिक्षायाः लक्ष्येष्वेकम्। तस्मात् सर्वेषामपि बालानां वंशपारम्पर्योत्कर्षं समं सम्पादयितुमशक्ता अपि उपाध्यायाः विशिष्टस्य सामाजिकपारम्पर्यस्य सन्निधापनेन बालानां सर्वेषामपि प्रगतिं सम्पादयितुं शक्ता एव भवेयुः ॥

## बालानां शारीर - बौद्ध - सांवेगिक - सामाजिक - वृद्धयवस्थाः एतासामवस्थानां विद्याविषये प्रभावः

चैतन्यवन्तः प्राणन्तश्च सर्वे जीवाः अनिशं विपरिणममाना वर्तन्ते। विपरिणामश्च जीवतामसाधारणो धर्मः। यत्र न विपरिणामः तत्राजीवत्वमवसेयं भवति। मनुजोऽपि प्रतिक्षणं विपरिणममानो वर्तते। अत्र बौद्धानां क्षणिकवादः स्मर्तव्यः। जातस्य मनुजस्य जननक्षणात् प्रभृति मरणपर्यन्तं बहवो विपरिणामाः शरीरे मनसि च जायमानाः वर्तन्ते। इमान् विपरिणामानेव अवस्थानाम्ना बाल्य-कौमार-यौवन-वार्धकभेदेन चतुर्धा व्यभजन् शास्त्रकाराः। आधुनिकवैज्ञानिकास्तु सप्तधा विभजन्ते मनुजावस्थाः।

| | | |
|---|---|---|
| 1. प्रथमवर्षादारभ्य पञ्चमवर्षपर्यन्तम् | शैशवावस्था (Early childhood) | 1- 5 वर्षाणि |
| 2. पञ्चमादारभ्य द्वादशावधि | कौमारावस्था (Later childhood) | 5-12 वर्षाणि |
| 3. द्वादशादारभ्य विंशतिं यावत् | किशोरावस्था (Adolescense) | 12-20 वर्षाणि |
| 4. विंशतेः प्रभृति पञ्चत्रिंशदवधिका | प्रौढावस्था (Maturity) | 20-35 वर्षाणि |
| 5. पञ्चत्रिंशतः आरभ्य आपञ्चपञ्चाशतम् | मध्यमावस्था (Middle age) | 35-55 वर्षाणि |
| 6. ततः परं सप्ततिं यावत् | ह्रासावस्था (Declining) | 55-70 वर्षाणि |
| 7. तदनन्तरं वार्धकम् | (Senescence) | 70+ वर्षाणि |

### दशासु दृश्यमानाः केचन साधारणधर्माः।

अत्र ये अंशा निर्दिश्यन्ते ते सामान्यतः सर्वेषु बालेषु दृश्येरन्। क्वचित् व्यक्तिविषये अन्यथापि भवेत्। दशास्वपि का दशा समाप्तिं गता इति,

का च दशा कस्मिन् दिने उपक्रमते इति च वक्तुं नैव शक्यम्। दशयोः साङ्कर्यं स्यादेव। साङ्कर्यशब्देनेदमुच्यते यत् पूर्वदशागुणाः अपि अनुवर्तेरन्। अनन्तरदशा-गुणाश्चाविर्भूता भवेयुः इति। एता दशाः **अस्मास्वपि** अविदितमेव प्रवर्तन्ते। यदीदमेवं, तर्हि कथं स्यात् परकीयावस्थान्तरोत्पत्तिक्षणज्ञानमस्माकम्? यथा शीतोष्ण-स्थितीरनुसृत्य देशे प्रान्तविभागे कृतेऽपि प्रान्तसन्धौ सूक्ष्ममन्तरं प्रान्तयोर्नोपलभ्यते, यथा वा उभयोः प्रान्तीयभाषयोः सन्धिः न ज्ञायते तथैवावस्थासन्धिरपि ज्ञातुं न पार्यते। भेदोऽस्तीति स्पष्टं भात्येव। दशाश्च परस्परं संबद्धा वर्तन्ते। शीघ्रं मन्थरं वा अवस्थाप्राप्तौ वंशधर्मस्य परिवेषस्य च भागो वर्तते। कस्यापि कोऽपि विपरिणामः शारीरो मानसो वा द्रुततरः स्यात्; अन्यस्य तु मन्दः। एते च विपरिणामाः विद्यया ध्रुवमुपस्कृता भवन्ति। विद्या च बालस्य मानसो विकासः यथा समुचितो जायते तथा तत्र उपकारं करोति। विद्यां विना मनसो विकासः न सम्यग् जायते। मानसविकासानुगुण एव शारीरो विकासः मुखच्छाया च जायेते। ततश्च विभिन्नावस्थाज्ञानमुपाध्यायस्यापेक्ष्यते। अवस्थाज्ञानवानेवाचार्यः अवस्था-नुगुणमध्यापनं कर्तुं शक्तः स्यात्। पूर्वं निर्दिष्टास्ववस्थासु तिस्र एवावस्थाः उपाध्यायानामवधानमर्हन्ति। यद्यपि संस्कृताध्ययनाय बालकाः दशमे वर्षे एवोप-क्रमन्त इति किशोरावस्थाज्ञानं पर्याप्तमिति मतिरुदियात्। अथापि पूर्वयोरवस्थयो-र्ज्ञानमुत्तरावस्थाज्ञाने उपयुज्यते एवेति आद्यानां तिसृणामवस्थानां ज्ञानमव-श्यापेक्षितमेव।

## शैशवावस्था

जननादारभ्य पञ्चमं यावत् शैशवावस्था भवति। शैशवावस्था सर्वासामव-स्थानां प्रधानभूता। इयमेव भविष्यतां सर्वावस्थोपचयानामपि मूलं कारणं भवति। जातस्य शिशोः भारः षट्-पौण्ड्-परिमितः स्यात्। दैर्घ्यं च 20, 22 इञ्च् (Inch)-मितं भवेत्। शरीरवृद्धिः द्रुततरा। जायमानदशायामपि शिशूनां परस्परं भेदो वर्तते। अयं भेदो वंशधर्मकृतो भवति। क्वचित् गर्भिण्या मातुः शरीरस्य स्वास्थ्यास्वास्थ्ययोः पुष्ट्यपुष्ट्योश्च कारणत्वं विभावनीयम्। शिशोः शिरः

पूर्वार्धकायश्च पादपरिमाणापेक्षया बृहन्तौ । पादप्रसारणाय हस्तचालनाय चापेक्षिता पेशीशक्तिरपूर्णा ; श्रान्तिश्चाधिका । ततश्च विश्रामाय चिरं स्वपिति शिशुः । प्रेरणे कृते प्रतिक्रिया कृत्स्ने शरीरे स्यात् । न त्वेकस्मिन् अवयवे । पादे सूच्या विद्धे कृत्स्नं शरीरं चलेत् । उभे अपि चक्षुषी संगत्य दर्शनं न कुरुतः । विंशतिदिनेभ्यः परमेव उभे अपि चक्षुषी परस्परसाहाय्यं प्राप्यैकं वस्तु द्रष्टुं शक्नुयाताम् । यद्यपि रसनेन्द्रियं रसं जानीयात्; अथापि विशिष्टसंज्ञानं तु कतिपयेभ्यो मासेभ्यः परमेव स्यात् । जातः शिशुः शब्दसंवेदनं न लभेत । केभ्यश्चन दिनेभ्यः परमेव शब्दज्ञानं भवति । क्रमशः, शब्दः यस्या दिशः आयाति तां दिशं द्रष्टुं शक्तो भवति । प्रदर्शितं वस्तु ग्रहीतुं प्रयतेत । जीवनापेक्षिताः सर्वा अपि तन्त्रिकाः जननकाले एव वर्तन्ते । पूर्णाभिवृद्धिस्तु पश्चादेव जायते । प्रथमे अब्दे मस्तिष्कं वर्धते । स्वेच्छानुसारं जलं पातुं मूत्रयितुं मलमुत्स्रष्टुं च अपेक्षितान् कायिकव्यापारान् क्रमशो जानाति । तृतीये अथवा चतुर्थे मासि अधोमुखः शयितुं, षष्ठे उरसा सर्पितुं, नवमे उपवेष्टुं, द्वादशे मन्दं किमप्यवलम्ब्य पादाभ्यां चलितुं च शक्नुयात् । अत्र व्यक्तिविशेषेषु प्रगतिः अन्यथापि स्यादिति अयमंशो नैव विस्मर्तव्यः । शिशोः भारः वर्षान्ते जननकालभारापेक्षया त्रिगुणः स्यात् ।

जातस्य शिशोः प्रथमं क्षुधैव प्रधानम् भवति । बाह्यप्रेरणानुगुणं चेष्टा नैव स्यात् । पश्चात्तु प्रकाशावलोकनम्, मातृमुखावलोकनं, तत्र सन्तोषः, तस्य चाभिव्यक्तिर्मन्दहासेनेति एवं क्रमेण बाह्यज्ञानं क्रमशः इन्द्रियैरुत्पाद्यते । प्रथममविभक्तं स्थूलं च ज्ञानं स्यात् । ततश्चेषद् वैशद्यं भवेत् । दृष्टं वस्तु मनोमुकुरे निधाप्य स्मरणमित्यादिकं तु पश्चादेव जायते ।

संवत्सरे पूर्णे शिशुः उक्तानि 'मामा, पापा, ताता, दादा' इत्यादीनि कानिचन पदानि प्रतिवक्तुं तदर्थमवबोद्धुं च शक्नुयात् । प्रवर्धमानस्य शिशोरवधानशक्तिश्च वितता भवति । इन्द्रियैः कृतान् बाह्यप्रेरकान् ज्ञात्वा तदनुगुणं व्यवहरति । स्मरणशक्तिश्चाधिका । एकदैव बहून् पदार्थान् द्रष्टुं ज्ञातुं च

प्रभवति शिशुः । वर्षत्रयानन्तरं प्रायशः शिशुषु कल्पनाशक्तिः मनोरथकल्पना च अधिका वर्तते[1] । अभिनयः भावनाक्रीडा च शिशूनां कल्पनाशक्तिं वर्धयति । कदाचिदात्मानं मातरं पितरं मार्जारं वा मन्येत । मृगपक्षिकथासूत्साहं दर्शयति । जिज्ञासागुणश्चाधिकः । किम् ? कुतः ? इत्येवं प्रश्नाः क्रियन्ते । पितरः प्रश्नानामुत्तरं सम्यक् कथयन्ति चेत् तर्हि तत् बालानां बुद्धिविकासकारणं भवति । अस्यामवस्थायां रचनाभावाश्च आत्मानं प्रदर्शयन्ति । अत एव सिकतागृहनिर्माणादिकं कुर्वन्ति ; हस्ताभ्यां किमपि कर्तुमुद्युक्ता भवन्ति । अस्यां दशायामुत्पादितः सर्वोऽपि संस्कारः दृढतरमाहितो भवति ।

प्राथमिकपञ्चसु वर्षेषु बहूनि पदानि ज्ञातानि भवन्ति । स्वकीयं वाचिकं व्यवहारं सर्वं मातृभाषायां कर्तुं शक्ता भवन्ति ; पदज्ञानोपचयः प्रायशः कुटुम्बपरिवेषमाश्रित्य वर्तते । बुद्धिमन्तौ विद्वांसौ पितरौ, अधीयानाः सोदराः सोदर्यश्च शिशोः पदसम्पदुपचयं प्रत्युत्तरदान-समालाप-कथाकथनादिभिः कुर्वन्ति । यत्रैतादृशः परिवेषो न भवति तत्र पदज्ञानमत्यल्पमेव स्यात् ।

## संवेगः

जातस्य शिशोः संवेगः प्रथमं कांश्चन सप्ताहान् केवलस्थूलसंवेदनरूपेण स्यात् । चतुर्भ्यः मासेभ्यः परमेव इदं संवेदनं कोप-भय-प्रीत्यात्मनाविर्भवति । स्वेच्छानुरोधेन क्रियमाणेषु पादचालनादिषु प्रतिबन्धे जाते कोपो भवति । सपदि उद्ध्रियमाणे भयं, मृदुस्पर्शेन प्रीतिश्च जायेते । एते च संवेगाः क्रमशः अन्यैरपि प्रेरकैरुद्भवन्ति । प्रीतिं हासेनाविर्भावयति । कोपं रोदनेन, दंशनेन, ताडनेन वा प्रकाशयति । पश्चात्तु निन्दाद्योतकस्वरैरपि कोपः सूच्यते । आज्ञाननुरोधश्च भवति ।

---

1. अस्य लेखकस्य दौहित्री त्रिहायना बालिका काकजम्बुकयोः कथायां काकस्य जातामपूपविनष्टिमसहमाना कथायाः अन्तमेवं कल्पितवती; 'जम्बुकेन यदा अपूपोऽपहृतः तदा शिशुः काकः विषण्णः रुदन् स्वमातृसमीपं गतः; माता काकी च पञ्च पैसाः ददौ । पञ्च पैसाः दत्वा अन्यमपूपं क्रीत्वा काकः खादितवानि'ति ।

अस्यामवस्थायां शिशूनां सर्वमपि कार्यं पितृभ्यामेव कर्तव्यं वर्तते। शिशवः पितृतः प्रीतिमपेक्षन्ते। पितृप्रीतिरेव तेषां सुरक्षितत्वबुद्धिं (feeling of security) जनयति। पितृभिः एतादृशी बुद्धिः अवश्यमुत्पादनीया। यत्रैतादृशः परिवेषो न भवति तत्र बुद्धिविकासोऽपि प्रतिहतो भवति। शिशुः अपथे प्रवर्तेत। अनाथेषु पितृभिर्द्विष्टेषु वा बालेषु अयमंशः सम्यग् दृश्यते। शिशुः प्रीत्या पोषणीयः। गृहे वर्तमानः प्रीतिपूर्णः परिवेष एव शिशुं वर्धयेत्। दम्पत्योः कलहेन, तत्रापि शिशोः पुरत एव परस्परं ताडनभर्त्सनादिना च शिशोः संवेगोऽसमीचीनो भवति। अनाथगृहेष्वपि (Orphanages) प्रीतिपूर्णः परिवेष एव सम्पादनीयः। बाल्ये अलब्धप्रीतयः शिशवः पश्चात् प्रवयसि जनताविद्वेषिणः समाजाहितकारिणश्च जायन्ते।

शैशवदशायां संवेगः द्विमुखो भवतीति फ्रायड्-महोदयः कथयति। बालः मातरि प्रीतिं, पितरि प्रीतिं द्वेषं असूयां च करोति। आत्मापेक्षया पितरि माता अधिकां प्रीतिं प्रदर्शयतीति इदमेव कारणमिति फ्रायड् मन्यते। एवं बालिकायाः स्वमातरि द्विविधः संवेगो वर्तते। पश्चात्तु एवं द्विमुखः संवेगो न भवतीत्यपि अभिप्रैति। एतादृशः संवेगग्रन्थिः व्यक्तित्वाभिवृद्धिं बाधते इति विज्ञानिनः। शिशुः मात्रा अनुजे प्रदर्शितां प्रीतिं दृष्ट्वा तस्मै असूयेत।

## सामाजिकोपस्कारः

जातः शिशुः प्रथमं परिवेषज्ञानशून्योऽपि पश्चात् मातृरूपं परिवेषं जानाति। मात्रा कृतः परिचय एव प्राथमिकः (सामाजिकः) परिवेषो भवति। पश्चात् गृहे स्थितैरन्यैर्जनैः परिचयो जायते। कुटुम्बजनानां मध्ये आत्मानमेव प्रधानं मत्वा परैः क्रियमाणं लालनमपेक्षते। क्रीडापि अन्यैः शिशुभिः सह न भवति; क्रमशः वर्षत्रयात्परं परैः शिशुभिः संपर्कं वाञ्छति। खाद्यादिकं न केवलमात्मना भोक्तव्यं, किन्तु अन्यैः संविभज्येत्यपि जानाति। ततः स्वार्थपरत्वमीषत् जहाति च। धर्माधर्मज्ञानमस्यां दशायां नैव स्यात्। यत् सुखयति तत्र स्पृहा भवति। पारितोषिकवितरणं दण्डनं च न्याय्यान्याय्यज्ञानोत्पादने ईषत् फलं दद्यात्।

शैशवे शिशूनामभिवृद्धिः शिशुपाठशालासु (Nursery Schools) सम्यग् लभ्यते। पाश्चात्यदेशेषु एतादृशपाठशालासु प्रविष्टा एव शिशवः पश्चादारम्भ-पाठशालां प्रविशन्ति । अस्मद्देशेऽपि बालोद्याननाम्न्यः (Kindergarten) पाठशालाः इदानीं प्रतिष्ठाप्यन्ते। बालोद्यानेषु द्वितीयवर्षात् प्रभृति पञ्चमं वर्षं यावत् बालाः प्रवेशायानुमन्यन्ते । परिवर्धनानुकूलः परिवेषोऽत्र कल्पितो वर्तते। तर्जनभर्त्सनादिकं नैव भवति। शिशुभिः क्रियमाणं परस्परताडनं तु निवार्यते। स्वापाय मृदुशयनादिकमत्र कल्पितं वर्तते। आधुनिकशिक्षा-सिद्धान्ते शारीरं सौख्यं, सदाचरणं, इतरैः सह वर्तनं इत्येवमादयो ये गुणाः शिक्षाकलायां मुख्यत्वेन मन्यन्ते ते अत्र यथा शिशुषु पदं निदध्युः तथा परिवेषः कल्प्यते। क्रीडोपकरणान्यपि दीयन्ते। पाठ्यचर्या काप्यत्र न भवति । अध्यापनमपि न वर्तते। बालाः स्वेच्छया अन्यैः बालकैः सह विहरन्तः शरीराभिवृद्धिं सामाजिकज्ञानं मनोविकासं च प्राप्नुवन्ति। अत्र **फ़्रोबेल्** - (Froebel 1782-1852)-उपज्ञबालोद्यानप्रणाली, **माण्टिस्सोरी** (Montessori 1870-1952) - उपदिष्टप्रणाली वोपयुज्यते। कृत्स्नं दिनं मातृभिः वियुक्ताः शिशवः सायं मातरं द्रष्टुं सोत्सुका वर्तन्ते । मातरश्च शिशून् सोत्कण्ठं प्रतीक्षन्ते । सौन्दर्यानुभूतिरप्युद्भवति बालानाम्। इतरैः सह स्थितिः कथं कर्तव्या इति शिशुः स्वयमेव जानाति। संकोचादिकं च परित्यजति।

## कौमारदशा

पञ्चमवर्षात् परमारभमाणेयं दशा द्वादशं यावत् भवति। पूर्वदशायां प्राप्ता अभिवृद्धिः अत्र दशायां स्थैर्यं प्राप्नोति। वर्षत्रयपर्यन्तं द्रुततरा अभिवृद्धिः आसीत् । ततः परं ईषन्मन्दीभूय पुनरपि सप्तमपर्यन्तं अभिवृद्धिः द्रुततरा जायते। किशोरावस्थाप्राप्तिपर्यन्तं स्थैर्याभिमुखीभवति अभिवृद्धिः। पूर्वोत्तरयोः शैशवकैशोरावस्थयोः मध्ये वर्तमानेयं स्थैर्यापादयित्री वर्तते। अस्यामेव दशायां पाठशालां प्रविष्टो बालः स्वकुटुम्बेतरैः सह परिचयं लब्धुमवकाशं प्राप्नोति। एतदवधि मातरं पितरं चाश्रित्य स्थितः, ताभ्यां पोषितः रक्षितश्च

बालः अस्यां दशायां परैः सह क्रियमाणं व्यवहारं समञ्जसं कर्तुं स्वयमेव प्रयतते । समञ्जसत्वमपि संपादितं स्यात् । यस्माद् बालः स्वयं स्वव्यवहारं निश्चेतुं प्रयतते तस्मादस्या दशायाः अपरं नाम मिथ्या-मनःपक्वदशा (Pseudo-maturity) इति । अष्टमे नवमे वा वर्षे दर्शनश्रवण-शक्ती पूर्णं विकासं अधिगच्छतः । षष्ठादारभ्याष्टमं यावत् अभिवृद्धिः शीघ्रतरा। कार्यकरणे रुचिरुत्साहश्च भवति । जिज्ञासा, रचनावृत्तिश्च मुख्ये भूत्वा बालानां कार्येषु स्वयं प्रतिफलतः । हस्तौ चेष्टावन्तौ ; मनश्च वेगवत् । उत्पतनधाव-नादियुक्तेषु क्रीडनेष्वासक्तिः भवति । प्रवयसः यत् कार्यं कुर्वन्ति तत् स्वयमपि कर्तुमुत्सुका भवन्ति । चित्रयुक्तानां पुस्तकानामवलोकने रुचिः । अतः पाठ-शालासु चित्रवन्ति पुस्तकानि सम्पादनीयानि । साप्ताहिक-पाक्षिक-मासिकपत्रिकाः मातृभाषायां प्रकाश्यमानाः अत्र उपकुर्युः । अस्यां दशायां कुमाराणां पृथग्वर्तितुं नैव स्पृहा वर्तते । अन्यैः कुमारैः सह वर्तनं, क्रीडनं चैभ्यो बहु रोचते । क्रीडा च तादृश्येव यस्यां बहूनां बालानां भागः स्यात् । अत एवास्या दशायाः गणवयः (gang-age) इत्यपि नाम । प्रायशः क्रीडासुहृदः कुमारा एव भवन्ति ; न तु बालिकाः । अस्यां दशायां पर्यटने रुचिः स्यात् । अत एव कक्ष्यां परित्यज्यापि वर्तेरन् । तस्मादुपाध्यायैः स्कौट्संघादीनां विधानेन समीचीनपर्यटनायावकाशो देयः । प्राकृतिकसौन्दर्यदर्शनाय तत्तत्स्थलीः प्रति बालाः नेया भवन्ति । स्वमित्रेष्वतिप्रीतिमन्तः एते न कदापि मित्रेभ्यः द्रुह्येयुः । कक्ष्यायां उपाध्यायस्य सान्निध्ये असान्निध्ये वा केनापि बालेन कृतां दुश्चेष्टां पृष्टा अपि न कदाप्याविष्कुर्युः । गृहहितादपि पाठशालाहितं सुहृदां हितं चैषां प्रधानं भवति । यथा पाठशालाधिकारिभिर्विवदन्ते तदा स्वगणहितमेवान्याय्यमपि न्याय्यत्वेन गणयन्ति । ततश्चोपाध्यायैः पितृभिश्च एतादृशविषयेषु यथा संकटदशायां बाला न भवेयुः तथा आचरितव्यम् । अस्यां दशायां बालानां संभूय कार्यकरणेऽपि रुचिः स्यात् । ततश्च पाठशालालङ्करणादिकार्येष्वेषां नियोजन-मभिनन्दनीयम् । वस्त्वर्जनरुचिरधिका स्यात् । तस्मादेव निरुपयोगान्यपि बहूनि

वस्तूनि सञ्चिन्वन्ति। बाह्यवृत्तान्तेष्वासक्तिः स्यात्। वीरपूजन (Hero-worship)-भावश्चेदानीं जायते। ततः यं कमपि स्वाभिमतं पूज्यं मत्वा तं पूजयेयुः। एतादृशो वीरः कदाचित् कक्ष्याचार्यो भवेत्। इमं भावं सम्यगवगत्य उपाध्यायाः तं सप्रयोजनं संपादयेयुः। शोभनगुणाः देशनेतारः गान्धिप्रभृतयोऽपि पूजाविषयाः कर्तव्याः। अत्युत्साहिषु बहिर्मुखेषु (Extroverts) सर्वदा क्रियाशीलेष्वेषु बालेषु उपाध्यायैः प्रीतिमद्भिर्भाव्यम्। शिक्षणं च मनोविज्ञानानुसारि स्यात्। अस्याः दशायाः अन्ते किशोरावस्थायाः उपक्रमः। तदनुगुणः शारीरो विकारः मानसो विकासश्च जायेते।

## किशोरावस्था—(Adolescence)

इयमवस्था द्वादशादारभ्य विंशं यावद् भवति। अस्याः दशायाः उपक्रमः केषुचिद् बालेषु द्वादशात् पूर्वमपि भवेत्। दशानुवर्तनं च विंशात्परमपि स्यात्। पूर्णायाः अभिवृद्धेः उपक्रमः अस्यां दशायां प्रारभते। अवस्थायाः अन्ते अभिवृद्धिः पूर्णतां प्राप्नोति। कौमारगुणाः केचनानुवर्तेरन्। किशोरावस्था-(यौवन) गुणाश्च प्रादुर्भवन्ति। उच्चतरपाठशालासु (High Schools) कलाशालासु (Colleges) च अधीयाना विद्यार्थिनोऽस्यां दशायां वर्तन्ते। अस्याः दशायाः उपक्रमः शरीराभिवृद्धिं पुरस्कृत्य निर्दिश्यते। अवसानं तु बुद्धिविकासं पुरस्कृत्य। जनकत्वस्य अथवा जननीत्वस्य प्राप्त्यर्थं शरीराभिवृद्धिर्या अपेक्ष्यते तस्या उपक्रमः अस्यां दशायां भवति। अत्राविर्भूताभिवृद्धिः क्रमेणोपचिता भवति। मनोविकासोऽपि जायते। मनोविकासप्राप्त्यनन्तरमेव किशोरावस्थायाः पूर्णता जाता मन्यते। स्वातन्त्र्येण विषयानधिकृत्य चिन्तनम्, निर्धारणं, कार्यकरणं, उत्तरदायित्वं, धैर्यं च मानसाभिवृद्धेः चिह्नानि। प्रवयोभिः क्रियमाणानि कर्माण्यपि कर्तुमेतेषामवकाशो यदि दीयते तर्ह्येवैषां किशोराणां मनः प्रशिक्षणं प्राप्य परिपक्वतां (maturity - पाकं) लभेत। केचन पितरः अस्यामवस्थायां स्थितं किशोरं स्वपुत्रं बालमेव गणयन्तः 'त्वं न जानासि किमपि' इति कथयन्तश्च कार्यभारं न न्यस्यन्ति। मुख्येषु कार्येषु नैव नियुञ्जते। नियुक्तस्यापि कार्यकरणे पूर्णं

स्वातन्त्र्यं न ददति । ततश्चैवं रक्षिता: बाला: आत्मप्रत्ययहीना: सन्त: आत्मानमज्ञं मन्यमाना: विवाहात्परमपि भार्यानिघ्ना जायेरन् । इयं किशोरदशा देशस्य शीतोष्णस्थितिं वंशधर्मं आहारपुष्टिं चाश्रित्य विलम्बेनाविलम्बेन वा जायेत ।

इयं दशा, कौमारदशाया: परस्तात् पूर्णवृद्धिं प्राप्य स्थिताया: प्रौढावस्थायाश्च मध्ये वर्तते । तस्मादियं दशा अन्तराळदशा (transition period) भवति इति अधुना वैज्ञानिकै: मन्यते । पूर्वं तु नैवं मतिरासीत् । मध्यदशात्वेनेयं नैव परिगणिता । कन्याया: प्रथमरजोदर्शने एव सा मातृभावं प्राप्तुमर्हा जातेति मत्वा विवाह: पतिसंयोगश्च यथाकुलसंप्रदायं कारित: आसीत् । शरीरावयवानां वस्तुत: पूर्णाभिवृद्धिस्तदा नैव जायते । एतादृश्या मातु: जाता: शिशवो बलहीना भवन्ति । ततश्च शरीरावयवानां परिपूर्णोपचयात्परं विवाह: कार्य इति मतमिदानीं बहूनां वर्तते । **स्टान्लि हाल्** (Stanley Hall)-नामको विज्ञानी स्वकीये अडोलेसेन्स् (Adolescence) - नाम्नि ग्रन्थे (1904) इमां किशोरावस्थां संकटभावेन भावाकुलत्वेन च युक्तां वर्णयति स्म । आधुनिकास्तु, 'यद्यपि अस्यां दशायां मनोभावो विकृतो भवेत् ; किन्तु यस्मिन् जनसमाजे कुलसंस्कृति: देशसंस्कृतिश्च समीचीना वर्तते, यत्र च इन्द्रियाणां नियन्त्रणं स्वाभाविकं विद्यते, ब्रह्मचर्यादिकं च सम्यग्व्यवस्थापितं, तत्र जनसमाजे मानसो विकारो न तथा असुन्दरं (ugly) आत्मानं प्रदर्शयति । अथापि केषांचिदियं दशा संकटकारिणी वर्तते इत्यस्या: स्वरूपस्वभावौ सम्यगवगन्तव्यावेव ' इति अभिप्रयन्ति ।

## शारीरो विकास:

अस्यां दशायां शरीराभिवृद्धि: द्रुततरा जायते । किशोरस्य किशोर्याश्च सर्वेऽप्यवयवा: वृद्धिमाप्नुवन्ति । तेन चोच्छ्राय: शरीरभारश्च (weight) अधिको भवति । शरीरान्त:स्थितानां जठर-हृदय-श्वासकोशादीनां वृद्धि: भवति । मस्तिष्कस्य वृद्धि: पाकश्च (परिपक्वता—Maturity) जायते । लैङ्गिकग्रन्थि-

निस्सृतः स्रावश्च रक्तं प्रविश्य शरीराभिवृद्धिं बहुमुखीकरोति। एवमतिवेगवती अभिवृद्धिः अवयवानां परस्परं संहृत्य कार्यकारित्वे विघ्नमाचरति। अत एव यूनां युवतीनां च गत्यादिषु ईषद्वैलक्षण्यं दृश्यते। कक्ष्यायामनवधानादिकं चैतत्प्रयुक्तमेव। धर्मोपदेशेनैव तेषां मनः आवर्जनीयम्। मानसः संकटश्च परिहरणीयः। दण्डनमत्र नैवोपकुर्यात्। शरीरवृद्धिरधिकमाहारमपेक्षेत। किशोराणां रुचिश्चाहारे अधिका स्यात्। अधिकभोजनेन काश्चन पीडा अपि भवन्ति। एताः पीडाः मनस्याकुलतामापादयन्ति। लैङ्गिकग्रन्थिनिःस्रावकृतः शारीरो विकारश्च केषांचित् मनसि चिन्तां जनयेत्। पुंसो वक्षः व्यूढतामश्नुते। स्कन्धः पुष्टो भवति। श्मश्रूणां आविर्भावः अधुनैव। किशोरीणामपि स्तनोत्सेध-अस्थ्युपचय-नितम्बवैपुल्यप्रभृतयः शारीरा विकारा वर्तन्ते। बाल्ये अननुपातं वर्तमानानामवयवानां अनुपातानुगुणवृद्धिः (Symmetry-सममितिः) सौन्दर्यमित्यादयः अनया दशया उत्पाद्यन्ते। "उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवारविन्दम्। बभूव तस्याश्चतुरश्रशोभि वपुर्विभक्तं नवयौवनेन" इति पार्वतीयौवनवर्णनपरः कालिदासीयोऽयं श्लोकः स्मर्तव्यः अत्र। कन्यकाश्च लज्जावत्यो भवन्ति।

## मनोविकासः

पूर्वमनासादिता बुद्धिशक्तिरत्र नूत्नतया नोत्पद्यते। बुद्धिशक्तिः सर्वापि षोडशभिः वर्षैः प्राप्ता वर्तते। चिन्तनम्, निश्चयकरणम्, कल्पनम्, अवधानम्, स्मरणम्, युक्त्यनुसन्धानम् इत्येतानि सर्वाण्यपि अत्र दार्ढ्यं अश्नुवते। क्रीडायां, पठने, कल्पनायां, लक्ष्यादरणे चासक्तिरधिका स्यात्। भाविनीं स्वाभिमतामौद्योगिकीं वृत्तिमधिकृत्यापि चिन्ता स्यात्। वीरचरित्रश्रवणे, यात्रावृत्तान्ते, स्वचरित्रे (Autobiography) च प्रीतिः भवति। कन्यानां च संगीते, नर्तने, नव्यकथासु, पद्यकाव्येषु च मनः प्रवर्तेत। विवेकः, मनोनिग्रहः, स्थिरचित्तत्वं, भगवद्भक्तिश्च केषांचित् स्यात्। केषांचित्तु गुर्वाज्ञाननुरोधित्वं, आत्मश्लाघनम्, परैः क्रियमाणायामात्मप्रशंसायां प्रीतिः, आलस्यं च स्यात्। अस्यां दशायां स्वगृहहितं पाठशाला-

हितं चोपेक्ष्य जनसमाजहितेऽभिनिवेशः प्रदर्श्येत। यत्र कुत्रापि कार्यस्थगने (Strike) जाते तत्र विद्यार्थिन एव प्रथमं स्वयमागत्य भागिनो भवन्ति। समानवयोभिः सम्पर्कः, सङ्घप्रतिष्ठापनम्, स्वहितं परित्यज्यापि साङ्घिककार्यकरणम्, नेतृत्वम्, सहयोगकरणम्, त्यागः इत्येवमादयो गुणाः अत्र मुख्या भवन्ति। दुष्टमैत्री च जायते। सा च सन्मैत्र्या त्याजयितव्या स्यात्; न तु निरोधनेन। अत्र रुचयश्च विभिन्नेषु विषयेषु भवन्ति। ततश्च किशोराणां रुच्यनुगुणमध्यापनं कार्यम्। अत एव बहुलक्ष्यपाठशालाः (Multipurpose Schools) रुचिं पुरस्कृत्येदानीं प्रतिष्ठापिता वर्तन्ते। तस्मादस्यां दशायामभिनन्दनीयाः, अनभिनन्दनीयाश्च गुणाः प्रादुर्भवन्ति।

## संवेगाः

संवेगाश्च जीवस्य कृत्स्नं शरीरमुपस्कुर्वन्ति। संवेगेषु कोपः, भीतिः, प्रीतिश्च प्रधानतमाः। संवेगशब्दः अत्र संवेगोत्पादकानि कारणानि, अस्मिन् काले जायमानान् विकारांश्च विषयीकरोति। अस्यां दशायां जायमानं शारीरं विकारं दृष्ट्वा केचन तुष्येयुः। तृप्तास्तु आत्मानं मण्डयन्ति विशेषतः। असकृत् दर्पणे आत्मावलोकनं असाधारणम्। आत्मानं सुन्दरं प्रदर्शयितुं रुचिर्भवति। सुवेषधारणे आसक्तिः। कन्यानामप्येवमेव संवेगः स्यात्। अविदितमेव हावभावादिकं ताः प्रदर्शयन्ति। केचित्तु शारीरं विकारं दृष्ट्वा विषण्णा भवेयुः; ऐकान्त्यमाश्रित्योपविशन्ति। मित्राण्यपि परिहरन्ति। आहारादिष्वप्यभिरुचिः नैव प्रदर्श्यते। परीक्षादिषु पराजये प्राप्ते, पितृभिश्च तर्जने वा कृते आत्मानमपि हन्युरेते। अतस्तुष्टेषु विषण्णेषु वा कोपो न प्रदर्शनीयः। तत्त्वकथनेन विषण्णानां समाश्वासनं कार्यम्। तुष्टाश्च यदि सीमानमतिक्रम्य वर्तेरन् तर्हि ते लघुभिः व्यङ्ग्यमर्यादया क्रियमाणैरुपदेशैः मर्यादासंरक्षिणः कार्याः। मनसः आकुलत्वं च सर्वथा परिहरणीयम्।

किशोरावस्थायां, 'अहं परिहासास्पदं भवामि' इति मत्वा केचन लज्जन्ते। स्वातन्त्र्येच्छा च भूयसी। वृद्धनियन्त्रणे असहनम्; प्रायशः अत्र मनः बहुविधानां परस्परं विरुद्धानां भावानां युध्यमानानां समराङ्गणं भवति।

किशोराणां मानसीं स्थितिमजानन्तः उपाध्यायाः पितरश्च स्वयमपि तेषामाकुलत्वं जनयन्ति। अशक्ये निरुपयोगे च कार्ये तान् नियुञ्जते। अधिकां विनीततां प्रतीक्षन्ते। कटुवाक्यं प्रयुज्य मनसि व्रणमुत्पादयन्ति। नर्मवचसा तान् तन्मित्राणि च परिहसन्ति। पक्षपातेन वर्तनमपि संवेगसमावस्थां बाधेत। तथा चोपाध्यायैः पितृभिश्च चतुरैः मनःसंकटानुत्पादकैर्भाव्यम्। यदा च संवेगानां समावस्था नष्टा भवति तदा असामञ्जस्यं जायते। किशोराणां मानसं असामञ्जस्यं च एभिः द्योत्येत।

1. **परत्र दर्शनम्** (Projection) आत्मेच्छादीनां परत्र अन्यजनेषु विद्यमानत्वेन मतिः। आत्मना प्राप्तस्य पराजयस्य कारणान्तरनिर्देशनं च। परीक्षापराजये परीक्षकेषु दोषारोपणम् अत्रोदाहरणम्। कुनर्तकी स्वकृतस्या-सुन्दरस्य नर्तनस्य रङ्गं कारणं कथयति किल!।

2. **अभेदबुद्धिः** (Identification) आत्मना प्रकाशयितुं कर्तुं च अशक्यानां भावानां कार्याणां च परैः कृतानामभिनन्दनम्। स्वयं कुचेष्टां कर्तुमसमर्थः बालः अन्येन बालेन कक्ष्यायां क्रियमाणां कुचेष्टामभिनन्दति। अत्र पूर्वबालः उत्तरबालेन सह आत्मनोऽभेदमविदितमेव करोति।

3. **प्रतिपूर्तिः** (Compensation) अत्र आत्मनि दृष्टानां दोषाणां परेषु दृष्टानां गुणानां च निरर्थकतानिरूपणेन परप्रतारणम् अथवा आत्मप्रतारणम् क्रियते। आत्मनो निहीनतापरिहाराय परनिन्दनमात्मप्रशंसनं वा क्रियेतात्र। एवमात्मनि स्थितायाः न्यूनतायाः प्रतिपूर्तिः सम्पाद्यते।

4. **दिवास्वप्नः** (Day-dreaming) अतिकल्पनामुपयुज्य आत्मानं वीरं बुद्धिमन्तं वा मन्यन्ते बालाः। पराजयस्य वास्तविकं कारणं अनन्विष्यन्तः "किं कर्तव्यमासीत्? किं कृतवान् स्याम्?" इत्येवं विचिन्त्य काल्पनिकलोके संचरन्ति।

5. **उदात्तीकरणम्**—(Sublimation) केषुचित् विषयेषु निरुद्धाः युवानः कदाचित् समीचीनेषु अन्येषु मार्गेषु आत्मनः मनः प्रवर्त्य शोभनं कार्यं कुर्युः;

यूनां कामवृत्तिः नाटकाभिनयेन, कलाकार्येण, संगीतेन चोदात्तीक्रियेत ; शोध्येत च। परं केचन किशोराः परावधानमात्मनि वाञ्छन्तः शोभनं कार्यं किमपि अकुर्वन्तः स्तेयेनाथवा तत्तुल्येनान्येन कार्येणात्मनि परावधानं प्राप्तुं प्रयतेरन्। असामञ्जस्यद्योतकं इदं चिह्नं दृष्ट्वा उपाध्यायाः एतादृशविद्यार्थिनामुद्देश्यं च ज्ञात्वा स्वयमेव तान् समुचिते मार्गे प्रवर्त्य निर्दिष्टं सर्वमपि असामञ्जस्यं परिहरेयुः।

अस्यां दशायां लैङ्गिकग्रन्थिः स्वकार्यं करोति। ततश्च किशोराणां कामवृत्तिरुत्तेजिता स्यात्। सा च संवेगे, मानसे विकासे, विद्यायां च स्वोपस्कारमादध्यात्। कामवृत्तिः अधिकेन शरीरबलेन युक्ता सती नरं शृङ्गारकार्येषु अत्यासक्तं कुर्यात्। यदि इयं कामवृत्तिरनुदात्तीकृता (Unsublimated) स्यात्तर्हि किशोराः अपथे प्रवर्तेरन्। तेन क्षीणशक्तयो व्याधिपीडिताश्च भवेयुः। उन्मादावस्था च केषांचित् स्यात्। अविनीतत्वं च जायते। लैङ्गिकज्ञानं च एभिः यत् प्राप्यते तत् विज्ञानानुसारि न भवति। तथा च लिंगं, तत्संस्थानं तत्कार्यं, तदारोग्यं, तदनारोग्यं चाधिकृत्य यत् ज्ञानं किशोरैः प्राप्तं भवेत् तत्सर्वं मिथ्याज्ञानमपि स्यात्। पितरः आचार्याश्च, लिंगं, तत्कार्यं चाधिकृत्य ज्ञानदाने औदासीन्यं चित्तसंकोचं वा प्राप्य न किमपि उपदिशन्ति। कन्यकानां लैङ्गिकज्ञानं प्रायशः मातृतः प्राप्यते। पितृतस्तु किशोरा नैवैतत् प्राप्नुवन्ति। यस्मादज्ञानं तस्मादत्र कौतूहलं चाधिकं स्यात्। छायाचित्रदर्शनादिनापि कामवृत्तिरधिका भवति। यत्र पाठशालासु कलाशालासु च किशोराः किशोर्यश्च सहाध्ययनं कुर्वन्ति तत्र लैङ्गिकसमस्याः बह्व्यः उद्भवन्ति। अमेरिकादेशे विरामदिनेषु किशोराणां किशोरीभिः सह यत्र कुत्रापि विविक्ते संकेतस्थले गमनम्, स्वेच्छया वर्तनं चानुमन्येते। कापि किशोरी केनापि युवकेनैवं गमनाय अप्रार्थिता चेत् तर्हि सा तन्माता च एतादृशीं स्थितिं अत्यवमानकारिणीं मन्येते। एवमेव कयापि किशोर्या अवृतः युवा महत् दुःखमनुभवति। एवं गमनस्य सङ्केतकल्पनं (dating) इति नाम वर्तते। संकेतं परिकल्प्य गमने 'किं कर्तव्यं? किं न

कर्तव्यम्' इत्युपदेशदानाय ग्रन्थाः प्रकाशिताः वर्तन्ते। यस्मिन् दिवसे संकेताय गम्यते तस्मिन् दिवसे "अर्धरात्रात्पूर्वं गृहं प्रत्यागन्तव्यमि''ति पुत्रीः उपदिशन्ति मातरः!। पाठशालासु लैङ्गिकज्ञानं दीयते। एवं विस्रंभपरिचयेन किशोरस्य किशोर्याश्च परस्परावगतिः ततश्च मानससंकटपरिहार इति लैङ्गिकज्ञानं देयमिति पाश्चात्या मन्वते। लैङ्गिकज्ञानदानविषये मतभेदो वर्तते। न देयमिति केचन मन्यन्ते। अथापि 'लैङ्गिकज्ञानादानादापतद्भ्यः अनिष्टेभ्यः लैङ्गिकज्ञानदाना-द्भवन्ति अनिष्टानि लघुतराणि वर्तन्ते' इति कोऽपि विज्ञानी अभिप्रैति[1]। अमेरिकादेशं गत्वा तद्देशविद्यासम्प्रदायमवगत्यागताः केचनास्मद्देशीयाः अपि (एतेषां संख्या अल्पैव) लैङ्गिकज्ञानं अस्मद्देशे पाठशालासु कलाशालासु चाधीयानानां यूनां युवतीनां च देयमेवेति सुदृढं स्वाशयमाविष्कुर्वन्ति। अत्र विषये प्राज्ञेष्वग्रणीः **चक्रवर्ति-राजगोपालाचार्यः** स्वाशयमेवमाविष्कृतवान्। "अन्यदेशेषु या कापि पद्धतिर्भवतु युवजनमध्ये। अस्मद्देशे युवानो युवतयश्च तादृशविस्रंभपरिचयं नैव प्राप्नुवन्ति। गृहपरिवेषः, पाठशालापरिवेषः, जनस-माजपरिवेषश्चेदानीमुच्छृंखलां प्रवृत्तिं यूनां नैव जनयन्ति। लैङ्गिकज्ञानं यूनां युवतीनां च लोके पशुपक्ष्यादिव्यवहारदर्शनेन जन्तु-वनस्पति-विज्ञानाध्ययनेन च जायते एवेति नात्रास्माभिः विशिष्टा चिन्ता कार्या। अस्माकं संस्कृतिश्च आत्मनिग्रहमुपदिशति। न तु निर्नियन्त्रणां कामवृत्ति''मिति।

लैंगिकज्ञानं देयं चेत् केन देयम्? कथं च देयमिति प्रश्नः उदियात्। बहूनां यूनां पुरतः कक्ष्यायां क्रियमाणं व्याख्यानं अभिलषितं फलं नैव दद्यात्। ततश्चोपाध्यायः चतुरः पञ्च वा किशोरान् एकान्ते उपदिशेत्। तत्रापि संवेगा-दीनामवकाशमददत् शान्तेन मनसा विज्ञानदृष्ट्या तथोपदिशेत् यथा छात्राणां मनसि समुद्वेगो नैव जायेत। अत्र स्थावरोत्पत्तिप्रक्रिया उपकुर्यात्। पुष्पाणां

---

1. "I would rather have all the risk from free discussion of sex than the greater risk run by a conspiracy of silence" Dr. Cosmo Gordon Lang.

पुमवयवस्य स्त्र्यवयवस्य च प्रदर्शनं, मकरन्दस्पर्शेन च कथं शलाटुरथवा फलं जायते इति तत्प्रक्रियावर्णनं च अत्र साहाय्यं कुर्यात्। यदि उपदेशेन लैङ्गिक-ज्ञानदानमशक्यं स्यात् तर्हि तद्विषयप्रतिपादकग्रन्थपठने नियोजनं युक्ततरं स्यात्। विद्यार्थिनां संकटमनोभावः, तेषां विद्येतरकार्येषु नियोजनेन, उल्लासयात्रया, संघवासेन, क्रीडया, जयन्त्याद्युत्सवनिर्वर्तनेन च ह्रासतां भजेत। तदा तदा विद्यार्थिनीभिः सह क्रियमाणः **नियन्त्रितः** परिचयोऽप्यत्र साधनमिति केचित्। एषु विषयेषु जागरूकैः करुणावद्भिः चतुरैश्चोपाध्यायैः भाव्यमिति संग्रहः।

## सामाजिकत्वविकासः

अस्यामवस्थायां किशोरः समाजेन सह वर्तने सामाजिकत्वं प्राप्नोति। समाजेन सह संबन्धे मनसः परिपक्वताप्राप्तिरेव सामाजिकत्वविकासशब्देनोच्यते इति तल्लक्षणं कथयति हर्लाक्नामको विज्ञानी[1]। जनैः यूनः समाजांगत्वेनाङ्गी-कार्यत्वम्, समाजस्य भावमधिगत्य तदनुगुणं यूना कार्यकारित्वमितीदमुभयमत्र सामाजिकत्वेनाभिप्रेयते। युवा अस्यां दशायां आत्मनः प्राधान्यं परैरभ्युपगतं वाञ्छति; जनैः क्रियमाणं गौरवं चापेक्षते। एवमेव समाजस्य मतं ज्ञात्वा तत्कार्येषु भागं स्वीकर्तुमिच्छेत्। विद्यया, वयसा, अन्यैश्च गुणैरात्मना तुल्यानां जनानां संघे सदस्यत्वं प्राप्तुं प्रयतेत; लक्ष्यादरः, त्यागः, सहयोगः, परोपकारि-त्वम् इत्येवमादयो गुणाः अर्जिता भवन्ति। परैः सह वर्तनेनैव सामाजिकत्व-विकासो जायेत, ततश्च पितरः उपाध्यायाश्च, तादृशसमाजविषये दोषान् नैवारोपयेयुः, कोऽपि समाजो यदि वस्तुतो दोषयुक्तो भवति, स्वपुत्रः अथवा शिष्यश्च यदि तदंगतां प्राप्नुयात् तर्हि अन्यं कमपि शोभनं समाजं प्रदर्श्य तदङ्गत्वं युवकस्य संपादनीयम्। क्रमेण च पूर्वसमाजाङ्गत्वं परित्यजेत् युवा। यदि कोऽपि युवसमाजः अन्याय्यं कार्यं कुर्यात् तर्हि स समाजः समीचीनमार्गे प्रवर्तनीयो भवति। कलाशालासु च क्रियमाणानि विद्येतरकार्याणि (Extra Curricular activities)

---

1. "The attaining of maturity of Social relationship."

—E. Hurlock,

युवकस्य सामाजिकत्वं वर्धयेयुः। गीतसंघप्रतिष्ठापनं, संभूयक्रीडनं, भाषणादिषु स्पर्धोत्पादनं, नाटकाभिनयः, पाठशालानुशासनरक्षणाय विद्यार्थिप्रतिनिधिसमिति-कल्पनं, धर्मोपदेशः (Religious instruction) इत्येवमादयोऽपि सामाजिक-त्वं वर्धयन्ति। धर्मोपदेशविषये इदानीं मतभेदो वर्तते। वंशपरम्पराप्राप्ते धर्मे किमयं युक्तः उत अयुक्तः इति संशयो जायते; बहुभिः नेतृत्वेन अभिमतैः अन्यैः जनैः असकृत् धर्ममधिकृत्य क्रियमाणः दुरुपदेशः धर्मे श्रद्धां न्यूनीकरोति। अविश्वासं च जनयति। ततश्च धर्मोपदेशे उपाध्यायाः जागरूकाः भवेयुः। ताटस्थ्यमवलम्ब्य मृदुभिः वचनैः धर्मोपदेशः कार्यः। यथा कक्ष्यायां स्थितानां मनसि व्यथा न जायेत तथायं कार्यः। विद्यार्थिनः अस्यां दशायां सुहृद इव प्रीतिपूर्वं समालापनीया भवन्ति। अत एवोच्यते 'प्राप्ते तु षोडशे वर्षे पुत्रे मित्रवदाचरे'दिति॥

# तृतीयोऽध्यायः

## तन्त्रिकातन्त्रम् (Nervous System)

मनोविज्ञानं मनुजव्यवहारं परिशील्य सामान्यधर्मान् कांश्चन निरूपयितुं प्रयतत इति ज्ञातमेव। प्राधान्येनात्र मनःकार्येषु चिन्तनसंवेगादिष्ववधानं दीयते। अत्र विचाराय प्रवृत्तानां विज्ञानिनां शारीरतन्त्रज्ञानमप्यावश्यकमेव। प्राचीनमनोविज्ञानिनोऽत्र नाधिकां श्रद्धां चक्रुः। आधुनिकास्तु मनोज्ञानाय शरीरज्ञानमप्यपेक्षितमेवेति मन्यन्ते। शरीरस्थितिः मनः कार्यमुपस्करोति; श्रान्ताः केचन मनःकार्यस्यापि विरतिं वाञ्छन्ति; मनश्च शारीरं कर्मोपस्करोति। यदि मनः उत्साहवत्, तर्ह्येव क्रीडादिषु प्रवृत्तिर्भवति। मधुमदेन च शरीरे प्रथमं विकाराः, तदनुगुणं पश्चात् मनसि च विकारा जायन्ते। बहूनां शरीररोगाणां अजरणादीनां निदानं मनःस्थितिरेव। ततश्च सन्निकृष्य संहृत्य च स्थित्वा कार्यं कुर्वतोः शरीरमनसोः स्वामी (Psycho-Physical Organiser) जीव इत्यागतम्; अत एव अनयोः संबन्धं सम्यग् निरूपयितुं कश्चन शास्त्रविभागोऽपि **शरीरमनोविज्ञानम्** (Physiological—Psychology) इति वर्तते। अत्र वुण्ड्ट्-महाशयेन लिखितो ग्रन्थः प्रथमो भवति।

अथ जडस्य शरीरस्य, चैतन्यवतः मनसश्च कीदृशः सम्बन्धो वर्तते इति विचारः स्यात्। तत्र व्यवहारवादिनस्तु मनःकार्यं सर्वमपि शारीररासायनकार्यात्मना वर्णयन्ति। मनसः चैतन्यं नाङ्गीकुर्वन्ति। सर्वमपि कार्यं चिन्तनादिकं शरीरस्यान्तःस्थितानां अवयवानां विकारविशेषत्वेन, पेशीव्यापारत्वेन ग्रन्थिव्यापारत्वेन च वर्ण्यते। तथा चैते मनःसत्तां नाङ्गीकुर्वन्ति। मनोवादिनस्तु (Mentalists), 'मनः तदुद्भूतं च सत्यम्। अन्यत् सर्वं मिथ्ये'ति मन्यन्ते। समान्तरवादिनस्तु (Parallelists) 'मनः शरीरमित्युभयं तात्त्विकमेव। परं अनयोः सम्बन्धो नास्ति। मनः स्वकार्यं कुरुते। शरीरं च स्वकीयम्। यद्यपि अनयोः पारस्परिकः सम्बन्धः अभवन्नपि भवन्निव प्रतीयते' इति कथयन्ति।

अन्ये तु पूर्वोक्तवत्—अन्योन्यक्रियोत्पादकत्वं (interactionism) शरीरमनसोः मन्यन्ते। प्रेरणे उत्पन्ने जीवः कृत्स्नोऽपि (whole organism) प्रतिक्रियाव्यापृतो भवति ; कृत्स्नस्यापि जीवस्य यत् संघातैकत्वं(hormonius unitness) वर्तते तत् किंकृतमिति जिज्ञासायां तन्त्रिकामण्डलमत्र सद्यः उत्तरं दातुं प्रभवति। जीवः प्रेरकानुगुणं एकां अथवा बह्वीः प्रतिक्रियाः कर्तुं, शरीरं नियन्तुं च, कृत्स्नं शरीरं आपादतलमस्तकं व्याप्य स्थितेन तन्त्रिकामण्डलेनैव शक्नोतीति विदितमेव। अनुबद्धं चित्रं तन्त्रिकाव्याप्तिं सूचयति।



8. तन्त्रिकामण्डलम्

मनःकार्यं सर्वं तन्त्रिकासमूहेन क्रियते । मस्तिष्कपरिमाणानुगुणं मनःशक्तिश्च वर्तते इति कथयन्ति । मनुजमस्तिष्कमपि शरीरानुपातदर्शने बृहत् वर्तते[1] इत्यवगम्यते । चिन्तनादिकं सर्वमपि मस्तिष्केण क्रियते, मस्तिष्कं च तन्त्रिकाकोशाणुसंघातरूपम् । तथा च तन्त्रिकैव ज्ञानस्य क्रियायाश्च मूलं कारणमिति तन्त्रिकाज्ञानं मनोविज्ञाने मुख्यं वर्तते । तन्त्रिकामण्डलं च केन्द्रतन्त्रिकामण्डलम् (Central Part of the nervous system), प्रान्ततन्त्रिकामण्डलम्, ( Peripheral part of the nervous system), स्वतन्त्रतन्त्रिकामण्डलम् (Autonomic nervous system) इति त्रेधा विभज्यते ।

मस्तिष्कं मेरुरज्जुश्च संहत्य केन्द्रतन्त्रिकामण्डलतां भजते । इदमेव शारीरं सर्वं कर्म यथायथं संयोज्य (co-ordination) व्याकुलतां कार्यस्य निराकरोति । कपालस्यान्तः मस्तिष्कमतिसुरक्षितं वर्तते ; मस्तिष्कस्यान्तर्भागः श्वेतवर्णः, बाह्यस्तु भस्मवर्णः । मस्तिष्कं तु चतुर्धा विभज्यावगन्तुं शक्यम् । प्रमस्तिष्कम् (Cerebrum), 2. अनुमस्तिष्कम् (Cerebellum), 3. मध्यमस्तिष्कम् (Thalamus) 4. मेरुशीर्षम् (मुकुलम्-Medulla) इति ।

## प्रमस्तिष्कम्

प्रमस्तिष्कं तन्त्रिकाकोशिकाणुभिर्जटिलं सत् मनसः उच्चतराणि कार्याणि चिन्तननिश्चयस्मरणादीनि करोति । तत्रापि प्रमस्तिष्कावरणभूतायाः त्वचायाः (Cerebral Cortex) एषां कार्याणां च दृढतरः सम्बन्धो वर्तत इत्यभिप्रयन्ति । प्रमस्तिष्कस्य पूर्वभागः पश्चाद्भागापेक्षया ईषदविशालो वर्तते । प्रमस्तिष्कं

---

१. **मस्तिष्कभारः**-मनुजमस्तिष्कम्-3-पौण्ड्स् (Pounds), तिमिङ्गिलस्य 14-पौण्ड्स्, शरीरभारमस्तिष्कभारयोरनुपातदर्शनमेव बुद्धिशक्तिं द्योतयेत् । एकैकस्यापि दशसहस्रपौण्ड्मितस्य शरीरभारस्य एकपौण्ड्परिमितमस्तिष्कभार एव वर्तते तिमिंगिलस्य, 1/10,000; गजस्य 1/500 ; कपिविशेषस्य (Gorilla) 1/250 ; मनुजस्य 1/50 ; अथापि इदं मस्तिष्कभारतोलनं सर्वथा बुद्धिशक्तिसूचकं वर्तते इति नैव मन्तव्यम् । केषांचित् वानराणां मस्तिष्कानुपातः मनुजानामिव 1/50 एव वर्तते ; अथापि ते बुद्धिमन्तो न दृश्यन्ते । **Munn's** *Psychology*, p. 66.

गोलार्धरूपेण (hemisphere) द्वेधा विभक्तं विद्यते । इदं द्वयं तदधोभागे स्थितेन महासंयोजकाख्येन (Corpus Callosum) अवयवेन परस्परं संयोजितं भवति । वामार्धं शरीरस्य दक्षिणभागं, दक्षिणार्धं शरीरस्य वामभागं च नियमयति । प्रमस्तिष्कावरणं च (आवरणत्वचिका-Cortex) आकुञ्च्य बह्वीः वलीः (Folds) प्राप्य निम्नोन्नतं सत् प्रमस्तिष्कमावृणोति । शारीरतन्त्रनिष्णाताः प्रमस्तिष्कावरणं तत्कार्यानुरोधेन ललाटदल (Frontal lobe) - पार्श्विकादल (Parietal lobe) -




9. मस्तिष्कम्

1. हैपोतालमस्, Hypothalamus. 2. तालमस्, Thalamus.
3. महासंयोजकम्, Corpus callosum. 4. ललाटदलम्, Frontal lobe.
5. प्रमस्तिष्कम्, Cerebrum. 6. पार्श्वदलम्, Parietal lobe,
7. अनुकपालदलम्, Occipital lobe. 8. अनुमस्तिष्कम्, Cerebellum.
9. मेरुशीर्षम्, Medulla. 10. मेरुरज्जुः, Spinal Cord.

अनुकपालदल (Occipital lobe), शङ्खदल - (Temporal lobe) - रूपेण चतुर्धा निर्दिशन्ति। चित्रमवलोक्यताम्। एषां दलानां कार्यमपि विभिन्नं वर्तते। एवं प्रविभक्ताः प्रदेशाः परस्परमसंबद्धा वर्तन्ते इति न मन्तव्यम्। ललाटदलम् शरीरव्यापारं, पार्श्विकादलम् संवेदनं, अनुकपालदलम् दर्शनं, शंखदलम् श्रवणं च साधयन्तीति **फ्रान्ज़्** (Franz 1874–1933) - नामकेन **लाष्लि** (Lashley) - नामकेन च विज्ञानिभ्यां प्रयोगैः निरूपितं वर्तते। यद्यपि दलानि स्वं स्वं कार्यं कुर्वन्ति; अथापि एभिर्दलैरुपकृतं सत् कृत्स्नं मस्तिष्कमेव सर्वं कार्यं करोतीति मन्तव्यम्।

## अनुमस्तिष्कम्

इदं प्रमस्तिष्कस्य पश्चादधोभागे वर्तते। अस्य मस्तिष्केण मेरुरज्ज्वा च सम्बन्धो विद्यते। अस्य साहाय्येनैव मनुजः स्थानं, दिशः, स्थानकृतविप्रकर्षसन्निकर्षौ च जानाति; पक्षिणां डयनं, मीनानां सन्तरणं चैतदधीनम्; मनुजस्य ऊर्ध्वस्थितिगत्यादिषु साम्यावस्थायाः कारणमिदमेव। अस्योपघाते मनुजः सोद्घातं (With jerk) पादनिक्षेपं कुर्यात्।

## मध्यमस्तिष्कम्

इदं प्रमस्तिष्कस्य अनुमस्तिष्कस्य च मध्ये मुकुलस्योपरितने भागे वर्तते। इन्द्रियैः प्रहितानि प्रेरणानि मस्तिष्के स्थितेभ्यः तत्तदिन्द्रियसम्बद्धभागेभ्यः प्रहिणोति; तत एवैन्द्रियिकं प्रत्यक्षं जायते। सर्वाण्यपि बाह्यप्रेरणानि मस्तिष्के स्थिताभिः तन्त्रिकाभिः सह एतद्द्वारैव संबन्धं प्राप्नुवन्ति। मध्यमस्तिष्कम्, हैपोतालमस्-(Hypothalamus-अधश्चेतक) - नाम्ना भागेन संयुज्य अस्माभिः प्राप्तव्यानां संवेगादीनां (Emotions) उत्पादने साहाय्यं आचरति। संवेगवशात् जायमानानां स्तम्भप्रलयादीनां विभावादीनां च विकाराणां नियन्ता हैपोतालमस्-अवयव इति **केनन्** - (Cannon) **बार्ड्** (Bard) - नामकावुभौ विज्ञानिनौ न्यरूपयताम्।

## मेरुशीर्षम्

अल्पाकारोऽयं मस्तिष्कभागः एकांगुलपरिमाणः मेरुरज्ज्वाः शिरोभागे बह्वीभिः तन्त्रिकातन्तुकैः मुकुलसदृशमाकारं प्राप्य वर्तते। अयं मेरुरज्ज्वाः प्रमस्तिष्कस्य च मध्ये वर्तमानः मेरुरज्जोरागतान् आवेगान् (Impulses) मस्तिष्कं प्रति प्रेषणे मार्गायते। अनुमस्तिष्कमनेनैव संयुक्तं वर्तते। श्वसन-हृदयपरिस्पन्द-धमनीसंकोचादीनि (Constriction) जीवापेक्षितानि प्रधानतमानि कार्याण्येतदायत्तानि।

## मेरुरज्जुः (Spinal cord)

इयं रज्जुः कोशाणुभिः (Cells) तन्तुकैश्च (Fibres) निष्पन्ना। मेरुशीर्षात् आरभ्य मेरुदण्डस्य (Spinal column) चतुर्विंशतितमास्थिपर्यन्तं तता वर्तते। आयामश्च अष्टादशाङ्गुलपरिमितः, स्थौल्यं च कनिष्ठिकाङ्गुलिस्थौल्यसदृशम्। अन्ते च तन्त्वाकारा कृशा भवति। तिर्यक्छेदे कृते अस्याः अन्तः 'H' आकारकं भस्मवर्णं किमपि विद्यते; अत्यल्पं द्वारं च। तत्र द्रवद्रव्यं किमपि भवति; तस्य च नाम-प्रमस्तिष्कमेरुद्रवम् (Cerebro-spinal fluid) इति। बह्व्यस्तन्त्रिकाः मेरुरज्ज्वाः प्रस्थाय कृत्स्नं शरीरं व्याप्नुवन्ति। व्यवहारः सर्वोऽपि प्रेरणाज्जातः प्रतिक्रियारूपः इति ज्ञातमेव। प्रेरणसंवेदिनी (Receptor), प्रतिक्रियाकारिणी (Effector) तन्त्रिका च प्रान्ततन्त्रिकामण्डले अन्तर्भवतः। इमे उभे अपि मस्तिष्केण वा मेरुरज्ज्वा वा संबद्धे भवतः; या तन्त्रिका प्रेरणं मेरुरज्जुं मस्तिष्कं वा नयति तस्याः संवेदिनी इति नाम; केन्द्रतन्त्रिकामण्डलात् या पेशीं प्रति ग्रन्थिं प्रति च प्रतिक्रियार्थामाज्ञां गृहीत्वा गच्छति तस्याः अपवाहिनी अथवा प्रेरकतन्त्रिका इति नाम। तत्र संवेदिनीतन्त्रिकाणां मूलानि मेरुरज्ज्वाः पुरोभागे वर्तन्ते। मेरुरज्जुः अधःकायावयवानां कार्यकरणे केन्द्रायते; परमं प्रधानं कार्यमन्यदेव; इयं मेरुरज्जुः प्रान्तादागतं आवेगं मष्तिष्काय, मस्तिष्कादागतां आज्ञां प्रान्ताय च नयति।

## प्रान्ततन्त्रिकामण्डलम्

कृत्स्ने शरीरे शरीरप्रान्तावधि व्याप्य वर्तमानाः सर्वा अपि तन्त्रिकाः अधिकृत्य प्रवर्तते इदं तन्त्रम्। शरीरं कृत्स्नं अत्यधिकसूक्ष्मतन्त्रिकाभिर्व्याप्तं वर्तते। एता एव तन्त्रिकाः बाह्यं सर्वमप्यावेगं (Impulses) संविदन्ति; मस्तिष्कं प्रति




10. तन्त्रिकाव्यापारः*

1. कारकतन्त्रिका, Effector (muscle); 2. अपवाहिनी, Motor (efferent) neuron; 3. अधःस्थितापवाहिनीमूलम् Ventral (Motor) root; 4. संवेदिनी, Receptor (Skin); 5. मेरुतन्त्रिका, Spinal nerve; 6. संवेदनाभिवाहिनी, Sensory (afferent) neuron; 7. पश्चात्स्थित संवेदनतन्त्रिका मूलम्, Dorsal (sensory) root; 8. संयोजकतन्त्रिका, Connector neuron.

---

*Figures 10 & 11. From NORMAN L. MUNN'S *Psychology, The fundamentals of Human Adjustments*, by the kind permission of HOUGHTON MIFFLIN COMPANY, BOSTON.

नयन्ति च । याः विदन्ति अथवा आवेगं गृह्णन्ति ताः संवेदिन्यो[1] भवन्ति । तासां तन्त्रिकाणां पश्चात् स्थिताः याः तन्त्रिकाः आवेगं प्रथमं मेरुरज्जुं प्रापय्य पश्चात् मस्तिष्कं प्रापयन्ति तासां नाम अभिवाहिन्यः[2] इति । एता अपि संवेदिन्य इति




11. तन्त्रिकाद्वयम् ।

वामभागे संवेदिनी, दक्षिणभागे कारिका च वर्तेते । आवेगश्च (Impulse) कथं गच्छतीति बाणचिह्नेन प्रदर्शितम् ।

1. **संवेदिनी**, Receptor; 2. **पेशीतन्तुकाः**, Muscle fibre; 3. **कारिकाः**, effector; 4. **मैयेलिन् पिधानम्**, Myelin sheeth; 5. **अक्षः** Axon; 6. **केन्द्रकम्**, Necleus; 7. **अन्तर्ग्रथनम्**, Synapse; 8. **प्रतानिका**, Dendrites.

---

1. संवेदिनी—संग्राहिका इत्यप्युच्यते-Receptors—Sensory nerves.
2. अभिवाहिन्यः-Afferent.

व्यवह्रियन्ते । याः तन्त्रिकाः मस्तिष्काज्ञां गृहीत्वा मेरुरज्जुं प्राप्य तदनन्तरं येनावयवेन कार्यं कर्तव्यं वर्तते तमवयवं प्रति आदेशं नयन्ति, तासां आज्ञानेत्रीणां तन्त्रिकाणां अपवाहिन्यः[1] इति नाम । याः तन्त्रिकाः अन्ते आज्ञां अनुतिष्ठन्ति तासां कारिकाः[2] अथवा प्रेरकतन्त्रिकाः[3] इति नाम । पेश्यः ग्रन्थयश्च प्रेरिकास्वन्तर्भाव्यन्ते यतः कारकतन्त्रिकाः एतेषां साहाय्येनैव कार्यमन्ततो निर्वर्तयितुं शक्नुवन्ति । मेरुरज्जौ संवेदिनीः प्रेरकतन्त्रिकाश्च या तन्त्रिका संयोजयति तस्याः नाम संयोजिका[4] इति । दशमं चित्रं विलोकनीयम् ।

प्रतिवर्तक्रिया[5] कथं जायत इत्युच्यते । प्रतिवर्तक्रिया चाविदितं द्रुततरं च जायते, यतः तन्त्रिका, पेशी, ग्रन्थिश्च स्वत एव प्रेरणानुगुणमविलम्बं चेष्टन्ते । परागे वाताधूते सति अक्ष्णोः निमीलनं स्वतो जायते इति इदमत्रोदाहरणम् । साधारणक्रियाकाले तु प्रेरणानुगुणं प्रतिक्रिया विचिन्त्य क्रियते । शुनि भषति, विचिन्त्य अन्यत्र वा गम्यते, लोष्टेन वा सन्ताड्य सः विद्राव्यते । अत्र श्वभषणसन्देशः मस्तिष्कं प्रापय्यते; ततश्च मस्तिष्काज्ञानुसारं कर्म क्रियते । प्रतिवर्तक्रियायां क्रिया मेरुरज्जुत एवोद्भवति । एतादृशप्रतिवर्तक्रियाकरणे संवेदिनी, मेरुरज्जुः, प्रेरकतन्त्रिका इति इदं त्रितयमपेक्ष्यते । त्रितयस्य समुदितं नाम प्रतिवर्तचापः[6] इति । उदाहरणान्तरमुच्यते । सूच्या अङ्गुल्यग्रे विद्धे संवेदिनी आवेगं गृह्णाति । अभिवाहिनी तु तं मेरुरज्जुं मस्तिष्कं च प्रापयति । मस्तिष्केण दीयमाना आज्ञा अपवाहिन्या मेरुरज्जुं प्राप्य ततः अङ्गुल्यग्रं प्राप्नोति । प्रेरकतन्त्रिका च पेशीसाहाय्येन अङ्गुल्याकुञ्चनं संपादयति । एतत्सर्वं सहस्रधा विभक्तस्य क्षणस्य एकोनविंशतिभागे (·019 of a second) जायते ।

---

1. अपवाहिन्यः-Efferents.
2. कारिकाः (प्रेरिकाः) - Effectors.
3. प्रेरकतन्त्रिकाः-Motor nerves.
4. संयोजिका - Connetor.
5. प्रतिवर्तक्रिया - Reflex Action.
6. प्रतिवर्तचापः Reflex Arc.

## स्वतन्त्रतन्त्रिकातन्त्रम्

इदं तन्त्रिकाजातं सामान्यतः मनुजस्य वशे न वर्तते । केन्द्रतन्त्रिकामण्डलेन सम्बद्धमपीदं प्रायशः स्वातन्त्र्येणैव स्वकीयं कार्यं करोति । अत्र उपयुक्तानां तन्त्रिकाकोशाणूनां समुदायः गुच्छिकारूपेण (Ganglion) निष्पन्नः, मेरुरज्जोः पृथग्भूत्वा तस्याः उभयोः पार्श्वयोः वर्तते । एताः तन्त्रिकागुच्छिकाः शृङ्खलागतवलयवत् परस्परं सम्बद्धाः वर्तन्ते । अधोभागे च शृंखले संबद्धे स्तः; मस्तिष्कभागे च मेरुशीर्षेण मध्यमस्तिष्केण साक्षाद्वा परम्परया वा, मेरुरज्जुद्वारा च संयुक्ते । अस्मदिच्छायाः अविषयीभूतानां श्वसन-जरण-रक्तप्रवहणादीनां श्वासकोश-उदर-हृदयाद्यन्तरवयवकार्याणां निर्वाहः अस्य तन्त्रिकातन्त्रस्य मुख्यं कार्यम् । अनेन निरूढकार्यो मनुजः अन्येषु कार्येषु बुद्धिं प्रवर्तयितुं शक्तः स्यात् । यदि श्वसनमपि प्रयत्नकर्तव्यं स्यात् तर्हि अन्यकार्यकरणे नरस्य अवकाश एव न लभ्येत । सनाळ-विनाळग्रन्थीनां केषांचित् कार्यमपि एतदायत्तमेव । संवेगेन, दृढतरपरिश्रमेण, बाह्यशीतोष्णस्थितिपरिवर्तनेन, एतेषां अवयवानां कार्येषु यः तरतमभावो जायते, स सर्वोऽपि स्वतन्त्रतन्त्रिकामण्डलेन प्रहितस्यावेगस्यानुगुणं भवति । मेरुरज्ज्वाः पार्श्वे स्थितमिदं तन्त्रिकामण्डलं तत्कृतकार्यानुगुणं [1]अनुकम्पितन्त्रिकामण्डलं [2]सहानुकम्पितन्त्रिकामण्डलमिति द्वेधा विभज्यते । सहानुकम्पितन्त्रिकामण्डलं मस्तिष्कभागे, मेरुरज्ज्वाः अन्तिमभागे च वर्तते । मस्तिष्कभागे स्थितस्य [3]कपालतन्त्रिका इति नाम ; अधोभागे स्थितस्य [4]त्रिकतन्त्रिका इति । मेरुरज्ज्वाः मध्यभागे अर्थात् अनयोरुभयोः सहानुकम्पितन्त्रिकयोः मध्ये वर्तते अनुकम्पितन्त्रिका मण्डलम् ।

---

1. Sympathetic part.
2. Parasympathetic part - परानुकम्पितन्त्रिकातन्त्रं इत्यपि नाम वर्तते अस्य ।
3. Cranial Autonomic nerves.
4. Sacral Autonomic nerves.




12. अनुकम्पि-सहानुकम्पि-संस्थानम्

तत्र मध्यमस्तिष्कं, मेरुशीर्षं च मेरुरज्जुद्वारा तन्त्रिकागुच्छिकाद्वारा (Ganglionic chain) च अनुकम्पितन्त्रिकातन्त्रं क्रियाशीलं करोति। अर्थात् अनुकम्पितन्त्रिकाविषये मेरुशीर्षं, मध्यमस्तिष्कं च मध्यभागीयमेरुरज्जुद्वारा तत्सम्बद्धतन्त्रिकागुच्छद्वारा च कर्म कुरुतः। सहानुकम्पितन्त्रिकाविषये तु ते उभे अपि आत्मानं शरीरावयवैः सह संयोजयतां तन्त्रिकातन्तुकानां (Nerve fibres) द्वारा कर्म कुरुतः। अनुकम्पितन्त्रिकामण्डलस्य कार्यं सहानुकम्पितन्त्रिकामण्डलस्य कार्यं च परस्परं विरुद्धे भवतः। सहानुकम्पितन्त्रिकामण्डलं मनुजस्य स्वास्थ्यावस्थायां जीवनापेक्षितं कार्यं श्वसनजरणादिकं निर्वर्तयति। अनुकम्पितन्त्रिकामण्डलं तु, आपदि, संवेगकाले च मनुजस्यात्मरक्षणाय यादृशं बलादिकमपेक्ष्यते, तादृशबलोत्पादनाय जरणं विरमय्य हृदयपरिस्पन्दमधिकं कुर्वत् बलमुपोद्बलयत् नरस्य साहाय्यमाचरति। केचन तु इमे उभे अपि मण्डले मनुजस्य साहाय्यकरणे परस्परप्रतिपूरके (Complementary) भवतः इत्यप्यभिप्रयन्ति।

## तन्त्रिकायाः स्वरूपमथवा संस्थानम्

तन्त्रिकैका बहुभिः तन्त्रिकाकोशिकाभिः (Neurons) आरचिता वर्तते। अतिसूक्ष्माः एताः विभिन्नदैर्घ्यवत्यो दृश्यन्ते। मनुजशरीरे 10,000,000,000 तन्त्रिकाकोशिका वर्तन्त इति सम्भाव्यते। एकैकस्यामपि तन्त्रिकाकोशिकायां मुख्यो भागः केन्द्रको (Nucleus) भवति। तदनुबद्धत्वेन प्रतानिका (Dendrite) इति अक्षतन्तुः (Axon) इति च भागद्वयं वर्तते; तत्र काश्चन प्रतानिकाः दीर्घा वर्तन्ते। एवं अक्षतन्तवश्च केचन अतिदीर्घा भवन्ति। प्रतानिका चातिसूक्ष्मा लताप्रतान-सदृशी, तन्त्रिकायाः संवेदिनीभागाभिमुखी वर्तते; अक्षतन्तुश्चान्ते शाखात्मना विभक्तो भवति। अक्षतन्तुं परितः आच्छादन (sheath)-द्वयं वर्तते। प्रतानिका




13. तन्त्रिकाकोशिका*

1. केन्द्रकः - Cell Body,
2. अक्षतन्त्वग्रम् - Axon ending,
3. अक्षतन्तुः - Axon,
4. प्रतानिका - Dendrite.

---

* Adapted from Rex and Margaret Knight : *A Modern Introduction to Psychology.*

अक्षतन्तुश्च विभिन्ने कार्ये कुरुतः। प्रतानिका आवेगं (Impulse) तन्त्रिका-कोशकेन्द्रकं प्रति एव नयति, केन्द्रकात् आवेगं अक्षतन्तुः बहिः अपरां तन्त्रिकाकोशिकां प्रति नयति; एवं चेदं ज्ञायेत यत् एकस्यां तन्त्रिका-कोशिकायां सर्वदा आवेगाः एकस्यामेव दिशि गच्छन्ति। अर्थात् प्रतानिकातः अक्षतन्तुं प्रत्येव गच्छन्ति, न तु वैपरीत्येन इति। एवं गच्छन्तः आवेगाः वैद्युतरासायन (Electro-chemical)-धर्मवन्तो गण्यन्ते। उभे तन्त्रिकाकोशिके परस्परं न स्पृशतः। अनयोर्मध्ये अतिसूक्ष्मः कश्चनावकाशो वर्तते। अस्याव-काशस्य नाम अन्तर्ग्रथनम् (Synapse) इति। आवेगाश्च अन्तर्ग्रथनभागमुत्प्लवेना-तीत्य अपरां तन्त्रिकाकोशिकां प्राप्नुवन्ति।

## पेश्यः[1] ग्रन्थयश्च[2]

पेश्यः ग्रन्थयश्च प्रेरकतन्त्रिकामण्डले अन्तर्भाविता वर्तन्ते, यतस्ते एव प्रेरणानुगुणं कार्यं कुर्वन्ति। पेश्यः एव शरीरावयवान् क्रियाशीलान् कुर्वन्ति। पेश्यश्च संकोचविकासशीलाभिः पेशीकोशिकाभिर्निर्मिता वर्तन्ते। यदा प्रेर्यते क्रियायै तदा पेशीं तद्गता कापि शक्तिः संकोचयति। यदा च प्रेरणा विरता तदा पेशी संकोचं परित्यज्य पूर्वावस्थां प्राप्नोति; पेश्यः, रेखांकिताः (Striped muscles), रेखाहीनाः (Non-striped muscles), हृदयपेशी (Cardiac muscle) इति त्रेधा वर्तन्ते। रेखाङ्किताः पेश्यः कण्डराभिः (Tendons) अस्थ्ना सह बद्धा वर्तन्ते। अस्थि च कार्यकरणकाले उत्तोलकवत् (Lever) कार्यमाचरति। चलन-धावन-उत्पतन-सर्पण-क्षेपण-आकर्षण-उद्धरण-ऊर्ध्वस्थिति-रक्षणप्रभृतयः कायिकव्यापाराः सर्वेऽपि रेखाङ्कितपेश्या क्रियन्ते। एवं हस्त-पाद अंगुलि-नेत्राद्यवयवानां क्रियाकरणकौशलं पुरस्कृत्य एभिरवयवैः सम्भूय पृथग्वा भूत्वा यत् यत् कार्यं क्रियते तत्सर्वं रेखाङ्कितपेशीकार्यमेव। रेखांकितपेश्यः अस्मदधीना भवन्ति। अस्मदिच्छानुसारं प्रवर्तयितुं शक्यन्ते ताः। रेखाहीनास्तु

1. Muscles. 2. Glands.

पेश्यः असदनधीनाः। एतासां व्यापाराश्च नास्मद्बुद्धिगोचारा भवन्ति। एताः पेश्यः मन्दं समान्तरं च (Rhythmically) कार्यं कुर्वन्ति। श्वसनजरणादीन्यासां कार्याणि। हृदयपेशी च पूर्वोक्तपेशीभ्यां संस्थाने विभिन्ना वर्तते। अत्र पेश्यां रेखा वर्तन्ते, परं नातिस्पष्टाः। एतादृश्यः पेश्यः हृदयस्यान्तर्भित्तौ विलोक्यन्ते।

ग्रन्थयः, कानिचन रसायनद्रव्याण्युत्पाद्य विनियुञ्जाना भवन्ति। एते ग्रन्थिकोशिकाभिर्निर्मिताः। ग्रन्थिभिरुत्पादितः स्रावः, शरीरस्य पुष्ट्यै वृद्ध्यै आहारजरणाय शरीरौष्ण्यस्य समतासंपादनाय च अपेक्षितः। हृदयपरिस्पन्दे, रक्तप्रवहणे, लैङ्गिककार्ये, अनपेक्षितानां निष्कासने च स्रावस्यास्ति महान् प्रभावः। मनुष्यस्य विशिष्टेषु केषुचित् व्यवहारेषु, मानवप्रकृतेः समञ्जसतासम्पादने, तदीयव्यक्तित्वे च वर्तते परमं प्राधान्यं ग्रन्थिनिस्रावाणाम्।

ग्रन्थयश्च सनालाः (Duct) अनालाः (Ductless) इति द्विविधाः। ये ग्रन्थयः स्वकीयं स्रावं नालद्वारा निस्सार्य शरीरे तं तं प्रदेशं प्रति प्रेषयन्ति तेषां सनालग्रन्थय इति नाम। स्वेदग्रन्थयः (Sweat glands), लालाग्रन्थयः (Salivary glands), अश्रुग्रन्थयश्च (Tear glands) एतादृशाः। इतोऽपि मुख्यतरा अनालाः। यस्मादेते स्वकीयं स्रावं नालसाहाय्यं विना रक्ते साक्षात् प्रवेशयन्ति तस्मादिमे अनाला इति व्यपदिश्यन्ते। यतः एतेषां स्रावाः रक्तं प्रविश्य सर्वत्र सहसा प्रसरन्ति ततः मनुजस्य मनःकार्यं शारीरं कर्म चातितरां उपस्कुर्वन्ति। एतेषां ग्रन्थीनामपरं नाम अन्तःस्राविणः (Endocrine glands) इति। एतेषां स्रावस्य हार्मोन् (Hormone) इति नाम। एतान् ग्रन्थीन्, तत्स्रावान् तैरुत्पाद्यमानान् विकारांश्चाधिकृत्य विचारयत् विज्ञानं 'अन्तःस्राविविज्ञानम्' (Endocrinology) इति इदानीं प्रथितं वर्तते। एते ग्रन्थयः परस्परं सम्भूय तत्तद्धर्मानुगुणं अनुपातमनुसृत्य च कर्म कुर्वन्ति; न तु परस्परमसम्बद्धम्। शरीराभिवृद्धिः मानसाभिवृद्धिश्च स्रावाणामनुपातं सर्वथाश्रित्य वर्तते। एकैकोऽपि ग्रन्थिः युक्तपरिमाणमेव




14. ग्रन्थयः

1. पिनियल्—Pineal. 2. पिट्यूइटरी (पीयूष) ग्रन्थि:–Pituitary. 3. अवटु (गल)—Thyroid. 4. परावटु Parathyroid. 5. थैमस्—Thymus. 6. अतिवृक्क—Adrenal. 7. अग्न्याशय–Pancreas. 8. स्त्रियाः जननग्रन्थिः—Gonad. 9. अण्डौ :—Testes.

---

* Adapted from Asher, Tiffin and knight: *Introduction to General Psychology.*

स्रावं यावदपेक्षितमेव यदि निस्सारयेत् तदैव नरः साधारणस्वभावो भवति। सर्वसाधारण (Normal) व्यक्तित्वं च तदैव जायेत; यदि ग्रन्थयः अधिकमथवा न्यूनं स्रावं जनयेयुस्तर्हि व्यक्तित्वं मानवस्यान्यथा स्यात्। अनालग्रन्थीनां शरीरे तत्तत्स्थाने स्थितिः चतुर्दशे चित्रे विलोकयितुं शक्या। अवटुग्रन्थिः, परा-वटुग्रन्थिः, अधिवृक्कग्रन्थिः, पिट्यूयिटरी-ग्रन्थिः, जननग्रन्थिः इत्येते पञ्च अनाल-ग्रन्थिषु मुख्याः।

1. **अवटुग्रन्थिः** (Thyroid gland·)—पतङ्गाकारो गलस्यान्तः श्वास-प्रणालस्य (Windpipe) समीपे वर्तमानः ग्रन्थिरयं थैराक्सिन्-नामकं स्रावं निस्रावयति। अस्य फलं तु शरीरेण यावन्तौ उपचयापचयौ (Metobolism) अपेक्ष्येते तावतोः तयोः प्राप्तिरेव; भुक्तस्याहारस्य शरीराभिवृद्धिकरणे, मनुजस्य साधारणव्यवहारेषु च अनुपातं संपादयति। यदायं ग्रन्थिः न्यूनक्रियो भवति, तदा मनोमान्द्यं, मनःकार्येषु चिन्तनस्मरणादिषु च मन्दता, स्वतः कार्येष्वप्रवृत्तिः, अनिश्चयः, अशान्तिः, तदा तदा अतिकोपः, क्षुधानाशः, स्वापशीलत्वं, शरीरभाराधिक्यं च जायेरन्। यदायमतिक्रियः तदा मनुजमतिक्रियाशीलमतिक्षुधितं, अविश्रमिणं, अनिद्रं, कृशम् च करोति। इदमवस्थाद्वयमपि भिषग्भिः क्रियमाणयोचितया चिकित्सयापसार्येत। बाल्यावस्थायां यदि स्रावः न्यूनः स्यात् तर्हि बालो वामनः (Cretin), कुरूपः, मन्दमतिश्च भवेत्। प्रवयस्सु स्रावन्यूनता श्वयथुं (Myxoedema) जनयेत्। अस्यां दशायां पादौ हस्तौ च उच्छूना भवन्ति। त्वक् च रूक्षा।

2. **परावटुग्रन्थयः** (Parathyroid gland) एते चत्वारः श्वेतवर्णाः अवटुग्रन्थेः उपरि वर्तन्ते। एषां स्रावाः मनसः शान्तिं जनयन्ति। स्रावस्य न्यून-तायां अपतानकं स्तब्धता च (Tetany and Cramps) जायेत। न्यूनता, सुधा (Calcium)—ग्रहणेन स्रावस्वीकरणेन च परिहरणीया। आधिक्यमतिनिद्रां जनयेत्।

3. **अधिवृक्कग्रन्थी** (Adrenal gland)— उभयोरपि वृक्कयोः (Kidneys) शिरसि वर्तेते इमौ उभौ ग्रन्थी। एकैकोऽपि, बाह्यत्वचिका (Cortex)

अन्तर्भाग : (Medulla) इतिभागद्वयात्मकः। बाह्यत्वचिका मनुजजीवनस्यात्यन्तापेक्षितं कोर्टिन् (Cortin) - नामकं स्रावं निस्स्रावयति। बाह्यत्वचिकायाः नाशे प्रायो मृतिरेव स्यात् मनुजस्य। स्रावस्य न्यूनता पेशीबलहीनतां, रक्तवेगं (blood-pressure), जरणदोषं, अतिश्रान्तिं, रोगनिरोधकशक्तिह्रासं च जनयति। स्रावस्य आधिक्यं च पुंसु पुंस्त्वधर्मान् अतिवर्धयेत्। आधिक्ये स्त्री सौन्दर्यहीना रूक्षस्वरा श्मश्रुमुखी च जायते।

अन्तर्भागश्च अड्रेनलिन् (Adrenaline) - नामकं स्रावं जनयति। अयं स्रावः कोपभीत्यादिसंवेगकाले अधिको भवति। अनुकम्पितन्त्रिकाभागेनैवं स्रावस्याधिक्यमुत्पाद्यते। स्रावोऽयं हृदयपरिस्पन्दं, रक्ते शर्करां, रक्तवेगं, पेशीषु श्रान्त्यभावं, श्वासावयववैशाल्यं, तात्कालिकजरणविरतिं चोत्पाद्य, आपद्यात्मनो रक्षणाय मानवं अपेक्षितबलयुक्तं करोति। शरीरान्निर्गतस्यापि रक्तस्य निर्गमनमार्गे एव घनीभावं आपाद्य रक्तस्रावं निरुणद्धि। साधारणे काले अयं स्रावः अल्प एव वर्तते। असाधारणे काले तु अधिकाधिकं निस्सृतो भवति। अपेक्षितात् न्यूनीभूतोऽयं स्रावः नरं अनुत्साहिनं आपदि कार्यकरणे इतिकर्तव्यतामूढं च करोति। अधिकस्तु स्रावः नरमत्युत्साहिनं प्रत्याशावन्तं (Optimistic) स्वतः कार्यारम्भसमर्थं (Initiative) च करोति।

4. **पिट्यूयिटरिग्रन्थिः** (Pituitary gland) अयं ग्रन्थिः शिरसः मध्ये मस्तिष्कस्याधोभागे वर्तते। बाह्यः आभ्यन्तरः इति अस्य द्वौ भागौ। बाह्यभागात् जायमानः स्रावः शरीराभिवृद्धिं रक्षति। रक्तवेगं वृक्ककार्यं च नियमयति। अधिकः स्रावः बाल्ये जायमानः राक्षसाकारं (Gigantism)जनयेत्। अनेन विकृताः नराः सप्ताष्टपदोच्छ्राययवन्तो भवन्ति। युवसु जायमानः, विकृतमाकारं जनयेत्। दन्तुरत्वं दीर्घनासत्वं निर्गच्छन्नासत्वं ( Protruding nose ) महाहनुत्वं चोत्पादयेत्। न्यूनः स्रावः वामनत्वं जनयेत्; न तु बुद्धिमान्द्यम्। आभ्यन्तरभागीयस्रावस्तु न तथा प्रधानः यथा बाह्यस्रावः। अयं स्रावः मूत्रस्रावं अनैच्छिकपेश्याः ( Involuntary muscles ) संकोचादिकं च निय-

मयति। अयं ग्रन्थिः न केवलं पूर्वोक्तौ स्रावौ स्रावयति किन्तु अन्यानपि काश्चन स्रावान् स्रावयति ये थैरायड्प्रभृतीनां अन्येषां ग्रन्थीनां कार्यमपि समीचीनं प्रवर्तयन्ति। अत एवायं ग्रन्थिः ग्रन्थिराजः (Master gland) इति व्यपदिश्यते।

5. **जननग्रन्थिः,** (Sex gland) **अन्ये ग्रन्थयश्च।** जननग्रन्थिः बहून् स्रावान् जनयति। एते एव लैङ्गिकधर्माणां बहूनामाविर्भावे हेतवो भवन्ति। थैमसूनामकः ग्रन्थिः वक्षसोऽस्थ्नः पश्चाद्भागे स्थितः किं कार्यं करोतीति विशिष्य न ज्ञायते। पिनियल्ग्रन्थिरपि मस्तिष्कस्य पश्चाद्भागे वर्तते। तत्कार्यमधिकृत्य नातिविदितमिदानीम्।

मनःकार्यं सर्वं शरीरावयवानाश्रित्य वर्तते। ततश्चोपाध्यायाः छात्राणां मनोविकासे शरीराभिवृद्धौ च श्रद्धां प्रदर्शयेयुः। 'शोभने शरीरे शोभनं मनः' इति वर्तते जनश्रुतिः। अत एवाधुनिकशिक्षापद्धतौ छात्राणां शरीराभिवृद्ध्यर्थं बहवः प्रयत्नाः आदृताः वर्तन्ते। क्रीडादीनामपि तत एव प्राधान्यमिदानीम्। प्रतिसंवत्सरं पाठशालासु भिषग्भिः छात्राणामारोग्यविषये चिकित्सापरीक्षा (Medical test) कर्तव्या। दोषाणामपनयनाय पाठशालायामेव पाठशालाचिकित्सालयः (School clinic) व्यवस्थापनीयः। शरीरस्वास्थ्यज्ञानं चैकैकस्यापि छात्रस्यावश्यं देयम्। मध्याह्नभोजनदानव्यवस्थापि इदानीं केषुचित् राष्ट्रेषु कृता सन्तुलिताहारदानेन बालानामारोग्यं पुष्टिं च लक्ष्यीकृत्य वर्तते। इदमपरं मनसि धर्तव्यमुपाध्यायैः यत् केषांचित् दुष्टानां चिह्नानां बालेषु दर्शनेन, उपाध्यायैः तत्र निदानं स्वयमेव न निश्चेतव्यम्; किन्तु दोषसत्तासंशये पितृभ्यो निवेद्य चिकित्साकुशलैः भिषग्भिः क्रियमाणा चिकित्सा सम्पादनीया इति।

## इन्द्रियाणि - संवेदनानि च।

तन्त्रिकामण्डलमेवास्मान् बाह्यपरिवेषेण संयुनक्ति। बाह्यप्रेरकानुगुणमेवास्माभिः चेष्ट्यते। बाह्यप्रेरकाश्च विभिन्ना वर्तन्ते। केचन सुखप्रदाः केचनासुख-

प्रदाः—शोभनो गन्धः, सुन्दरं किमपि वस्तु, कस्यापि भोज्यस्य रुचिरा रुचिः, सुखकरं मधुरं गीतम्, सुखस्पर्शो वात इति वर्तन्ते सुखप्रदाः पदार्थाः। एतैः संपर्के जाते प्रवृत्तयः काश्चन भवन्त्यस्मासु। एभिः संपर्कश्च तन्त्रिकाद्वारैव जायते इति, ततश्च ज्ञानमिति च, जानीमः। याभिः तन्त्रिकाभिः संवेदनमुत्पाद्यते तासां नाम संग्राहिकाः (Receptors) इति विदितमेव। एताश्च तत्तदिन्द्रियेषु वर्तन्ते इति सामान्यतो वक्तुं शक्यम्।

मानवानां पञ्चेन्द्रियाणि वर्तन्ते इति पूर्वकाले व्यजानन्। आधुनिका मनोवैज्ञानिकाः, एतेभ्योऽतिरिक्तानां, गतिसंवेदकम् (Kinesthetic sensation), स्थैतिकम् (स्थितिसंवेदकम्) (Static), आङ्गिकम् (Organic) इति, त्रयाणामिन्द्रियाणां सत्तामङ्गीकुर्वन्ति। इतोऽप्यधिकानि इन्द्रियाणि वर्तन्ते, परं निष्कृष्टतया तानि न विदितानीति मनोविज्ञानिनो मन्यन्ते।

एकैकमपि इन्द्रियं स्वस्वासाधारणमेकमेव विषयं संवेत्ति। तत्रापि संविदितस्य पदार्थस्य गुणानां तरतमभावमपि ज्ञातुमिन्द्रियं प्रभवति। मधुरं मधुरतरं च गीतम्, कर्णशूलदं अन्यं कमपि शब्दं च श्रवणेन्द्रियमेव विविच्य जानाति। एवं वर्णप्रकर्षं तदप्रकर्षं च चक्षुर्ज्ञातुं शक्नोति। निश्शब्दे स्थाने उषितवतो मनुजस्य सशब्दे स्थाने निवासः प्रथमं कष्टः स्यात्। पश्चात्तु स एव मानवः कष्टं न विजानीयात्। अत्र निदानमिदमेव—इन्द्रियाणां तादृशी अभ्यनुकूलनशक्तिः वर्तते; तया च शक्त्या अनारतं जायमानेनापि शब्देन श्रवणेन्द्रियस्य न कापि पीडा जायते। श्रवणेन्द्रियं आत्मानं परिवेषानुगुणं अभ्यनुकूलं संपादयति। ततश्च क्लेशो नोत्पद्यते मानवस्य। अस्या दशाया नाम इन्द्रियाभ्यनुकूलनम् (Sensory adaptation) इति।

अस्माकं जायमानं ज्ञानं प्रायशः चक्षुषा श्रोत्रेण च जायते। अत एवोक्तम् —'सर्वेन्द्रियाणां नयनं प्रधानमि'ति। यथा नयनं तथा श्रवणेन्द्रियमपि ज्ञानोत्पादने प्रधानं भवतीति अनयोरिन्द्रिययोः स्वरूपं स्वभावं चाधिकृत्योपाध्यायैः ज्ञातव्यमेव।

## अक्ष्णः संस्थानं तत्कार्यं च ।

नेत्रं कृत्स्नमपि कपालास्थिकोटरे वर्तते यतः तत्रैव स्थितमिदं सुष्ठु रक्षितं स्यात्। पुरोभागे नेत्रच्छदेन (Eyelid) रक्ष्यते। नेत्रच्छदः अन्तर्भागे मसृणत्वचा युक्तः। इदं मृदुत्वगावरणं नेत्रगोलकेन संबद्धम्। अस्य मृदुत्वगावरणस्य नेत्रश्लेष्मला (Conjunctiva) इति नाम। अश्रुग्रन्थितः निस्सृतेन जलेनेयं श्लेष्मला सर्वदा आर्द्रा रक्ष्यते। अश्रु, नेत्रगोलचलनं च, यदृच्छया वातादिभिः चक्षुषि पातितान् परागादीन् नेत्रात् अपनयतः।

नेत्रं गोलाकारं वर्तते। अथापि पुरोभागे ईषत् पुरोगतं घूर्णने शक्तं च। अक्षिभित्तिः आवरणत्रयवती। 1. श्वेतपटलम्, स्वच्छमण्डलं च (Sclera, Cornea) 2. रञ्जितपटलम्, परितारिका च (Choroid–Iris) 3. दृष्टिपटलम् (Retina)।

1. तत्र **श्वेतपटलं** दृढतरं सत् नेत्रमुपघातेभ्यो रक्षति। इदमेव प्रथमं बाह्यमावरणम्। अस्य विदारणे नेत्रसंरक्षणमतिश्रमसाध्यम्; इदमेव पटलं अक्ष्णः पुरोभागे पारदर्शकं (transparent) सत् स्वच्छमण्डलमिति नाम प्राप्नोति।

2. **रञ्जितपटलम्** श्वेतपटलस्य दृष्टिपटलस्य च मध्ये वर्तते यत्राति-सूक्ष्माणि रक्तनालानि वर्तन्ते। अस्यान्तस्तरः कृष्णवर्णो बभ्रुवर्णो वा स्यात्। अत एवास्य रञ्जितपटलमिति नाम। स्वच्छमण्डलस्य पश्चाद्भागे लेन्सस्य (Lens) पुरोभागे, अर्थात् स्वच्छमण्डलस्य लेन्सस्य च मध्ये-, परितारा (Iris) वर्तते। इयं परितारा पूर्वं निर्दिष्टेन रञ्जितपटलेन सम्बद्धा तदवयवभूता वर्तते। पेशीकृतकृशयवनिका-सदृशी इयं मध्ये सच्छिद्रा च विद्यते। अस्य द्वारस्य नाम कनीनिका अथवा तारा इति। इयं परितारा तनुपटसदृशी भूत्वा ताराया: आकृतिं नियमयति। अन्तः-प्रविशतः प्रकाशस्य च नियन्त्रणमनया क्रियते।

3. **दृष्टिपटलम्** (Retina) - इदमेवान्तःस्थितं तृतीयं आवरणम्। अतिमृदु, अतिमात्रसंवेदनशीलं च। अस्य स्थौल्यं एकस्य इञ्च्-इत्यस्य अशीतिधा

विभक्तेषु भागेषु एकस्य यावत् स्यात् तावत् (1/80th) भवति। अत्र बहवः शलाकाः (rods) शंकवश्च (cones) परस्परं संबद्धा वर्तन्ते। यद्यपि संवेदनशीलत्वं कृत्स्नस्यापि दृष्टिपटलस्य स्यात्, अथापि अत्र पीतबिन्दुरिति (Yellow spot) कश्चन




15. चक्षुः

1. रोमाभपेशी - Ciliary muscle, 2. परितारिका - Iris,
3, कनीनिका - Pupilary opening, 4. स्वच्छमण्डलम् - Cornea,
5. नेत्रोदः - Aqueous homour, 6. काचः - Lens,
7. अवलम्बनस्नायुः - Suspensory ligaments,
8. श्वेतपटलम् - Sclerotic coat, 9. दृष्टिपटलम् - Retina,
10. पीतबिन्दुः - Fovea, 11. अन्धबिन्दुः - Blind spot,
12. चाक्षुषतन्त्रिका - Optic nerve, 13. रञ्जितपटलम्-Choroid coat.

भागो विशिष्य संवेदनशीलो वर्तते। अयं भागः ईषत् निम्नः पीतवर्णश्च। अत एव पीतबिन्दुरिति प्रथा। दृष्टिपटलात् कृत्स्नादपि अनेकसंख्याकाः तन्त्रिकाः (nerves) समुदिताः अक्षिगोलस्य पश्चाद्भागे वर्तन्ते। आसां सामान्यं नाम दृष्टितन्त्रिका (Optic nerve) इति। इयं मस्तिष्कस्य पश्चाद्भागे अनुषक्ता वर्तते।

## अक्षिगताः पदार्थाः

काचस्य (लेन्स्) तारामण्डलस्य च मध्ये नेत्रोदो (Aqueous humour) वर्तते। पारभासकः सान्द्रः पारदर्शकसंपुटनिक्षिप्तः स्फटिककाचः (Lens) नेत्रोदस्य पश्चाद्भागे वर्तते ; उभयोः पार्श्वयोरुत्तलश्च। अस्य पश्चाद्भागे अक्षिगोलस्यान्तर्भागः विट्रियस्-ह्यूमर् (Vitreous humour)-नामकेन पारदर्शकद्रवद्रव्येण पूर्णः अक्षिगोलस्य पञ्चसु भागेषु भागचतुष्टयं पूरयति। इदं द्रवद्रव्यम् काचखण्डं स्वाकारं सम्यक् अविकृतं रक्षितुमुपकरोति। षट् पेशीरज्जवः अक्षि परितो वर्तन्ते। एताः नेत्रगोलस्य चालने उपकुर्वन्ति। रज्जोः नाम ऋजुपेशी (Rectus) इति।

उत्तल (Convex) काचखण्डं किमपि आतपे निधीयते चेत् तर्हि इदं तत्र दृष्टं स्यात्। तत्र प्रविशन्तः सूर्यकिरणाः काचखण्डस्य पश्चाद्भागे संकलिता भवन्ति। तत्र प्रकाशः औष्ण्यं चाधिकं दृश्यते। अनेन ज्ञायेत यत् यदा प्रकाशकिरणाः उत्तलकाचखण्डद्वारा गच्छन्ति तदा ते एकत्र मुकुलिताः (संकलिताः) भवन्तीति।

दीपः कश्चन अन्धकारपूर्णे कोष्ठे उत्तलकाचखण्डस्य पुरतः यदि धार्येत, तर्हि उत्तलस्य पश्चाद्भागे यवनिकायां ज्वालायाः रूपं अपवर्तितं (Inverted) भवति। अनेनेदं विज्ञायेत यत् किरणाः उत्तलद्वारा गच्छन्तः व्यतियन्ति इति। चक्षुषि दृष्टिपटलमेव यवनिकायते। इयं यवनिका पुरतः पश्चाद्वा न चलति। यदा वयं कमपि दण्डं पश्यामस्तदा दण्डोपरिभागे पतिताः रश्मयः दण्डात् परावृत्य अस्मच्चक्षुषि काचखण्डद्वारा प्रविशन्तः पीतबिन्दुभागे संकलिता भवन्ति। दण्डस्य अन्येषु भागेषु पतिताः किरणा अपि दृष्टिपटले एव संकलिता भवन्ति। तत्रापि रूपस्य व्यत्ययनं जायते। अत्र दृष्टिपटले पतन् प्रकाशः चाक्षुषतन्त्रिकाभिः मस्तिष्कं प्रति नीयते। ततश्च प्रत्यक्षं भवति। वामनेत्रगोलस्य दक्षिणमस्तिष्कभागेन, दक्षिणगोलस्य वाममस्तिष्कभागेन च सम्बन्धः कृतो वर्तते तन्त्रिकाद्वारा। रूपप्रत्यक्षमधिकृत्य एतावदेव वक्तुं शक्यम्।

## स्वतः समायोजनम् (Accommodation)

नेत्रं सुदूरस्थं नक्षत्रं, अन्तिकस्थं मशकमपि द्रष्टुं शक्नोति। दूरदर्शने निकटदर्शने च सामर्थ्यं काचखण्डस्योत्तलत्वपरिवर्तनेन भवति। इदं च परिवर्तनं काचखण्डसम्बद्धया रोमाभपेश्या ( Ciliary muscles ) क्रियते।

## दूरदृष्टिः (Long sight)

वार्धकेन, अन्येन वा केनापि कारणेन किरणसंकलनशक्तिः काचखण्डस्य नष्टा भवति; संकलिता अपि किरणाः दृष्टिपटलस्य पश्चाद्भागे पतेयुः। इयमवस्था अक्षिगोलस्योचितदैर्घ्याभावेऽपि जायते। दूरवर्तिपदार्थानामेव दर्शनं स्यादत्र। अत एव पत्रादिकं दूरतो निधाय पठन्ति वृद्धाः। अस्या दशाया नाम दूरदृष्टिता इति। अत्र उत्तलकाचखण्डं धार्यम्। धृतेनोत्तलखण्डेन किरणा ईषत् संकलिताः चक्षुषि स्थितं काचखण्डं प्राप्नुवन्ति। तेनापि पुनः संकलिताः उचिते स्थाने पतन्ति। दर्शनं च जायते। केषांचित् वर्णविषये अन्धत्वं वर्तते। रक्तं श्वेतं पीतं च विभज्य ज्ञातुमशक्ता भवन्ति। अत्र निदानं वंशपरंपराधर्मः।




**16. बिम्बाविर्भावः**
1. **निर्दुष्टबिम्बनम्**
2. **दूरदृष्टिः**
3. **निकटदृष्टिः**

## निकटदृष्टिः ( Short sight )

केषांचित् नराणां काचखण्डस्य किरणसंकलनशक्तिः ( Refractory power) अधिका भवति। गोलश्च केषांचित् दीर्घाकारतां भजते। तस्मात्, संकलिताः किरणाः पीतबिन्दुस्थाने न पतेयुः। ततः पूर्वमेव क्वचित् संकलिता भवेयुः। अस्यां दशायां निकटवर्तिनां वस्तूनामेव दर्शनं स्यात्। अत एवास्या अवस्थाया नाम निकटदृष्टिता इति। एतद्दोषपरिहाराय अवतल(Concave

lens )-काचखण्डधारणं कार्यम् । अस्य काचस्य धारणेन किरणाः अपसारिणो भूत्वा पश्चात् यथास्थानं संकलिता भवन्ति ।

## श्रोत्रम्

ज्ञानप्राप्तौ चक्षुर्वत् प्रधानमन्यदिन्द्रियं श्रोत्रं भवति । श्रोत्रेणैव सर्वं परितः प्रचलत् ज्ञायते । श्रोत्रं चक्षुरिति इदमुभयमिन्द्रियमप्राप्यकार्यकारि इति बुद्धानुगाः कथयन्ति । अप्राप्यकारि इत्यस्य वस्तुना सह साक्षात् संपर्कमप्राप्य वस्तुविषयकं ज्ञानं जनयति इत्यर्थः । तथा च यथा निकटस्थं तथा दूरस्थमपि विषयं जानातीत्यर्थः । मनोवैज्ञानिका अपि इदमुभयं दूरवर्तिग्राहकं-(Distance Receptor) इति निर्दिशन्ति । रसना त्वक् घ्राणं च प्राप्यकारीणि ; यथा प्रकाशतरङ्गाः चक्षुः प्रेरयन्ति एवं शब्दतरङ्गाः श्रोत्रमुद्बोधयन्ति । ततश्च शब्दप्रत्यक्षं जायते । जायमानज्ञानं प्रायशो बालानां श्रवणेनैव जायते इति श्रोत्रेन्द्रियस्वरूपं तत्कार्यं चाधिकृत्य ज्ञातव्यमेव । श्रोत्रस्यान्यदपि कार्यं वर्तते । आदिकालादारभ्येदमिन्द्रियं समावस्थिति (Equilibrium)-ज्ञानमपि ददत् आसीत् । जीवः सर्वोऽपि अनेनैवेन्द्रियेण "मम स्थितिः कथं वर्तते ? किमहं शयानः उपविशन् तिष्ठन् वा वर्ते" इति अजानात् । ततः क्रमशः शब्दज्ञानमपि अस्येन्द्रियस्य जातमित्यभिप्रयन्ति ।

कर्णः, बाह्यकर्णः मध्यकर्णः आन्तरकर्ण इति त्रेधा विभज्यते । अन्तर्मुखद्वारवती कर्णशष्कुली बाह्यकर्णः । कर्णशष्कुली च शब्दं गृहीत्वा तस्य अन्तः प्रेरणे उपकरोति । बाह्यकर्णस्यावधिः द्वारान्ते स्थिते कर्णपटहे समाप्तिमेति । पटहश्च (Ear-drum) पटहचर्मवत् कर्णशष्कुलीद्वारान्ते तिर्यक् विततो वर्तते । पटहस्य पश्चाद्भागे वर्तते मध्यकर्णः । अत्र शृङ्खलावत् परस्परं संबद्धाः तिस्रः श्रवण-अस्थिकाः (Auditory ossicles) वर्तन्ते । अस्थिकानां मुद्गरास्थिका—(Malleus)–स्थूणकास्थिका (Incus) वलयास्थिका (Stapes) इति क्रमेण नामानि । अस्याः शृंखलायाः एकः पटहस्य अन्तर्भागं स्पृशति । अपरः अन्तः आन्तरकर्णसम्बद्धमृदुलत्वचं (Membrane) स्पृशति । इयमेव त्वचा मध्यकर्ण–आन्तरकर्णयोः सीमा भवति ।

आन्तरकर्णे अवयवद्वयं प्रधानम् । अनयोः एकः श्रवणे उपयुज्यते । अपरश्च ऊर्ध्वस्थितौ । श्रवणोपयोगिनः अवयवस्य शंख (Cochlea=कर्णावर्तः) इति




17. श्रोत्रम्

1. बाह्यकर्णः - Outer ear, 2. बाह्यकर्णमार्गः - Outer ear passage,
3. बाह्यकर्णपटहः - Outer drum, 4. आन्तरकर्णपटहः (मृदुत्वचा)-Inner drum,
5. मध्यकर्णः - Middle ear,
6. अर्धवर्तुलनलिका - Semi-circular canal
7. श्रवणतन्त्रिका - Auditory nerve 8. अस्थिद्वारम् - Vestibule
9. शङ्खः - Cochlea 10. यूस्टाकियन्ट्यूब्-Eustachian tube.

नाम । अयं स्थलशङ्ख (Snail) - आकारः अस्थिद्वारस्य पुरतो वर्तते । अयं शंखाकारः श्रावणः सूक्ष्मावयवः सार्धवलयद्वयवान् । श्रवणेन्द्रियतन्त्रिकाः अस्य शंखस्यान्तर्भागे संबद्धाः वर्तन्ते ; अपरान्ते मस्तिष्केण । शंखस्यान्तः द्रवद्रव्यं किमपि वर्तते ।

अर्धवर्तुलाकाराः त्रयो वलयाः अस्थिद्वारस्य (Vestibule) पश्चाद्भागे स्थिताः, श्रवणे नोपयुज्यन्ते ; किन्तु ऊर्ध्वस्थितौ इति ज्ञातमेव । यूस्टाकियन्

ट्यूब् (Eustachian Tube) इति किञ्चन नालं मध्यकर्णं गलं च संयोजयति एतन्नालद्वारा वातः मध्यकर्णं प्रविश्य पटहचर्म सुस्थितं करोति ।

## श्रावणप्रत्यक्षम्

वादितया घण्टयोत्पादितः शब्दः वातद्वारा तरङ्गरूपेण सर्वासु दिक्षु प्रसरति । एते वात (शब्द) तरंगाः बाह्यकर्णद्वारा अन्तः प्रविश्य पटहमभिहत्य तत्र कम्पं जनयन्ति । अत्रोत्पादितः कंपः, मध्यकर्णास्थिषु कंपं (Vibration) उत्पादयति । एताः अस्थिकाः आत्मनि जातस्य कम्पस्येषत् स्पष्टतां (Concentration) आपाद्य आन्तरकर्णं प्रति प्रहिण्वन्ति । इयं स्पष्टता त्रिंशद्गुणा (Thirty times) क्रियते अस्थिकाभिः इत्युच्यते । अनेन कम्पनेन आन्तरकर्णे स्थिते द्रवद्रव्ये कंपः उत्पाद्यते च । द्रवद्रव्ये जातः कंपः अर्धवर्तुलाकारवलयत्रये तदनुवर्तिभूते शंखे कंपं जनयति । ततः शंखान्तःस्थितेषु केशसदृशेषु तन्तुकेषु ( Hairlike fibres ) विकृतिं जनयति । एते तन्तुकाः ‘ आधारकला ’ (Basilar membrane) इति व्यवह्रियन्ते । एभिः तन्तुकैः सम्बद्धा वर्तन्ते लघ्व्यः श्रवणतन्त्रिकाः याः अपरस्मिन् अन्तभागे मस्तिष्केण संयोजिता विद्यन्ते । ततश्च श्रावणप्रत्यक्षम् । द्वाभ्यां चक्षुर्भ्यां यथा प्रत्यक्षं स्पष्टं भवति तथा कर्णद्वयेन क्रियमाणं श्रवणमेव स्पष्टं श्रावणप्रत्यक्षं जनयेत् । ततश्चोपाध्यायैः यथा कक्ष्यायां स्थिताः सर्वे छात्राः सम्यक् शृणुयुः तथा अपेक्षितस्वरेण भाषितव्यम्; न मन्दस्वरेण । अत्युच्चस्वरेण भाषणं श्रवणशूलं जनयेत् । बालेषु यः कोऽपि बधिरः वर्तते किमित्यपि ज्ञातव्यम् । चिकित्सार्थमुपदेशश्च कार्यः ।

# चतुर्थोऽध्यायः

## जीवव्यवहारः, मूलप्रवृत्तयश्च

मनुजव्यवहारं विचारयत् शास्त्रं मनोविज्ञानमिति व्यवहारवादिनां मतम्। शिक्षा च तादृशव्यवहारस्य युक्तं रूपनापादयतीति गण्यते। परं व्यवहारपदस्य अर्थस्तु विविच्यावगन्तव्यो वर्तते। व्यवहारवादिनश्च अस्य पदस्यार्थं अतिसंकुचितं कथयन्ति। व्यवहारमधिकृत्य पूर्वमपि किंचिद् परिशीलितम्। तस्य शिक्षाविषये कीदृशं स्थानं वर्तते इति तत्स्वरूपज्ञानायात्र पुनरपि किञ्चिदुच्यते।

व्यवहारवादिषु प्रधानतमस्य **वाट्सन्** - महोदयस्य वचनमिदम्— "व्यवहारवादिनां सिद्धान्ते मनोविज्ञानं अन्तरवेक्षणं नापेक्षते। प्रयोगात् स्थावरादीनां दर्शनेन च यथा ज्ञानं प्राप्यते तथा जीवव्यवहारदर्शनेन तज्ज्ञानं प्राप्यते। भौतिकरसायनादिशास्त्रेषु यथा अन्तरवेक्षणस्य नास्त्युपयोगः एवमत्रापि नास्त्यावश्यकता तस्य। पशुपक्ष्यादीनां व्यवहारः, तद्गतभावानां ज्ञानं विनाप्यवगन्तुं शक्य इति सर्वसंप्रतिपन्नम्। यथा पशुपक्ष्यादीनां, एवमेव मनुजव्यवहारोऽपि परिशीलनीयः। तस्मादस्मदुक्तं 'व्यवहारपरिशीलकं मनोविज्ञान'मिति मनोविज्ञानलक्षणं सुस्थितमेव। पूर्वतनैरुक्तं लक्षणं प्रति गमनं नापेक्षितम्। चैतन्य-मानसीस्थिति - इच्छा - कल्पना-प्रभृतिपदानामुपयोगो नापेक्ष्यते अस्मच्छास्त्रे। प्रेरकप्रतिक्रियारूपेण अभ्यासोत्पादनरूपेण अभ्यासानां संश्लेषसंपादनरूपेण वा सर्वोऽपि व्यवहारः पूर्वोक्तः वर्णयितुं शक्यते" इति। वाट्सन्महोदयस्य व्यवहारमनोविज्ञानं बहिः स्पष्टं दृश्यमानं जीवव्यवहारं पेशीग्रन्थिप्रभृतिषु प्रेरकानुगुणं जायमानं सर्वं व्यवहारं च परिशीलयति। एवं सुधीरं वदन्तोऽपि व्यवहारवादिनः अपेक्षा-भीतिप्रभृतीन् मानसान् भावान् परित्यक्तुं न प्राभवन्। व्यवहारवादी **टाल्मन्** (E.C.Tolman) पूर्वोक्तान् भावानधिकृत्यैवमभिप्रैति—"यद्यप्येते भावाः वस्तुतः न वर्तन्ते; किन्तु व्यवहारदर्शनात् व्यवहारोत्पादकत्वेनानुमीयन्ते अन्यैः। तत्त्वतः एतेऽपि पलायनादिरूपव्यवहाररूपेणावगन्तव्याः; न ततोऽतिरिक्तरूपेण" इति।

एवं गम्भीरं कथयन्तः एते वैज्ञानिकाः वस्तुतः तथा दृढग्राहिणो न वर्तन्ते। यद्यपि एते प्रयोगशालायां मूषिकादीनां व्यवहारं दृष्ट्वा स्वसिद्धान्तं निष्कर्षन्ति । अत्र अन्तरवेक्षणप्रक्रिया नास्त्येव । अथापि यदा ते मानवं कमपि प्रयोगशालायां निधाय तेन सह समालापं कृत्वा तद्व्यवहारं (तद्भावं) ज्ञातुं प्रयतन्ते तदा आत्मनो गौरवरक्षणायैवं कथयन्ति, यद् भाषणमपि वाचिकव्यवहार एव इति, तस्मात् तस्य स्वीकारे व्यवहारवादसिद्धान्तस्य न कापि क्षतिः इति, परं स मानवः स्वाशयत्वेन यदि यत्किमपि कथयति तर्हि तन्न स्वीकर्तव्यमिति च । वाग्व्यवहाररूपोपायपरित्यागे व्यवहारवादिनः मनुजमनोविज्ञाने प्रवेशमेव न लब्धवन्तो भवेयुः ।

वस्तुतस्तु मनोविज्ञानिन एव अन्तरवेक्षणप्रक्रियामुपयुञ्जते इति न। अस्वस्थः शिशुः अथवा पशुः स्वस्य व्याधिमथवा व्यथां वक्तुमसमर्थो वर्तते । परं तु भिषग् बाह्यव्यवहारदर्शनेन, स्वानुभवं च तेन संयोज्य व्याधिं निश्चिनोति। ततश्च अन्तरवेक्षणप्रणाल्या अपि अस्त्युपयोगः । तस्मात् व्यवहारवादिनां सिद्धान्तः " शते प्रतिशतं " इति न्यायेन परिपूर्णं तत्त्वं भवतीति न मन्तव्यम् ।

करचरणादिमान् जीवः स्वतन्त्रः स्वातन्त्र्येणाथवा स्वेच्छया कार्यं कर्तुं शक्तः । अवयवाः बहवो वर्तन्ते तस्य। अथापि सर्वावयवविशिष्टो जीवस्तु एक एव। स एव स्वेच्छानुगुणं अवयवान् चेष्टयति । जीवेच्छां विना अवयवाः स्वयं स्वातन्त्र्येण चेष्टितुमशक्ताः। सर्वोऽपि व्यवहारः जीवात् पृथक्कृत्य नावगन्तव्यः ; किन्तु जीवं व्यवहारं च संयोज्यैवावगन्तव्यो भवति । स्वतन्त्रव्यवहार एव जीवं केवलचलनकारिभ्यो यन्त्रेभ्यः विभज्य प्रदर्शयति । मनुजशरीरं ईश्वरनिर्मितं अत्यद्भुतं यन्त्रमेव ; परं मानवकृतात् यन्त्रात् बहुष्वंशेषु भिद्यते । मनुजशरीरं स्वयं चलति । स्वयमश्नाति । स्वयमेव बलं प्राप्नोति । स्वयमेवात्मनो नियन्त्रणमपि करोति । स्वयमेवात्मानं पालयति । शरीरं स्वयमेव व्रणापनयनं कर्तुमपि प्रभवति। स्वयं वर्धते । भविष्यन्त्या आपदः आत्मानं रक्षति। आत्मसदृशमुत्पादयितुं च समर्थो वर्तते। संग्रहेणैवं वक्तुं शक्यते यत् जीवः सर्वस्वतन्त्रः इति। यन्त्रं तु एवं न भवति।

एकैकोऽपि जीव अन्यस्मात् विलक्षणः। न द्वौ मानवौ समानाकारौ। आकारे वर्णे बुद्धौ शक्तौ रुचौ अभिवृद्धौ च मानवानां परस्परं भेदो वर्तत एव।

जीवशरीरं वर्धते। वृद्धिश्च जीवसद्भावकृतः। बालस्य मनसः विकासो वर्तते। अयं च विकासः क्रमशो भवति। अन्तःस्थितया स्वेच्छया केवलं प्रेरितो न भवति बालः; किन्तु बाह्यपरिवेषैरपि प्रेरितो भवति। परिवेषाश्च बहवो वर्तन्ते। आहार-जल-वात-वसन-निवासादयोऽपि व्यवहारमुत्पादयन्ति। कुलाचार-जनसंप्रदाय-प्रभृतयोऽपि एनं चेष्टयन्ति। अर्जिताः मनोभावाश्च प्रीतिमभीतिं वा केषुचिद्विषयेषु जनयन्ति। पितरः, सुहृदः, क्रीडासहायकाः, प्रातिवेशिकाः, ग्रामजना इति बहवो जनाः बालस्य व्यवहारं वर्तयन्ति। ततश्चैतादृशः सर्वोऽपि परिवेषः बालस्य बुद्धिविकासमुपस्करोति। बालं वर्धमानं, परिणामं लभमानं च ज्ञात्वोपाध्यायाः बालबुद्धिविकासाय प्रयतेरन्; न तु यन्त्रवत् पूर्वमेव सिद्धं मत्वा व्यवहरेयुः।

यथा जीवस्य यन्त्रस्य स्वरूपे स्वभावे च भेदो वर्तते एवं जीवव्यवहारस्य यान्त्रिकचलनस्य च परस्परं भेदो वर्तते। जीवव्यवहारः सर्वोऽपि कृतिकृतः अथवा चैतन्योत्पादितः। व्यवहरन् व्यवहरिष्यन् वा नरः स्वेच्छया चलति। रथ्यायां शयानः सारमेयः आहारगन्धं जिघ्रन् गन्धदिशं प्रति गच्छति; भुञ्जानान् कांश्चन दृष्ट्वा लांगूलचालनादिना स्वस्पृहामाविष्कृत्य तैः क्षिप्तां रोटिकां आस्येना-दाय प्रतिनिवर्त्य कुत्रापि निश्शुनि देशे उपविश्य विस्रब्धं खादति। न किमपि यन्त्रं सारमेयतुल्यं चेष्टितुं प्रभवेत्।

व्यवहारः जीवेच्छया जायते। अत एव प्रयत्नशतेनापि जलं पातुमनिच्छन्नश्वः तत्पाययितुं न शक्यत इति कथयन्ति। आसनादिकं तु जीवस्य क्रियया चलति; न तु स्वयम्। क्षुधा, आहारचिन्ता वा सारमेयं प्रेरयति। क्षुद्विभावनं तु सारमेयीयमेव। आहाराय गतः सारमेयः अन्तरा निवर्तेत। अन्यत्र वा गच्छेत्। मार्गे अन्यं श्वानं दृष्ट्वा तेन युध्येत। जलं वा पिबेत्। यथेच्छं अन्यत् किमपि कुर्यात्। अचेतनं यन्त्रं तु एवं न करोति। जीवव्यवहारः सर्वोऽपि यावन्तं कालं प्रेरकं कारणं स्यात् तावन्तं

कालमेव वर्तेत इति न नियमः। तदतिपत्यापि वर्तेत। वैद्युतं व्यजनं वैद्युतशक्तिसत्ताकालं यावत् वीजयति। सारमेयस्तु आहारचिन्तया प्रेरितः स्वव्यवहारं अनुवर्तयेत्। मध्ये विघ्नं दृष्ट्वा तन्निराकरणाय प्रयतेत। एवं व्यवहारः विभिन्नोऽपि भवति।

जीवव्यवहारः सर्वदा एकरूपेणैव वर्तते इति नास्ति नियमः। कालानुगुणं परिवर्तितः परिवर्धितश्च भवति। क्षुधितः सारमेयः सर्वदा भुञ्जानानेवान्विष्य गच्छतीति न। मूषिकं हत्वा भक्षयेत्; बालस्य हस्तात् रोटिकामपि आच्छिन्द्यात्। कवाटमुद्घाटयन् गृहस्यान्तः प्रविश्य चोरयेत्। यन्त्रं तु न कदाप्येवं कुर्यात्।

असकृत् कृतः जीवव्यवहारः जीवे कौशलं उत्पाद्य जीवं समर्थं करोति, कालोचितमाचरितुं च प्रेरयति। सारमेयस्तु पूर्वानुभवानुगुणं व्यवहारं निश्चिनोति आचरति च। कश्चन वानरः उन्नते स्थाने निहितं कदलीफलं हस्ताप्राप्यं सन्निहितदण्डेन अधः पातयितुमुद्युक्तः दण्डस्यादीर्घतया तेन अन्यं दण्डं संयोज्य फलमादत्ते स्म। एकस्मिन् मूषिके पञ्जरे पतिते, अपरस्यां रात्रौ मूषिकाः पञ्जरसमीपमपि नायान्ति।

सर्वोऽपि व्यवहारः किमपि फलमुद्दिश्य प्रवर्तते। श्वा क्षुधां शमयितुं प्रयतते। यावच्छान्ति प्रयतत एव। उद्देश्यलाभे निवर्तेत। यन्त्राणामेतादृशमुद्देश्यं किमपि न भवति। व्यवहारः प्रवाहवत् अनुवर्तते एव। पूर्वपूर्वव्यवहारः उत्तरोत्तरं व्यवहारं प्राप्य विरतो भवति। पूर्वव्यवहारः उत्तरव्यवहाराय कारणं भवति; कोऽपि स्थानात् उत्तिष्ठति, उत्थानं च पुस्तकादानाय कृतं भवति।

जीवेष्वपि केचन व्यवहाराः यन्त्रचलनवत् अबुद्धिपूर्वं स्वतो जायमानाः वर्तन्ते। झटिति प्रकाशे जाते अक्षिसंकोचनम्, कण्टकेन पादे वेधे जाते सहसा तस्याकुञ्चनम्, नासिकायां क्षुब्धायां क्षुतम् इत्येवमादिकमत्रोदाहरणम्। सर्वत्रात्र प्रेरणे सति सद्यः प्रतिक्रिया स्वतो जायते। नैतावता सर्वेऽपि व्यवहाराः बाह्यप्रेरणया एव जायन्ते इति मन्तव्यम्। मनः उद्देश्यं च परित्यज्य व्यवहाराणां मूलमन्यत् किमपि वक्तुं न शक्यम्।

## अपेक्षा (Need), अभिप्रेरणम् (Drive)

सर्वोऽपि व्यवहारः जीवेषु बाह्यप्रेरणया जायत इति व्यवहारवादिनां मतमिदं केचनाक्षिपन्ति। ते कथयन्ति—"सर्वा अपि बाह्यप्रेरणाः जीवस्य कस्यापि सकाशात् दूरीकृताः भवन्तु। कोऽपि मूषिकः शब्दप्रकाशरहितायां अनुकूलितवातायां कस्यामपि महत्यां पेटिकायां निक्षिप्तो वर्तताम्। केवलपेटिका-भित्तिस्पर्शं विहाय नान्या काचन प्रेरणा तत्र स्यात्। अन्तःस्थितस्य मूषिकस्य सर्वमपि चलनादिकं द्रष्टुं कोऽप्युपायः कल्प्यताम्। एवं कृत्स्नं दिनं दिवा नक्तं च तत्रावस्थापितः अयं प्रायशः तूष्णीं वर्तेत। परं प्रतिहोरात्रयं मूषिकः इतस्ततः चलेत्। चलनस्यौत्कट्यमपि दृश्येत कदाचित्। अनेन चलनेन श्रान्तः मूषिकः कदाचित् तूष्णीं वर्तेत कियन्तं कालम्। विश्रामानन्तरं पुनरपि चलेत्। एवं चलने कारणं किम्? न बाह्यं प्रेरणं किमपि भवितुमर्हति। बाह्यं प्रेरणं तु निरुद्धमेव। ततश्चान्यथानुपपत्त्या आन्तरं किमपि प्रेरणं वर्तत इत्यभ्युपगन्तव्यमेव। तस्मात् न केवलं बाह्यं प्रेरणं किन्तु आन्तरमपि प्रेरणं कारणं वर्तते इत्यायाति। एवं चलितो मूषिकः यद्याहारं भुक्त्वा अथवा जलं पीत्वा निष्क्रियो भवति, तर्हि क्षुधा पिपासा (आहारापेक्षा जलापेक्षा) च मूषिकं प्रैरयतामिति ते एव मूषिक-व्यवहारे कारणं भवतः। अपेक्षा चेयं यदि तीव्रा भवति तर्हि मनसि अथवा मस्तिष्ककोशिकासु, किमपि काठिन्यं (ततत्वं-Tension), दृढतराकृष्टायां धनुर्ज्याया-मिव, वीणातन्त्र्यामिव जायते। यावदपेक्षापूरणं अनुवर्तते। जीवश्च क्लेशं अनुभवति। तादृशकाठिन्यापनयनायैव फलमुद्दिश्य प्रवर्तते। प्रवृत्तौ च व्यवहारो जायते। कामी कश्चित् कामिनीं द्रष्टुं वाञ्छन् अस्यां दशायां वर्तेत। भगवद्भक्तः भगवद्दर्शनायैतादृशीं दशां प्राप्नुयात्। कालाक्षमता स्यादत्र। धनार्थी कश्चित् चौर्याय प्रवर्तेत। सर्वत्रात्र अपेक्षा वर्तते। पशुपक्ष्यादीनामपि काश्चन अपेक्षाः वर्तन्ते। अत एव तेऽपि व्यवहारं कुर्वन्ति।

सर्वेऽपि जीवाः, स्वस्वशरीरे शरीरौष्ण्य-शरीरस्थजललवणादीनां कामपि समस्थितिं (Equilibrium) रक्षितुमपेक्षावन्तो भवन्ति। शरीरे औष्ण्यं यद्यधिकं

भवति तर्हि तस्य शान्त्यै प्रयत्यते। औष्ण्यस्य न्यूनतायां कम्बलप्रावरणमपेक्ष्यते। जले न्यूने पिपासा जायते; जलपानेन न्यूनता परिह्रियते। तथा च यदा शरीरस्य अन्तः स्थितेषु जैवरासायनांशवस्तु (Bio-chemical components) अवयवेषु कापि न्यूनता जायते तदा अन्तःस्थितायां समावस्थायां (Homeostasis) विकृतिः दृश्यते। अस्यां दशायां यावत् इयं विषमावस्था परिहृता न भवति, तावत् जीवेषु तत्परिहाराय स्वयमेव शक्तिः संकलिता (Energy mobilisation) भवति[1]। अयं सिद्धान्तः पशुपक्ष्यादीनां मानवानां च साधारणानां जीवापेक्षापूरकाणां आविर्भावं निरूपयति—'कथं ते जायन्त' इति। मानवानां व्यवहाराः सर्वेऽपि पशुपक्षिव्यवहारतुल्या न भवन्ति। शरीरापेक्षास्तु काश्चन समानाः। मनुजः कीर्तिकामः किमपि साहसं कार्यं करोति। सुखप्राप्त्यर्थं विशिष्टानि भवनानि निर्माति। दूरगमनाय विमानादीनि कल्पयति। दूरशब्दश्रवणाय दूरवस्तुदर्शनाय च यन्त्राणि विरचयति। एतादृश्यः अपेक्षाः प्राणिषु मानव-भिन्नेषु न दृश्यन्ते। तथा च मानवेषु व्यवहाराः सर्वेऽपि सर्वजीवसाधारण्या अपेक्षया केवलमुद्भवन्तीति वक्तुं न शक्यते। अत एव आत्यन्तिक-सर्वापेक्षापूरकत्वेन मोक्षः कल्पितः। तत्प्राप्त्यर्थमपि बहवः उपायाः दृष्टा वर्तन्ते।

## जीवसाधारणानि अभिप्रेरणानि

अभिप्रेरणस्यैव नामान्तरं उत्तोदना (Urge-ऊर्जः) इति। इदमभिप्रेरणम् आत्मरक्षणार्थकम् (Drive towards self-preservation), आत्मवंशरक्षणार्थक-मिति (Race preservation) च द्वेधा विभज्यते। प्रथमविभागे आहारापेक्षा-श्वासा-पेक्षा-विसर्गापेक्षा-स्वापादयः[2] अन्तर्भवन्ति। एताः सर्वजीवसाधारणाः। अत एवासां जीवापेक्षाः (Organic needs) इति नाम। एतदपेक्षानुगुणं केचन विकारा

1. "energy mobilisation takes place when an inner equilibrium is disturbed and continues until the equilibrium is restored.' Boaz. P. 49. *Educational Psychology.*

2. Biological drives: 'The basic motives revealed in animal behaviour are usually called *drives*. Woodworth, p.322.

जायन्ते । चिरकालं पूर्णाहाराभावे बुद्धिमान्द्य-अपचरित्रादयो दोषा जायन्त इति प्रयोगाद्विदितं वर्तते । एताश्चापेक्षाः पानभोजनश्वसन[illegible]निद्रारूपाणि कार्याण्युत्पादयन्ति । या अपेक्षा वर्तते तस्याः नाम आंग्लेय्यां नीड्स् (Needs) इति । या चावस्था तदनन्तरजाता जीवेषु क्रियाशीलत्वमुत्पादयति तस्याः नाम ड्रैव्स् (Drives) इति ।

आत्मरक्षणार्थाभिप्रेरणे, (1) आपत्परिहरणाभिप्रेरणम् (Emergency drive), (2) क्रियार्थाभिप्रेरणं च (Activity drive) अन्तर्भवतः । कस्मिन्नपि परिवेषे स्थितो जीवः सहसोद्भूतामापदं दृष्ट्वा त्वरिततरमनुष्ठातव्यं कमप्युपायं स्वीकर्तुं बलात् प्रेरितः स्यात् । अत्र भयसंवेगः व्यवहारं प्रति कारणं भवति । ततश्च संवेगोऽपि व्यवहारं जनयति । भीतिः कदाचित् जीवेन साधारणकाले कर्तुमशक्यमपि किमपि कार्यं कर्तुं प्रेरयेत् । सिंहेन वित्रासितः कोऽपि हरिणः विशालां कामपि कुल्यामपि एकोत्पातेन लंघेत । व्याघ्रात् भीतः कश्चन मानवः दुरारोहं वृक्षाग्रमप्यारोहेत् । एवं, कोपेन युद्धे प्रवृत्तिः जायते । मनुजव्यवहारपरिज्ञाने संवेगस्याप्यस्ति अभिप्रेरकत्वं प्राधान्यं च ।

जीवः सर्वदा क्रियाशील एव वर्तेत । " न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् "। क्रियाशीलत्वं जीवस्यासाधारणो धर्मः । एकप्रकारेण जीवस्य स्थितौ सत्यां हस्तपादकबन्धपेशीषु किमपि काठिन्यं (Tension) जायते । ततश्च क्रियाकरणे अपेक्षा वर्तते जीवस्य । यदि कापि पेशी चिरं निर्बन्धेन अक्रियाशीला स्यात्तर्हि अशान्तिः (Restlessness) अथवा व्याकुलता जायते । न केवलं बालानां किन्तु प्रौढानामपि चिरं क्रियाशून्यं (Inactive) स्थातुमत्यन्तं दुस्साधमिति उपाध्यायैरवगन्तव्यम् । इदमजानन्तः केचनोपाध्यायाः कक्ष्यायां बालकान् तूष्णीं स्थातुमाज्ञापयन्ति । आज्ञाभङ्गे जाते नितरां क्रुद्धा भवन्ति च । यदि बालकाः पेशीबलहीनाः भवन्ति तदैवात्यन्तिकक्रियाविरतिः दृश्येत कक्ष्यायाम् । ततश्च क्रियाकरणाय अभिप्रेरणं यत् वर्तते तदपि जीवस्य नैसर्गिकमेव ।

एतत् त्रिविधमप्यभिप्रेरणं मानवानां पशुपक्ष्यादीनामपि समानम् । अथापि मनुजः स्वकीयं नैसर्गिकमभिप्रेरणम्, स्वसमाजानुगुणं परिवर्तयति । अत्र कारणद्वयं वर्तते । (अ) मनुजस्य तन्त्रिकामण्डलं विभिन्नानि कार्याणि कर्तुं शक्तं सत् अतिजटिलं वर्तते । अनेन तन्त्रिकामण्डलेन सः सर्वमपि परिवेषादिकं स्वेच्छानुगुणं कल्पयितुं शक्तो भवति । (आ) अन्यजीवेष्वदृष्टा काचन बुद्धिशक्तिरपि तन्त्रिकामण्डलस्य फलभूता वर्तते । अनयैव बुद्ध्या भविष्यन्तमर्थं चिन्तयितुं, भविष्यन्त्याः आपदः आत्मानं रक्षितुं, धर्ममधर्मं विवेक्तुं च जानाति । स्वकीयमभिप्रेरणं सर्वसमाजाङ्गीकार्यं कर्तुं (Socialization) च प्रभवति । अभिप्रेरणानुगुणं कार्यकरणे प्रवृत्तः मानवः 'किं मदीयं कार्यं समाजेनाङ्गीकृतं भवेदि'ति च चिन्तयति । "क्वाकार्य ? शशलक्ष्मणः क च कुलम्" इत्यादि वदन् ययातिरत्रोदाहरणं भवति । इदं मानसं द्वन्द्वमेव सूचयति यत् मानवः सर्वदा स्वाभिप्रेरणानुगुणं न प्रवर्तत इति । बाल्ये पितरः बालं अभिप्रेरणानुगुणं कार्यं कर्तुं नानुमन्यन्ते । पश्चाच्च जनसमाजः । अस्मिन् समये एव बालः न्याय्यं अन्याय्यं धर्ममधर्मं च ज्ञातुं प्रारभते । बालस्य धर्माधर्मज्ञानोत्पादने उपाध्यायाः पाठशालाश्च मुख्यं स्थानमलङ्कुर्वन्ति । कदाचित् मानवाः समाजस्याशयमगणयन्तः स्वव्यवहारेषु आत्मतुष्ट्यनुगुणं अथवा अभिप्रेरणानुगुणं कार्यं कुर्वन्ति । अत एव केचन महापुरुषाः उत्पथगामिन इव दृश्यन्ते । "अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम्" इति कालिदासः ।

## वंशरक्षार्थकमभिप्रेरणम्

अत्र लैङ्गिकमभिप्रेरणं वात्सल्यकृतमभिप्रेरणमिति अभिप्रेरणद्वयं जीवस्य वंशानुवर्तने मुख्यं कारणं भवति । आहाराद्यभिप्रेरणं सद्यो जातस्य शिशोः वर्तते । लैङ्गिकाभिप्रेरणं (Sex drive) तु शिशोः, उत्पत्तिदशायां न भवति । किशोरावस्थायां अनालग्रन्थितः उत्पन्नानां स्रावाणां रक्ते प्रवेशेन लैङ्गिकाभिप्रेरणं जायते इदमभिप्रेरणं सर्वेषां समानं न भवति । एतदभिप्रेरणं यदा तीव्रं

भवति तर्हि मिथुनीभावे इच्छापि बलवती जायते। मातृत्वाभिप्रेरणं (Maternal drive) अथवा वात्सल्यं अपत्यप्राप्तौ अपत्यरक्षणे च जीवमुद्योजयति। केषुचन मृगविशेषेषु पक्षिविशेषेषु च इदमभिप्रेरणं बलवद्वर्तते। इदमपि अनालग्रन्थिबलानुगुणं तरतमभावेन भवति। आसन्नप्रसवा मूषिका काकी च शोभनं नीडं रचयतः।

मातृत्वप्रेरणमजानानाः काश्चन स्त्रियः किमर्थमपत्यमिति पृष्टाः एवमुत्तरं ददुः (1) भर्ता अपत्यं वाञ्छति; (2) अपत्ये सत्येव गृहे सुखं कालं यापयितुं शक्यते; (3) स्त्रीणामवश्यमपत्यमपेक्षितमिति च। सर्वा अपि स्त्रियः अपत्यं वाञ्छन्तीति वक्तुं न शक्यम् इति केचनाभिप्रयन्ति।

लैङ्गिकापेक्षापूर्त्यर्थं कार्यकरणे अस्ति महान् भेदः मृगाणां मानवानां च। मानवस्तु लैङ्गिकापेक्षां न तथा बहिः प्रकाशयेत् यथा मृगाः पक्षिणश्च। अत्र निदानं समाजस्थितिः, सामाजिकसंप्रदायः, संस्कृतिश्च। अत एव मानवः कामं नियन्तुं, उचिते मार्गे प्रेरयितुमुचितेनोपायेन प्रकाशयितुं च शिक्षां जनसमाजात् लभते। स्वजनसमाजाङ्गीकारानुगुणमेव काममभिव्यक्त्य व्यवहरेत्। कामप्रकाशेऽपि देशभेदेन, संस्कृतिभेदेन, जनानां जीवनस्तरभेदेन च उपाये तरतमभावो वर्तते। एवमेव मातृत्वस्य अथवा वात्सल्यस्य प्रकाशनेऽपि वैयक्तिकः संस्कृतिकृतश्च भेदो वर्तते। बहूनां जनानां पुरतः मात्रा क्रियमाणं शिशोः स्तन्यदानं पाश्चात्यदेशेषु दोषत्वेन न गण्यते। अत्र तु न तथा।

सर्वेषामभिप्रेरणानां येनोपायेन बहिः प्रकाशनं समाजः अङ्गीकुर्यात् तेनैवोपायेन बहिः प्रकाशनाय बालस्य प्रशिक्षणं देयम्। समाजाङ्गीकृतेन मार्गेण आत्मनः अभिप्रेरणानि यः प्रकाशयति स एव मानवो भवति। अपथेन प्रकाशयन् मानवः मृग एव स्यात्।

**मास्लो** - (Maslow)—नामकः विज्ञानी अपेक्षाः पञ्चधा विभक्तवान्।

1. शारीरापेक्षा (Physical need)—अत्र आहार - जल - प्राणवायु-शरीरौष्ण्य-प्रभृतीनामन्तर्भावः भवति।

2. रक्षणापेक्षा (Safety need)—अत्र शरीरस्वास्थ्य-भयाभाव-दुःखाभाव-आपदभाव - तर्जनभर्त्सनाभावादीनामन्तर्भावः क्रियते ।

3. अनुरागापेक्षा (Love need)—मानवः बन्धुभिः मात्रा पित्रा भार्यया पुत्रादिभिः आत्मनि क्रियमाणां प्रीतिमपेक्षते । जनैरिष्यमाणत्वमत्र प्रधानम् ।

4. गौरवापेक्षा (Esteem need)—अत्र आत्माभिमानः, बलम्, जयः, पर्याप्तता, जनैः क्रियमाणं पूजनम्, परैरात्मविषये क्रियमाणः आदरः, अभिनन्दनं चान्तर्भवन्ति ।

5. आत्मपूर्त्तिः (Self-actualisation need)—मानवेन स्वशक्त्यनुगुणं कार्यकरणमत्र प्रधानम् । स्वशक्त्यनुगुणं कार्यकरणे मानवस्येच्छा स्यादेव । कार्ये कृते कापि मानसी तृप्तिः जायेत ।

उपाध्यायैरस्माभिरस्मत्सविधेऽधीयानानां बालानां अपेक्षाः सम्यक् समाहिता वर्तन्ते किमिति अवश्यं ज्ञातव्यम् । बालानां शरीरापेक्षापूर्तिरेव पर्याप्तेति न मन्तव्यम् । शरीरापेक्षापेक्षया मानसी अपेक्षापि (Psychological need) वर्तते बालानाम् । **फ़्लेमिङ्ग्** (Fleming)-नामकः विद्वानिदमेवं निरूपयति । 'केचन शिशवः, वस्त्रावरणेन मुखमाच्छाद्य स्थितया धात्र्या सम्यक् पोषिता अपि न सम्यगवर्धन्त । ते एव पश्चात् मातृभिः रक्षिताः सम्यगवर्धन्त । अत्र निदानमिदम् । प्रथमं शिशूनां रक्षापेक्षा अनुरागापेक्षा च पूरिता नासीत्; पश्चात्तु पूरिते'ति । मानसापेक्षासु रक्षापेक्षैव प्रधानभूता । यस्यात्मरक्षाविषये शङ्का भीतिर्वा न भवति स एव सम्यगेधितुं प्रभवति । एकैकोऽपि शिशुः पितृप्रीत्यै स्पृहयति । अनाथालयस्थिताः बालाः वात्सल्याय स्पृहयन्ति । उपाध्याया अपि यदि कक्ष्यायां प्रीतिं न प्रदर्शयन्ति तदा बालानां वृद्धिरथवा विकासः नैव भवति । बालाश्च क्रमशो दुष्टा भवन्ति । रक्षा च स्वतन्त्ररक्षा परतन्त्ररक्षेति द्विविधा । बालानां परतन्त्रैव रक्षा वर्तते । मात्रा पित्रा च तेषां रक्षणविषये प्रयत्नः क्रियते । ततश्च

विस्रब्धं बाला वर्धन्ते। रामोऽपि, "मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः" इति कथयति। परतन्त्ररक्षा चिरं न वर्तेत। यदा बालः वर्धते, विद्यया ज्ञानं प्राप्नोति, लोकं च जानाति तदा आत्मानं स्वयं रक्षितुं समर्थो भवति। स्वतन्त्ररक्षाप्राप्तौ पितरः आचार्याश्च बाले आत्मप्रत्ययं जनयित्वा साहाय्यमाचरेयुः। केचन पितरः अतिवात्सल्यात् प्रौढमपि पुत्रं अज्ञं बालं वा मन्यमानाः कुत्रापि कार्ये न नियुञ्जते। न वा एकाकिनं ग्रामान्तरं गन्तुमनुमन्यन्ते। एतादृशाः पुत्राः सर्वथा आत्मप्रत्ययरहिता भवन्ति। इयं रक्षा च पञ्चधा विभज्यते कैश्चित्।

1. शारीररक्षा (Physical security)–एकैकोऽपि मानवः अत्र लोके सुखं जीवितुमेवेच्छति; दीर्घायुश्च भवितुं वाञ्छति। "पश्येम शरदः शतम्" इति स्पृहा आविष्क्रियते।

2. आर्थिकरक्षा-(Economic security) येषां बालानां आर्थिकरक्षा न वर्तते तेषां व्यक्तित्वमपि नष्टं भवति। सर्वदा भीत्या शङ्कया चोपहतं भवति तेषां मनः। दरिद्रबालानां हीनभावना च जायते। यस्य बालकस्य आत्मीयं किमपि न भवति, स बालः, 'इदं परकीयमि'ति, तत्रापहार्यमिति च बुद्धिं न प्राप्नुयात्। बालस्य स्वस्वामिभावबुद्धिः यदि न भवति तर्हि सः चौर्यमपि दोषयुक्तं न मन्येत।

3. सामाजिकरक्षा (Social security)-समाजे स्थिताः सर्वेऽपि जनाः यद्यस्मासु स्निह्यन्ति, आपदि चोपकुर्वन्ति, तदैवेयं रक्षा सिद्धा भवति। गृहे पाठशालायां बालानां इयं बुद्धिरपेक्षिता। कृत्स्ने ग्रामे द्विषति मानवः ग्रामान्तरं गच्छेत्।

4. बौद्धरक्षा (Intellectual security)–अधीयमानेषु विषयेषु बालानां संशयाः भवेयुः। संशये जाते उपाध्यायः प्रीत्या उपदेक्ष्यतीति यदि बुद्धिः स्यात् तर्ह्येवेयं रक्षा वर्तते बालानामिति मन्तव्यम्। प्रौढानामपि बहुषु व्यवहारेषु बुद्धिमद्भिः समर्थैः क्रियमाणा रक्षा अपेक्ष्यते।

5. स्वातन्त्र्यभावना (Sense of freedom)—इयमपि बालानामपेक्ष्यते। प्रथमं शरीरस्वातन्त्र्यमपेक्ष्यते। सर्वेऽपि शिशवः विना नियन्त्रणं हस्तौ पादौ च सञ्चाल्य इतस्ततो धावित्वा स्वातन्त्र्येण क्रीडितुमिच्छन्ति। प्रयोगशालायां (Laboratory) स्वातन्त्र्येण प्रयोगं कर्तुमभिलषन्ति। जिज्ञासापि स्वातन्त्र्येण क्रियमाणैव फलदायिनी स्यात्। स्वातन्त्र्येण कार्ये कृत एव 'मया इदं साधित'मिति आत्मतृप्तिः जायते; ततश्चात्मप्रत्ययः। तस्मात् पाठालये बालानां स्वातन्त्र्येण कार्यकरणाय सन्दर्भो विधेयः। बालः दत्तेन स्वातन्त्र्यणैवात्मनः शक्तिं वर्धयितुं प्रभवति। एतादृशं स्वातन्त्र्यं बालानामपेक्षितमिति **रूसो** (Rousseau) **पेस्टलाइजि** (Pestalozzi), **मान्टिस्सोरि** (Montessori), **जान् डूयी** (Dewey) - प्रभृतयः असकृत् कथितवन्तः। डाल्टन्-विधिरपि स्वातन्त्र्येण शिक्षणं वर्धयति। स्वातन्त्र्यशब्देनात्र निरनुशासनं न लक्ष्यते। किन्तु परकृतं निर्बन्धं विना, कांश्चन नियमान् स्वयमेवाङ्गीकृत्यताननुरुन्धानः बालः शिक्षते इति। अत्र मध्ये उपाध्यायेन अन्ययेन वा कृतं नियन्त्रणादिकं न भवतीति मन्तव्यम्।

यथा स्वातन्त्र्येच्छा रक्षापेक्षा च वर्तते एवमेव बालानां स्वयमन्विष्य विषयावगतौ रुचिः वर्तते। यथा वीरः कश्चित् साहसकार्यं किमपि कर्तुं वाञ्छति, यथा च गवेषकः (Explorer) कश्चित्, नूतनं किमपि स्थलं अदृष्टचरमन्यैः द्रष्टुं वाञ्छति तथा बालोऽपि कठिनं विषयं स्वयं द्रष्टुं, स्वयमवगन्तुं चेच्छेत्। एतादृशविषये रुचिमपि प्रदर्शयेत्।

एतादृशान् सर्वानपि अपेक्षाविशेषान् अवगत्य तेषां पूरणं, तत्र साहाय्यकरणं च उपाध्यायस्य मुख्यो धर्मः। यद्येतासां कामनानां पूरणं न भवति तदा बालस्य व्यक्तित्वस्य नाशो जायते। बालश्च क्रमशो दुष्टो भूत्वा समाजाहितकरणाय प्रवर्तेत।

## मूलप्रवृत्तयः (Instincts)

मनुजव्यवहारं परिशीलयत् शास्त्रं मनोविज्ञानमिति ज्ञातम्। सूक्ष्मेक्षिकया विचारे कृते व्यवहारः **नैसर्गिकः आहार्य** इति च द्विविधो दृश्येत। आहार्ये

व्यवहारः शिक्षया, संस्कृत्या, परिवेषप्रभृतिभिश्च जायते मानवेषु । अन्येषु जीवेषु व्यवहारः प्रायशो नैसर्गिक एव । मनुजेषु तु केचन निसर्गसिद्धाः केचन आहार्याश्च वर्तन्ते व्यवहाराः । प्रतिपदं नरः कृतज्ञतां (Thanks) निवेदयति; ज्येष्ठेषु विनयं प्रदर्शयति । एतादृशः सर्वोऽपि व्यवहारः शिक्षया प्राप्तः । ये व्यवहाराः अविदितमेव-निसर्गादेव-प्रवर्तन्ते ते मूलप्रवृत्तिजाः (Instinctive) इति व्यवह्रियन्ते । इन्स्टिङ्क्ट् (Instinct) इति पदं प्रथमं **प्रेयर्** (Preyer, 1842-1897) नामको विज्ञानी मनुजव्यवहारनिरूपणाय उपयुक्तवान् ।

जीवव्यवहारः प्रेरणसत्तया प्रतिक्रियारूपेण आविर्भवतीति वाट्सन्-प्रभृतीनां मतम् । अत्र मनसः कार्यं किमपि न वर्तते । बाह्यं प्रेरणमेव व्यवहारे कारणमिति च ते मन्यन्ते । तद्वैपरीत्येन, 'सर्वोऽपि व्यवहारः अन्तःस्थितेन केनचित् शक्तिविशेषेणोत्पाद्यते । व्यवहारश्च सोद्देश्यको (Purposive) भवती'ति कथयति **मक्डूगल्** (McDougall, 1871-1938) - नामको मनोविज्ञानी । अयं मनोविज्ञानं "व्यवहारपरिशीलकशास्त्रमि"ति लक्षितवान्[1] । अत्र अनेनोपयुज्यमानः व्यवहारशब्दः व्यवहारवादिभिरुपयुज्यमानात् शब्दादपि विपुलार्थको भवति । अयं शब्दः जीवैः सोद्देश्यकं क्रियमाणं कार्यजातं सूचयति । व्यवहारस्य मूलं किमिति एतत्सिद्धान्तानुसारेण विचार्यते । जीवेषु निसर्गात् स्थिताः मूलप्रवृत्तिनामधेयाः केचन धर्मा एव व्यवहारे कारणम् । मूलप्रवृत्तीनां नाम आंग्लेय्यां Instinct इति । अत्र किमपि उदाहरणमुच्यते । काकी काचन गर्भग्रहणकालादारभ्य नीडनिर्माणाय प्रयतते । निर्माणावश्यकताज्ञानं, समुचितस्थानग्रहणम्, सामग्रीसंपादनम्, नीडरचनं, तस्यापि प्रकारैक्यम् इत्येतत्सर्वं विनोपदेशं जानाति काकी । मार्जारीप्रभृतयोऽपि प्रसूतिकाले समीचीनं स्थानमन्विच्छन्ति । भ्रमरी काचित् अण्डनिक्षेपकाले मृदा नीडमुचिते स्थले निर्माय, तस्यान्तः अण्डं निधाय, अण्डात् जनिष्यमाणस्य स्वशिशोराहाराय कृमिं कमप्यानीय नीडस्य

---

1. 'Science of conduct or behaviour' *Outline of Psychology*—fn. on p. 38.

अन्तर्भागे निक्षिपति। कृमिं च सूचीतुल्येनात्मनोऽवयवेनाविध्य नष्टप्रज्ञं कृत्वा नीडस्य द्वारं पिधाय यत्र कुत्रापि गच्छति। एवमेव सर्वा अपि तज्जातीया भ्रमर्यः कुर्वन्ति। अण्डादागतः भ्रमरशिशुः कृमिं भुङ्क्ते। क्रमशः उड्डयनशक्तिं प्राप्य नीडं भित्त्वा निर्गच्छति। इदं भ्रमरापत्यमपि अण्डनिक्षेपकाले एवमेवाचरतीति अशिक्षिता (Unlearnt) वृत्तिरुपलभ्यते। न कुत्रापि कदाप्यधीतं एवं कर्तव्यमिति। सृष्टिकालादारभ्य अद्य यावत् इयं प्रक्रियैवानुवर्तत इति विस्मयस्थानमिदम्। भ्रमरी अशिक्षितमेव एतत्सर्वं करोति; एवं करणे च किमपि उद्देश्यं वर्तत इति इदमुभयमत्र अवधानमर्हति। एतादृशो व्यवहारः मृगेषु मानवेषु च दृश्यते। आधावन्तं वृषभं दृष्ट्वा बालः सहसा पलायते। अत्र वृषभः आत्मानं हन्यादिति प्रथमं भीतिर्जायते। या भीतिरत्र प्रथमं जाता स आत्मरक्षणरूपया मूलप्रवृत्त्या संबद्धः संवेगो भवति। पलायनं च मूलप्रवृत्तिजो (Instinctive) व्यवहारः। आत्मरक्षणमत्र प्रयोजनम् (Purpose)। मक्डूगल्महोदयः मूलप्रवृत्तेः लक्षणं बहुधा कथयति। 'मूलप्रवृत्तिश्च स्वाभाविकी अथवा जन्मसिद्धा सप्रयोजनकार्यकरणानुकूला काचन शक्तिः' इति मूलप्रवृत्तेः तदीयं लक्षणं क्वचित्[1]। बुद्धिमपि लक्षयित्वा वृत्तीनां ततो भदं एवं निदर्शयति, 'पूर्वानुभवेन मूलप्रवृत्तिषु यया अभिवृद्धिरापाद्यते तस्या नाम बुद्धि'रिति[2]।

पशुपक्ष्यादिषु दृश्यमानाः एतादृश्यः मूलप्रवृत्तयः किं मानवेषु वर्तन्ते? इत्यत्र मतभेदो वर्तते। इतरजीवेषु दृश्यमानाभ्यो वृत्तिभ्योऽप्यधिकसंख्याका वृत्तयो मानवेषु वर्तन्त इति केषांचिन्मतम्। 'मानवेषु मूलप्रवृत्तयो न सन्ति यतस्ते विचिन्त्य विवेकादेव कार्यं कुर्वन्ति। यत्राशिक्षितमेव व्यवहारः तत्रैव मूलप्रवृत्तेः सत्ता अङ्गीक्रियते; यत्र विवेचनात्परं कार्यं क्रियते तत्र मूलप्रवृत्तेः कारणत्वं न

---

1. Instinct is native or inborn capacity for purposive action.

2. "Intelligence is the capacity to improve upon the native tendency in the light of past experiences." p. 71. *Outline of Psychology.*

भवती'ति अन्ये आशेरते। वस्तुतस्तु अस्य सिद्धान्तस्य आदरो न विद्यते। मानवानां कार्यं यथा विवेकात् तत्तत्काले विभिन्नं दृश्यते एवं पशुपक्ष्यादीनां कार्येऽपि विवेकात् विभिन्नता वर्तते*। सर्वदैकरूपं वर्तत इति न मन्तव्यत्। मनुजस्तु सहजप्रवृत्त्या प्रेरितोऽपि परिवेषानुगुणं स्वव्यवहारं परिवर्तयति। आहारापेक्षायां सत्यां अन्ये जीवाः यत्किमपि लब्धं भुञ्जते। मनुजस्तु उचितमाहारमन्विष्यैव भुङ्क्ते। अयं व्यवहारः मूलप्रवृत्त्या जात इत्यत्र न संशयः। परं ईषद्विलम्बेन जायत इति विशेषः। मानवस्य जीवने तदपेक्षापूरणे च मूलप्रवृत्तीनामस्ति किमपि मुख्यं स्थानम्।

मक्डूगल्—महोदयात् पूर्वमपि केचनेमं सिद्धान्तं निरूपितवन्तः। सिद्धान्तानुसारं तेषां कृतं नाम प्रयोजनवादिनः (Purposivists) इति। तेषु अग्रगण्यः भूत्वा अस्य सिद्धान्तस्योत्तम्भनं कृतवान् मक्डूगल्महोदयः। मूलप्रवृत्तिश्च, स्वाभाविकः कश्चन मनोभावः। अस्य च विपुलं लक्षणं एवं दीयते मक्डूगलेन। "मूलप्रवृत्तिश्च नैसर्गिकी अथवा परम्परागता कापि मानसी शारीरी च वृत्तिः, या जीवं सन्निहितानि कानिचन वस्तूनि द्रष्टुं, तत्र अवधातुं, तद्दर्शने च कमपि संवेगविशेषमनुभवितुं, तदुद्दिश्य नियतया कयापि प्रक्रियया किमपि कर्तुं अथवा तादृशक्रियाकरणाय कमप्यावेगं धर्तुं च प्रेरयति[1]" इति।

---

* 'यथा (पश्वादयः) दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति पलायितुमारभन्ते ; हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति' **ब्रह्मसूत्रशाङ्करभाष्यम्**—1-1-1.

1. "We may, then, define an instinct as an inherited or innate psycho-physical disposition which determines its possessor to perceive, and to pay attention to, objects of a certain class, to experience an emotional excitement of a particular quality upon perceiving such an object, and to act in regard to it in a particular manner, or, at least, to experience an impulse to such action." p. 25. *Introduction to Social Psychology.*

इदं महावाक्यं एवं व्याख्यातुं शक्यम् । 'जीवानां कोऽपि स्वभावो वर्तते । अयं च जन्मना सिद्धः स्यात् । क्वचित् मातृतः पितृतो वा प्राप्तः स्यात् । योऽयं स्वभावः उक्तः सः शरीरमनस्सम्बद्धः । अयं स्वभावः जीवं स्वं परितो वर्तमानेषु पदार्थेषु जीवेषु अजीवेषु परिवेषे च केषुचिदेव वस्तुषु दृष्टिं निधातुं प्रेरयति । दर्शनानन्तरं तत्र जीवस्यावधानं जायते । अवधानात्परं कोऽपि संवेगः (Emotion) तीव्रो मन्दो वा जीवेनानुभूयते । संवेगे जाते, दृष्टं पदार्थमुद्दिश्य किमपि कर्तुं इयं मानसी वृत्तिः जीवं प्रेरयति; अथवा कार्यकरणाय कमपि आवेगमपि जनयति' इति ।

उदाहरणम्—कश्चन सारमेयः रथ्यायां शयानः, निद्रामकुर्वन् उन्नत-कन्धरो वर्तेत । स न निमीलिताक्षो भवेत् ; किन्तु परितः वर्तमानेषु कानिचिदेव विलोकयन् अवहितश्च स्यात् । तत्र यदि कोऽपि अन्यः सारमेयः आयाति, तर्हि तद्दर्शने (यदि च स दुर्बलो वर्तेत) क्रोधरूपं तीव्रं संवेगं प्राप्नुयात् । ततश्च घुर्घुरायेत । अथवा भषन् तदुपरि निपत्य तं पीडयेत् । कुक्कुटशावकोऽपि अण्डात् जातमात्र एव परितो विलोकयन् धान्यकणेऽवधानं कृत्वा तमेव गृह्णाति । एवमेव सर्वेषां जीवानां व्यवहारो वर्तते । एतत्सिद्धान्ताधिगमाय जीवाः निम्नस्तरीयाः पिपीलिकादयः, उच्चतरस्तरीयाः मनुजाश्वादयः इति विभज्य ज्ञातव्या भवन्ति । तत्र निम्नस्तरीयजीवेषु विना चिन्तनं व्यवहारा मूलप्रवृत्त्या जायन्ते । अन्येषु चिन्तनपुरस्सरं तद्विहीनं वा यथासम्भवं भवन्ति । उच्चतरजीवेषु अनु-भवात् ज्ञानं जायते; ततश्च तेषु विशुद्धा मूलप्रवृत्तिः द्रष्टुं न शक्या । परं लक्ष्यप्रदर्शने मूलप्रवृत्तेः कार्यं वर्तते । लक्ष्यसाधनायोपायग्रहणे तु ज्ञानमपि साहाय्यं करोति । मकूडूगल् क्वचिदेवमपि कथयति, "कुतः प्राणिनः किमपि लक्ष्यमुद्दिश्यैव प्रवर्तन्ते? अत्रोत्तरं प्राणिनामयं स्वभावः" इति । केचित् अभिप्रेरणा-दिकं कारणं कथयन्ति; अभिप्रेरणाय काचन शक्तिः अथवा ऊर्जा - (Urge) वर्तेत जीवेषु; सैव प्रेरयति, तस्याः शक्तेः नाम हार्मे (Horme) इति । अत एवायं सिद्धान्तः हार्मिसम् (Hormism) अथवा हार्मिक् तियरि (Hormic Theory) इत्यपि व्यपदिश्यते । नन्न् - महोदयः इमां शक्तिमधिकृत्य एवं

कथयति—"या शक्तिः चैतन्यपुरस्सरं मानवेषु उच्चतरजीवेषु च आविर्भवति, अधस्तरीयजीवानां चैतन्यविहीनं यथातथा तत्कार्येषु दृश्यते तस्याः शक्तेरस्माभिः हार्मे (Horme) इतीदं एकं नाम दीयते इति[1]। नन्न् - महोदयेन सूचितं इदमेव नाम मक्डूगल् - महोदयः स्वीकृतवान् इति रास्[2] (Ross) महोदयः कथयति। अस्यैवोर्जावृक्षस्य शाखाभूताः चतुर्दशमूलप्रवृत्तीः मक्डूगल् निर्दिशति।

इयं मूलप्रवृत्तिः त्रिपुटी अथवा अंशत्रयवती। पुरतो विद्यमानस्य वस्तुनः या दर्शनावस्था (Cognitive) वर्तते स एव प्रथमः अंशः। दर्शनानन्तरं या मनसि भावना (Feeling) जायते तस्याः संवेगावस्था (Emotive) इति नाम। अयं द्वितीयोंऽशः। संवेगादनन्तरं क्रिया जायते। अयं तृतीयोंऽशः। अस्य कृत्यवस्था (Conative) इति नाम। ततश्च मनसः, ज्ञानं, विभावनं अथवा संवेगः, कृतिः इत्यवस्थात्रयं जायते। ज्ञानादेव क्रिया इति केषांचिन्मतम्। मध्यमांशं केचन नाङ्गीकुर्वन्ति। एताः मूलप्रवृत्तयः अन्तर्वर्तमानाः प्रेरिका भवन्ति इति एतासामेव अभिप्रेरणम् (Drive) इति अपरं नाम दत्तं नव्यरित्यपि केचित्। "मक्डूगल्-महोदयस्य मूलप्रवृत्तिः जीवेषु पूर्वसिद्धः कोऽपि धर्मविशेषः येन जीवः पश्यति, अवधत्ते च" इति यदि व्याख्यायते तर्हि तदीया मूलप्रवृत्तिः, अन्येषां अभिप्रेरणं (Drive) इतीदमुभयं अनर्थान्तरम्[3]"।

सर्वा अपि मूलप्रवृत्तयः जातमात्रस्य शिशोर्भवन्तीति न मन्तव्यम्। नरस्य अन्यैः सह वर्तने या इच्छा वर्तते सा अपि काचित् वृत्तिरेव। अस्याः स्वगण-

---

1. To this elemement of drive or urge, whether it occurs in the conscious life of men and the higher animals, or on the unconscious activities of their bodies and the unconcious behaviour of lower animals we propose to give a single name *horme*. p. 28. *Education, Its Data and First Principles.*

2. P. 47. *Educatianal Psychology.*

3. p. 140. *Introduction to General Psychology.* Asher and others,

वर्तनमिति नाम। इयं पश्चादेव जायते, पूर्णतां च भजते। कामवृत्तिः पश्चादेव उद्भवति। पूर्वकाले युद्धाभिरुचिः, (Pugnacity) तीव्रा आसीत्। इदानीं तु सा न तथा तीव्रा दृश्यते। युद्धं विनापि इदानीं नराः जीवितुं शक्नुवन्ति।

मूलप्रवृत्तिजक्रियाणां, व्यवहारवादिभिः निर्दिश्यमानानां सहजक्रियाणां (व्यवहाराणां) च परस्परं भेदो वर्तते एव। सहजक्रियाश्च साधारण्यः वर्तन्ते। शरीरे क्वचिदेव तन्त्रिकाणां कार्यत्वेन जायन्ते। मूलप्रवृत्तिजा व्यवहाराश्च जटिला (Complex) भवन्ति। एते च शरीरं मनश्च उपकुर्वन्तो वर्तन्ते। जीवव्यवहाराः यथाकथंचित् जायन्ताम्। मनुजव्यवहारास्तु बुद्ध्या परिवर्तयितुं शक्यन्ते। व्यवहारासाधारणधर्माः केचन पूर्वं निर्दिष्टा अप्यत्र स्मर्तव्याः।

वैज्ञानिकाः मूलप्रवृत्तिसंख्याविषये विवदमाना वर्तन्ते। वृत्तीनां चत्वारिंशतमपि केचनाङ्गीकुर्वन्ति। मक्डूगल्महाशयश्च अन्ते निष्कृष्टतया मानवानां चतुर्दश मूलप्रवृत्तीः निर्दिशति स्म। एकैकामपि वृत्तिं तालिकात्वेन (Lock) रूपणं कृत्वा वृत्तिप्रेरकधर्मं तदुद्घाटनसमर्थां कुञ्चिकां (Key) वर्णयति।

### [1]पैतृकवृत्तिः (पुत्रकामनावृत्तिः)—

स्वापत्यदर्शन-गन्धग्रहण-तदाक्रन्दन-श्रवणादिभिरुद्भवतीयं वृत्तिः। उद्बुद्धेयं जीवं स्वापत्यरक्षणाय प्रेरयति। अपत्यस्मरणमपि इमां वृत्तिमुद्भावयेत्। अनाथालयनिर्मातॄणामियं वृत्तिरधिका वर्तते। अत एव वन्ध्याः पुत्रहीनाश्च परपुत्रपोषणे मार्जारादिसंरक्षणे च प्रीतिं प्रदर्शयन्ति।

### [2]युयुत्सावृत्तिः—

युयुत्सावृत्तिश्च परकृतेन स्वापत्योपद्रवेण, विघ्नदर्शनेन च उद्बोधिता भवति। स्वकार्ये विघ्ने जाते विघ्नकारिणं प्रति प्रथमं कोपः, तदनन्तरं तन्निराकरणाय युद्धं भवति। प्रथमं विघ्ननिवारणाय प्रयत्यते। वारणे अशक्ये विघ्नकर्तुः हनने समुद्योगः। पूर्वकाले आहारान्वेषणवृत्त्या सह इयं वृत्तिः युक्ता आसीत्।

---

1. Parental Instinct. 2. Pugnacity,

**[3]जिज्ञासावृत्तिः (कौतूहलवृत्तिः)—**

इयमपि वृत्तिः, अन्यवृत्तिरिव, वृत्त्यन्तरेण संबद्धैव वर्तते। किञ्चिद्वस्तु सम्यगलक्षितं अन्यां यां कामपि वृत्तिं निश्चिततयोद्भावयितुं यदा न शक्नोति तदेमां वृत्तिमुद्भावयति। वस्तुनः सम्यग्ज्ञाने जीवं प्रेरयतीयं वृत्तिः। मार्जारः मूषिकसदृशं किमपि दृष्ट्वा तत्समीपं प्राप्य पादेन परामृश्य पश्यति। आहारान्वेषणवृत्त्या युक्तेयं वृत्तिरत्र।

**[4]आहारान्वेषणवृत्तिः—**

इयमेव वस्तुतः सर्वप्रथमा वृत्तिः भवितुमर्हति। अनयैव वृत्त्या व्यापारितः आत्मरक्षणं कर्तुं समर्थो भवति जीवः। इयं आहारस्य दर्शने, गन्धग्रहणे जरणोपयुक्तस्य जठरस्थितस्यावयवस्य कयापि दशया चोत्पाद्यते। अनेन ज्ञायते व्यापारः अन्तःस्थितप्रेरणयापि जायत इति। अस्याः वृत्तेः व्यापारस्तु आहारान्वेषणं, भुक्तिश्च।

**[5]जुगुप्सावृत्तिः (निवृत्तिवृत्तिः)—**

अनभिमतस्य अतिगर्हणीयस्य अत्यसुन्दरस्य वा वस्तुनो दर्शने इयं वृत्तिरुद्बुद्धा भवति। मानवेषु अतिमात्राधर्मस्य अन्याय्यस्य वा दर्शनं इमामुद्भावयेत्। क्रौर्यात्, अनृतकथनात्, दौष्ट्यात्, अशुचिद्रव्यात्, असुन्दराद्वस्तुनः, पापाच्च जुगुप्सते मनः। अत्र चेष्टाश्च—गर्हणा-धिक्कार-निष्ठीवनप्रभृतयः।

**[6]पलायनवृत्तिः (आत्मरक्षणवृत्तिः)—**

इयं बहुभिः कारणैर्जायेत। सहसोद्भूतात् परुषशब्दात् भयानकवस्तुदर्शनात्, स्वयूथीयानामार्तारावश्रवणात्, शरीरव्यथया, अविदितात् वस्तुनश्चेयमुद्भवति। चेष्टाः पलायन-निलयन-भय-आक्रन्दनानि। अन्यच्चैतादृशम्।

---

3. Curiosity. 4. Food-seeking.

5. Repulsion. 6. Instinct of escape.

**[7]यूथचरवृत्तिः (यूथचारित्ववृत्तिः, सामूहिकता)—**

इयं वृत्तिः स्ववर्गीयजीवानां दर्शने, तच्छब्दश्रवणे, तद्गन्धाघ्राणने चोद्बुद्धा भवति। प्राणिनः, उक्तैः प्रेरकैः यूथचरत्ववृत्तिं प्राप्य स्वयूथसान्निध्यं वाञ्छन्ति। मानवेषु स्वयूथीयानां केवलस्मरणेनापि इयं वृत्तिराविर्भवति।

**[8]स्वाग्रहिताvृत्तिः (आत्मगौरववृत्तिः आत्मप्रदर्शनवृत्तिः)—**

आत्मापेक्षया दुर्बलानां स्ववर्गीयजीवानां दर्शने इयमुद्बुद्धा जायते। स्वबलं स्वोत्कर्षश्च केनाप्युपायेन प्रदर्श्यतेऽत्र। मानवेषु गम्भीरगमन-आत्मस्तवन-आत्मालङ्करणप्रभृतयः चेष्टा दृश्यन्ते।

**[9]आत्मलघुतावृत्तिः (आत्महीनतावृत्तिः)—**

आत्मनः उत्कृष्टस्य स्ववर्गीयस्य दर्शने इयं वृत्तिः जायते। नम्रतामतिमात्रविनयं परविषये गौरवद्योतकं चेष्टाविशेषं चेयं कारयति जीवेषु। गृहस्वामिनः पुरतः गृहे रक्ष्यमाणेन शुना क्रियमाणानि लाङ्गूलचालनप्रभृतीनि स्मर्तव्यानि। बलवतः शुनो दर्शने बलहीनं सारमेयं आत्मनः पुच्छं पश्चपादयोर्मध्ये निलीनं विधाय गन्तुमियमेव वृत्तिः प्रेरयति।

**[10]कामवृत्तिः (समागमवृत्तिः)—**

इयं वृत्तिः स्ववर्गीय-विभिन्नलैंगिक-युक्तव्यक्तिदर्शने तद्गतलैंगिकधर्मदर्शने चोद्बुद्धा भवति। इयं वृत्तिः जीवस्य शरीरबलमपि अपेक्षते। क्षुधासत्तायामेव यथा आहारवृत्तिः तथा इयमपि वृत्तिः शरीरधर्मानुसारं कामनायां सत्यामेव जायते। फ्रायड्महोदयस्तु सर्वव्यवहाराणामपि कामवृत्तिमूलत्वं मन्यत इति विदितमेव।

---

7. Gregarious instinct.
8. Instinct of self-assertion (or self-display)
9. Instinct of self-abasement (or subjection)
10. Mating instinct (sex-instinct)

**[11]अर्जनवृत्तिः (संग्रहवृत्तिः)—**

आहाराद्युपयोगिनां संभाराणां दर्शने इयमुद्बुद्धा भवति। क्वचिद्बालेषु निरुपयोगानामपि वस्तूनां सङ्ग्रहेणेयं व्यक्ता वर्तते। कदाचित् अर्जितानां वस्तूनां संरक्षणेऽपि इयं वृत्तिरुपयुज्यते। स्ववस्तूनां अपहर्त्रे असूया च प्रदर्श्येत। कृपणेषु भिक्षुकेषु च इयं वृत्तिरधिका दृश्यते। पिपीलिकादयोऽपि वर्षाकालार्थं धान्यकणान् सञ्चिन्वते।

**[12]रचनावृत्तिः (निर्माणवृत्तिः)—**

निर्माणोपयोगिनां वस्तूनां दर्शने इयं वृत्तिरुद्बोध्यते। पक्षिणां नीडनिर्माणे इयं वृत्तिरभिव्यज्यते। बाला अपि वालुकाभिर्गृहं निर्मान्ति। गृहालङ्करणादिकं च कुर्वन्ति।

**[13]प्रार्थनावृत्तिः (याचनावृत्तिः, शरणागतिवृत्तिः)—**

यदा युयुत्सावृत्तिः कार्यकारिणी न भवति तदेयं वृत्तिरुपयुज्यते। युयुत्सा-वृत्तिरपि अन्यवृत्त्युपरोधे जायत इति ज्ञातम्। युयुत्सावृत्तिप्रतिरोधे इयमाश्रीयते। कुक्कुटशावकाः आपदि मातृसमीपं यान्ति। आक्रन्दनं आधावनं चात्र साधारणे चिह्ने।

**[14]हासवृत्तिः—**

इयं वृत्तिर्मनुजस्यासाधारणी। पशुपक्ष्यादीनां हासवृत्तिर्न भवति। हासवृत्तिः कया कुञ्चिकया उद्घाट्यते? किमर्थं च मनुजो हसति? हासेन किं प्राप्यते इत्यत्र बहवः सिद्धान्तभेदा वर्तन्ते। सन्दर्भविशेषेणास्मासु हास-वृत्तिरुद्बोध्यते। ततश्च हासो जायते। अहसने तु क्लेशो भवति। हासश्च

---

11. Acquisitive instinct.
12. Constructive instinct.
13. Instinct of appeal.
14. Instinct of laughter.

निरोद्धुमशक्यो वर्तते । बालकैः क्रियमाणं असुन्दरं अनुचितं वा कार्यं दृष्ट्वा अस्माकं कोपः अथवा अतृप्तिः जायते । एवं असकृत् कोपः अतृप्तिर्वा यदि जायेत तर्हि आरोग्यं नष्टं स्यात् अस्माकम् । अत्र कोपस्थाने हासः उद्भाव्यते प्रकृत्या (Nature) । तथा च हासः कोपस्य प्रतिकारी (Antidote) भवति । एवमेव परेषां लघु दुःखं दृष्ट्वा यद्यसकृत् घृणा (दया) क्रियते तदाप्यस्माकं मनसि किमपि दुःखं (pain or distress) जायते । यदा दयामहे तदा दयनीयस्य शोकः अस्मासु संक्रामति । इदं च दुःखं यद्यसकृत् भवति तर्हि अनारोग्यमेव स्यात् । ततश्च प्रकृतिः (Nature) परेषु लघ्व्यां संकटदशायां (Mishap) जातायां, मानवेषु दयास्थाने हासं जनयति । अतः हासः दयायाः प्रतिकारी (Antidote) वर्तते इति मकूड्गल् कथयति । "विलापक्लेशो मे मा भूदिति चिन्तयन्नहं (परेषां) विपदि हसामि " इति **बैरन्** (Byron)-वाक्यं चोदाहरति[1] ।

एताः सर्वा अपि चतुर्दशवृत्तयः त्रेधा वर्गीकर्तुं शक्यन्ते । कौतूहलाहारान्वेषणादिवृत्तयः [2]आत्मरक्षणाख्यायां वृत्तौ, यूथचारित्वान्वेषणादयः [3]सामूहिकवृत्तौ, कामवृत्तिः पैतृकवृत्तिश्च वंशरक्षणवृत्तौ च अन्तर्भावयितुं योग्या भवन्ति । एताः सर्वा अपि वृत्तयः हार्मे-इत्याख्यस्य मनसो व्यापारस्य विभिन्ना अंशाः भवन्ति । निसर्गादेवैते धर्मा मानवेषु वर्तन्ते । एतेषां शुभकारित्वमशुभकारित्वं वा तेषां विकासक्रममनुसृत्य भवति ॥

## मूलप्रवृत्त्या संबद्धाः संवेगाः

मकूड्गल्महोदयः, एकैकस्या अपि वृत्तेः तदविनाभूतः तत्सारभूतः जीवप्रेरणे प्रधानतमः कश्चन संवेगः (Emotion) वर्तत इत्याह । निम्नस्तरीयजीवेषु केवलमूलप्रवृत्तिः व्यवहारे कारणं भवति । उच्चस्तरीयजीवेषु तु मूलप्रवृत्तेः रूपान्तरभूतेन अथवा अंशभूतेन संवेगेनैव व्यवहारा भवन्तीत्याह ।

---

1. "And if I laugh at any mortal thing, 'tis that I may not weep"—Byron. P. 170 *Outline of psychology*. Mc. Dougall.

2. Self-preservative instinct. 3. Social instinct.

| वृत्तिः | तत्संबद्धः संवेगः |
|---|---|
| पैतृकवृत्तिः | वात्सल्यम् (स्नेहः)[1] |
| युयुत्सावृत्तिः | कोपः[2] |
| जिज्ञासावृत्तिः | आश्चर्यम्[3] |
| आहारान्वेषणवृत्तिः | बुभुक्षा (क्षुधा)[4] |
| जुगुप्सावृत्तिः | गर्हा-घृणा[5] |
| पलायनवृत्तिः | भीतिः[6] |
| यूथचरवृत्तिः | एकाकित्वविभावनम्[7] |
| स्वाग्रहितावृत्तिः | आत्माभिमानः[8] |
| आत्मलघुतावृत्तिः | आत्महीनताबुद्धिः[9] |
| कामवृत्तिः | कामुकता[10] |
| अर्जनवृत्तिः | अधिकार (स्वामित्व) भावना[11] |
| रचनावृतिः | रचनानन्दः[12] |
| प्रार्थनावृत्तिः | दैन्यम्[13] |
| हासवृत्तिः | आमोदः[14] |

**जेम्स् ड्रेवेर्**—(James Drever, 1873—1950)—नामकः विज्ञानी मक्डूगलमहोदयस्य वृत्तीनां सत्तां अङ्गीकुर्वन्नपि, तदुक्तं संवेगानां वृत्त्यविनाभूतत्वम्, वृत्तीनां कार्यकरणे साहाय्यकारित्वं च नानुमनुते। संवेगं विनापि क्वचित् मूलप्रवृत्त्या कार्यं जायत एव। रचनावृत्तौ को वा संवेगः तदनुबद्धतया द्रष्टुं शक्यते, इति सः आक्षिपति। यदा मूलप्रवृत्तेः स्वतः कार्यकरणे विघ्नो भवति तदैव संवेगो जायते इति सः अभिप्रैति।

---

1. Tender emotion. 2. Anger. 3. Wonder. 4. Gusto. 5. Disgust. 6. Fear. 7. Feeling of loneliness. 8. Positive self-feeling. 9. Negative self-feeling. 10. Lust. 11. Feeling of ownership. 12. Feeling of creativeness. 13. Distress. 14. Amusement.

## अध्यापने मूलप्रवृत्तीनां उपयोगः

वृत्तीरधिकृत्य ज्ञाने उपाध्यायानां किं प्रयोजनमिति विचिकित्सा जायेत। उपाध्यायः यदि अनु-कूलं अथवा बालानां मूलप्रवृत्त्यनुगुणं अध्यापनं करोति तर्ह्येव तदीयमध्यापनं सुकरं सफलं च स्यात्। नदीप्रवाहे प्रतीपगमनं यथा श्रमं जनयति तथैव बालस्वभावविरुद्धं क्रियमाणमध्यापनं श्रान्तिं जनयेत् बालानामुपाध्यायस्य च। कक्ष्यायां विद्यार्थी वृत्त्यनुगुणं चेष्टत इति ज्ञात्वा चेष्टायाः मूलं कारणमन्विष्य तदनुगुणमाचरितव्यमुपाध्यायेन। बालानां अस्यां दशायां धर्मज्ञानं वा सच्चरित्रज्ञानं वा नैव स्यात्। तस्मात् दुश्चेष्टाकाले केवल-धर्मोपदेशस्य नैवास्त्यवसरः। मूलप्रवृत्त्यनुरोधं प्रवर्तमानस्य बालस्योपरि दण्डपातन-माचार्यस्य लोकस्वभावानभिज्ञतामेव व्यञ्जयेत्। दुश्चेष्टाकाले जुगुप्सा-आत्मरक्षण-आत्माभिमानप्रभृतीनामुद्बोधनं केवलं कर्तव्यं स्यात्। दुश्चेष्टास्थाने सच्चेष्टा उत्पादनीया। वृत्त्युपयोगेन, श्लाघ्यं लक्ष्यं किमपि प्रदर्श्य क्रियमाणमध्यापनं रुचियुक्तं स्यात्। विद्यार्थिनश्च उत्साहिनो भवेयुः। अधीतं च मनसि सुस्थिरं स्यात्।

कासांचन वृत्तीनामध्यापने उपयोगः एवं कर्तुं शक्यते। जिज्ञासावृत्तिः अज्ञाते अदृष्टचरे च विषये प्रथममाश्चर्यसंवेगं प्राप्य जायते। अत्यन्ताज्ञाते रुचिः नैव स्यात्। ततश्च ज्ञातं किमपि प्रस्तुत्य जिज्ञासा उत्पादनीया। सर्वमाधुनिकं विज्ञानं जिज्ञासावृत्त्या निष्पन्नमेव। अविदितमधिकृत्य प्रथमं विस्मयते नरः। पश्चाच्च जानाति। बालकाश्च स्वयंदृष्टस्पृष्टज्ञातविषयेषु अतीव आदरं प्रदर्शयन्ति। ततश्चोपाध्यायः, यथा बालकाः स्वयमेव जानीयुः तथा अध्यापयेत्; न तु स्वयमेव सर्वं कथयेत्। अध्यापयिष्यमाणे विषये कौतूहलं वर्धनीयम्। अत्रैव भूमिकायाः उपयोगो वर्तते। अज्ञातं किमपि उद्देश्यं भूमिकायां प्रदर्श्य जिज्ञासावृत्तिरुद्बोधिता भवति। स्वतः शोधप्रणाली (Heuristic method) समस्याप्रणाली च इमां वृत्तिमुपजीव्य प्रवर्तेते। जिज्ञासावृत्तिः निरर्थकेषु निष्प्रयोजनेषु च काकदन्त-परीक्षातुल्येषु नैव प्रवर्तनीया। एवं रचनावृत्तिरपि अध्यापने सफलेषु कार्येषु

योजनीया। प्रथमं बालः हस्तौ चेष्टयन् यत्किमपि करोति। एवं कुर्वन् क्रमशः हस्तौ स्वाभिमतं व्यापारयितुं किमपि मनसि संकल्पितं कर्तुं च शक्तिं प्राप्नोति। एवं कृत्वैव क्रियाकौशलं प्राप्यते। आधुनिकपाठशालासु क्रियाकौशलोत्पादनाय संविधानं कृतं वर्तते। बालोद्याने (Kindergarten), मान्टिस्सोरि-पाठशालायां आधारविद्यापद्धतौ च अस्या वृत्तेरस्ति प्राधान्यम्। कटनिर्माणादिषु शिल्पेष्वपि (Craft) परिचयो बालानां दीयते। युयुत्सावृत्तिः क्रीडायां विषयविवादे च शोधनं प्राप्नोति। अर्जनवृत्तिः उचितवस्तुसंग्रहरूपे मानसोल्लासकार्ये उपयोक्तव्या भवति।

## वृत्तीनां शोधनम्

एतावता नैव मन्तव्यं यत् उपाध्यायस्य सर्वं कार्यं वृत्त्यनुगुणाध्यापनेन समाप्तं भवतीति। एताः वृत्तयः स्वयं अपरिष्कृताः सत्यः एव बालेषु आविर्भवन्ति। कश्चन बालः क्षुधायां जातायां अन्येन बालेनानीतं भोजनं विनाऽनुमतिं भुञ्जीत। इदमपरिष्कृतवृत्तेः उदाहरणं भवति। क्षुधायां भोजनमिति वर्तते प्राणिनां प्रवृत्तिः। मनुजस्तु स्वमेव भोजनं भुङ्क्ते। यथा गौः परकीयं सस्यं विना अनुमतिं भुङ्क्ते तथा नरः परकीयं न भुङ्क्ते। ततश्चैवमाविर्भवन्तीनां वृत्तीनां विषये किं कर्तव्यमिति विचारो जायेत। केचन विज्ञानिनः, 'एता वृत्तयः न हन्तव्याः; न वा निरोद्धव्याः, यतः कृते निरोधे महती विपत् जायते। बालाः स्वानुभवेन वृत्तीनां सामञ्जस्यं स्वतः संपादयिष्यन्ति' इति मन्यन्ते। हेर्बेर्ट् स्पेन्सर् (Herbert Spencer)-प्रभृतयः एतत्सिद्धान्तानुसारिणो भवन्ति।

अयं सिद्धान्तः नाद्रियते बहुभिः। वृत्तिः कापि यद्यपथेनात्मानं प्रकाश्य जीवं व्यापारयति तर्हि जीवः दुरभ्यासवान् जायते। ततश्च वृत्तीनां परिष्कारः उचितेन मार्गेण चाविष्कारः इति इदं द्वयं कर्तव्यम्। नियन्त्रणम् (निग्रहः-Repression), अनुत्पत्तिः (Inhibition), मार्गान्तरप्रवर्तनम् (Redirection),

शोधनमथवा उदात्तीकरणम् ( Sublimation) इति चत्वारः उपायाः सामान्यतः दुष्फ्लायाः वृत्तेः विषये निर्दिश्यन्ते। नियन्त्रणं अथवा अवदमनं सन्तर्जनेन दण्डनेन च कर्तुं शक्यते। इदं साध्यमपि स्यात्। किन्तु एवं नियन्त्रिताः वृत्तयः मनसोऽधोभागे निलीनाः सत्यः पश्चात् कालान्तरेऽनभिमतेन मार्गेणात्मानं प्रकाशयन्त्योऽनर्थं कुर्युः।

वृत्तीनामाविर्भावस्यावकाशादानमेव अनुत्पत्तिरूपोपायत्वेन निर्दिश्यते। वातावरणादिकं तथा कल्प्यते यथा तत्र वृत्तिः दूरूपेण नैवात्मानमाविष्कुर्यात्। विरक्तानां सच्चारित्रवतां जनानां मध्ये निवसतः कामुकतावृत्तिः नैवाविर्भवेदिति केचन कथयन्ति। आधुनिके लोके सर्वथा तादृशपरिवेषरक्षणं दुस्साधम्। पुराणप्रसिद्धपुरुषेषु ऋष्यशृंग एवात्रोदाहरणम्। तस्मात् पूर्वोक्तमुपायद्वयमपि परित्याज्यमेव। मार्गान्तरप्रवर्तनं तु शोधनोपाय एव। युयुत्सावृत्तिः अन्याय्यनिग्रहे उपयोक्तुं शक्यते। सर्वत्रानुभूयमाना भीतिः अधर्मात् जनसमाजाहितकरणाच्च यदि स्यात् तर्हि प्रशस्ता स्यात्। [1]उदात्तीकरणम् इत्यनेन इदमुच्यते, 'यत् मूलप्रवृत्तेः नीचात् जीवसाधारणाच्च लक्ष्यात् परावर्तनम्, समाजाभ्युपगतं व्यक्तेः हितकारि चोन्नतं किमपि लक्ष्यमुद्दिश्य प्रवर्तनं च' ति। दुर्लक्ष्यसम्बन्धात् दूषितायाः वृत्तेः शोधनमेवात्रोच्यते। फ्रायड्-महोदयः लैङ्गिकवृत्तिविषये एवोदात्तीकरणमङ्गीकृतवान्। परं सर्वासामपि वृत्तीनां अपथे प्रवर्तमानानां शोधनं कर्तव्यमेव। पाठशालायामध्यापकस्य वृत्तिशोधनाय वर्तन्ते बहवः सन्दर्भाः। एता वृत्तय एव सदाचारस्यापि हेतवो भवन्ति। युयुत्सावृत्तिः परहिंसातो निवर्तिता क्रीडायां वादगोष्ठ्यां च शोधनं लभते। अकालिकी कामवृत्तिश्च मानसोल्लासकार्येण काव्यनाटकादिपठनेन च शुध्येत। तृतीयचतुर्थोपाययोः नास्ति भेद इति केषांचिन्मतं वर्तते।

---

1. " Sublimation is the word used to describe the process of redirecting an instinct from its primitive, biological goal to one that is socially and individually uplifting " p. 71. *Educational Psychology*. Ross.,

व्यवहारवादिनां मतमत्र किञ्चित् प्रस्तोतव्यं भवति। एवं महता तर्केण साधितमपि अमुं सिद्धान्तं व्यवहारवादिनः नाङ्गीकुर्वन्ति। 'मूलप्रवृत्तिवादिनः प्रवृत्तीनां संख्यां विभिन्नां कथयन्ति। तस्मात मूलप्रवृत्तिरिति निर्दिश्यमाना इयं किं तात्त्विकी? उत काल्पनिकी?' इति संशेरते ते। 'यदि तात्त्विकी स्यात् तर्हि कथं मूलप्रवृत्तिसंख्याभेदः? पैतृकवृत्तिः सहजेति, अत एव जीवाः अपत्यं वाञ्छन्ति, प्रीत्या पोषयन्ति' इति च अन्ये कथयन्ति। 'वस्तुतस्तु काश्चन मातरः जातं अपत्यं मारयन्ति। कुतोऽपत्यमिष्यते इति पृष्टाः काश्चन स्त्रियः "मम नैसर्गिकी इच्छा वर्तते अपत्ये" इति नोक्तवत्यः। 'मम क्रीडार्थमपत्यमपेक्षितमि' ति, 'भर्ता वाञ्छति' इति, 'वन्ध्यानां समाजे गौरवं नास्ति, अतः गौरवप्राप्त्यर्थमिष्यते' इति च कारणानि उक्तवत्यः। तस्मात् तादृशी वृत्तिरेव नास्ती'ति व्यवहारवादिनः।

परमिदमवगन्तुं शक्यमुपाध्यायैः यत् निसर्गादेव बालेषु काश्चन वृत्तयो वर्तन्त इति। एताः येन केनापि नाम्ना निर्दिश्यन्ताम्। अथाप्येताः बालशिक्षणे उपयुज्यन्त इत्यत्र नास्ति विशयलेशोऽपि इति।

## संवेगाः

इदानीं संवेगमधिकृत्यापि किञ्चित् ज्ञातव्यम्। को नाम संवेगः? मक्डूगल्महोदयः 'एकैकस्या अपि वृत्तेः सारभूतः तदविनाभूतश्च कश्चन संवेगो वर्तते। स एव जीवं कार्यकरणाय प्रेरयति, वर्तयति च व्यापारं यावल्लक्ष्य-प्राप्ति। मूलप्रवृत्तेरुद्बोधकः तत्संबद्धं संवेगमप्युद्बोधयेदेव। कोपभयविस्मयादीनां भावानां विभावनमस्माकं वर्तते। एते एव भावाः यदा दृढतरं प्रतीता भवन्ति तदा ते संवेग (Emotion)-शब्दवाच्या भवन्ती'ति चाह। एते संवेगाः मुख्याः (Primary), मिश्राः (Blended), उत्पादिताः (Derived) इति त्रेधा वर्ण्यन्ते। मुख्यास्तु चतुर्दश पूर्वमेव निर्दिष्टाः। एकस्मिन् समये एक एव संवेगो भवेदिति नास्ति नियमः। एकः प्रधानः स्यात्। अन्ये तु तदङ्गतया भवेयुः। सहसा जातं शब्दं श्रुत्वा भीतिसंवेगः प्रधानतया भवेत्। तदैवाश्चर्यसंवेगोऽपि भवेत्।

तदधिकृत्य जिज्ञासापि स्यात्। अस्माकमालङ्कारिका अपि भावानां संसृष्टिं संकरं शबलतां च वर्णयन्ति। भावानां परस्परं भेदो वर्तते। कोपभये न तुल्ये। यदा एकस्मिन्नेव समये द्वयोः अथवा ततोऽधिकसंख्याकानां वा संवेगांशानां विभावनं भवति तदायं मिश्रसंवेग इति निर्दिश्यते। भक्ति-गौरवबुद्धि-कृतज्ञता-अभिनन्दन-गर्हणा-असूया-लज्जाप्रभृतयः एतादृशाः।

उदाहरणम्- यदा द्वे वृत्ती एकेनैव वस्तुना उद्बोधिते परस्परमनुकूले भूत्वा स्वं स्वं संवेगं अविरोधेन प्राप्नुतः, तत्र संवेगद्वयस्य मिश्रणं वर्तते। दुष्टः कश्चित् यदि श्वानं कमपि निर्दयं पीडयति तर्हि तद्दर्शनेन कोपः, घृणेति संवेगद्वयमुत्पादितं स्यात् दयावतो मनसि। इमौ उभावपि समेत्य अवहेलनबुद्धिं अथवा गर्हाबुद्धिं जनयतः इति।

केचन संवेगाः एकस्या एव वृत्तेः उद्भूता न भवन्ति; किन्तु कृतिरूपेभ्यः मूलप्रवृत्त्यंशेभ्यः सन्दर्भवशात् उद्भूता भवन्ति। अत एव ते उत्पादिताः अथवा गौणाः संवेगा इति व्यपदेशमर्हन्ति। सुख-दुःख-आशा-आशाभङ्गप्रभृतयः अत्रान्तर्भवन्ति।

## संवेगधर्माः

मूलप्रवृत्तिवत् निसर्गादेवोद्भवतामेषां संवेगानां सामान्याः केचन धर्मा वर्तन्ते। सर्वजीवसाधारणः संवेगः कोपः न केवलं प्रौढानां मानवानां किन्तु मृगाणां बालानामपि जायते एव। वस्तुनः कस्यापि विषये विभावनं (Feeling) यद्युत्कटं भवति तर्हि तदेव विभावनं संवेगशब्दवाच्यं भवति। संवेगश्च प्रीतिरूपः द्वेषरूपो वा स्यात्। मधुपानेनापि संवेगो जायते। तत्र वस्तुविषयकः संवेगो न भवति। विभावनस्यौत्कट्यं केवलं वर्तते। एतादृशसंवेगस्य मिथ्यासंवेगः (Pseudo-emotion) इति नाम।

2. यदा संवेगा भवन्ति तदा तत्सम्बद्धतया केचन शारीरा विकाराः कम्पस्वेदरोमाञ्चप्रभृतयः (सात्त्विकभावा इत्यालङ्कारिकाः) दृश्येरन्। शारीर-

विकारेण संवेगः अनुमीयेत। क्वचित् संवेगानुगुणं नियताः सात्त्विकभावाः नैव दृश्येरन्। कुत इति चेत् समर्थाः केचन पुरुषाः संवेगचिह्नानि निगूहितुं शक्नुवन्ति। 'गूढाकारेंगितस्य च' इति कालिदासः। 'बहिः सर्वाकारप्रकटरमणीय'मिति भवभूतिः। केचन तु परप्रतारणार्थं विपरीतचिह्नान्यपि प्रदर्शयेयुः। अतः चिह्नदर्शनेन, अयं संवेगो वर्तत इति ज्ञानं मनुजेषु दुर्लभम्।

3. संवेगः शिशुषु वृद्धेषु युवसु च सहसोद्भावयितुं शक्यते। मन्दकोपादुत्कटकोपं यावत् तरतमभावेन अयं संवेगः जनयितुं शक्यः।

4. कस्यापि संवेगस्य वशंगतो मानवः, संवेगकारणस्य निवृत्त्यनन्तरमपि, संवेगं तद्वेगं चानुभवेत्; संवेगवेगदशाया नाम भावदशा (Mood) इति। प्रकृतिः (Temperament) इति निर्दिश्यमानः स्वभावः संवेगस्य शीघ्रोत्पत्तौ विलम्बोत्पत्तौ च कारणं भवति। प्रकृत्यनुगुणमेव केचित् शीघ्रकोपाः, केचित् मन्दकोपाः केचिदकोपाश्च भवन्ति। भावदशायाः प्रकृतेश्च भेदोऽवगन्तव्यः।

5. संवेगः विवेकं न्यूनीकरोति। अत एव केचन संवेगवशंगताः फलमविचिन्त्य कार्येषु प्रवर्तन्ते। हननमपि कुर्वन्ति। "क्रुद्धो हन्याद्गुरूनपि" इति वाल्मीकिः। शिक्षायामपि केचन संवेगा विघ्नमाचरन्ति। सर्वकारकार्यालयेषु पत्राणामुत्तरं सद्यो न दीयते। अत्र च निदानं वैशद्यप्राप्त्यर्थं क्रियमाणः प्रयत्न एव। विलम्बेन समुचितमुत्तरं स्वयमेव स्फुरेत्।

6. केचन संवेगाः मनसः अवसादं जनयेयुः। केचन तु अयथाशक्त्यपि कार्यं कर्तुं नरं प्रेरयेयुः। अत एव भीताः तस्कराः दुरारोहामपि भित्तिमारोहन्ति। दुस्तरामपि वृतिं एकोत्पातेन विलङ्घ्य पलायन्ते।

7. उत्पाद्यमानः संवेगः वास्तविकं कारणं परित्यज्य अन्येनापि कारणेनोत्पादयितुं शक्यते। आल्बेरट्-नामको बालकः श्वेतमूषिकात् प्रथममभीत एवासीत्। पश्चात् श्वेतमूषिकदर्शनकालेषु अयोदण्डेन तीव्रतरः शब्दः उत्पादितः। तच्छब्द-

श्रवणेन जातव्यथः बालः श्वेतमूषिकदर्शनमेव व्यथाकारणं चिन्तयन् मूषिकाद्बिभाय। तदनन्तरं श्वेतवर्णं मातुः प्रावरणमपि तस्य भीतिमुदपादयत्।

8. संवेगे जाते सदा वर्तमानाः केचन धर्माः तिरोभवन्ति। आस्ये जायमाना लाला नोद्भवेत्। मुखं शुष्येत्। पिपासा च जायेत। प्रथमसभाप्रवेशे केषांचिदियमवस्था जायेत। कोपभीत्यादिषु भुक्तस्याहारस्य जरणमपि न भवेत्। एते विकाराः सर्वेऽपि अनुकम्पतन्त्रिका (Sympathetic) - विभागेन जायन्ते। तदा अड्रिनल्ग्रन्थितः निस्सृतः स्रावः अधिकतरं रक्ते प्रविश्य हृदयवेगमधिकयति। श्वासाश्च द्रुततरं भवन्ति। शारीरं बलं च वर्धयति। [अत एव कुपिताः केचन अयथाबलं कार्यं कुर्वन्ति।] रक्तस्य द्रुतमेव घनीभावावस्थां जनयति। अत एव अस्मिन् समये जातात् व्रणात् रक्तं नाधिकं स्रवेत्, यतो व्रणमुखे स्थितं रक्तं घनीभूय उपर्युपरि जायमानं रक्तस्रावं स्वयमेव निरुणद्धि। प्रकृत्या मानवस्य इदं रक्षणं कल्पितं वर्तते इति सन्तोष्टव्यम्। संवेगाः प्रायशः नरं सुखं प्राप्तुं असुखं परित्यक्तुं च प्रेरयन्ति।

शिशूनां संवेगः प्रारम्भदशायामविभक्तं निर्विकल्पकं च वर्तते। पश्चादेव वैशद्यं प्राप्य विभक्तो भवति। अस्यां दशायां कोपः भीतिः प्रीतिः इति त्रयः एव संवेगाः आविष्कृता भवन्ति इति च कथयन्ति।

संवेगमधिकृत्य केचन सिद्धान्ता वर्तन्ते। सामान्यतो वस्तुविभावनम्, तदनन्तरं च दृढतरप्रतीतिरूपः संवेगः, तदैव स्तम्भप्रलयादयो विकाराः इति क्रमः ज्ञात एव। संवेग-शारीरविकारयोः कतरस्य प्रथममाविर्भाव इत्यत्र केचन विज्ञानिनो विप्रतिपद्यन्ते। सर्पे दृष्टे सहसा भीतिर्जायते। तदनन्तरं स्वेदकम्पादयो भवन्ति इति सामान्यतो जना मन्यन्ते। ततश्च संवेगः पूर्वं, विकारः तदनन्तरमिति वर्ण्यमानः अयं सिद्धान्तः लोकप्रतीतसिद्धान्तः (Commonsense theory), इत्युच्यते। **विल्लियं जेम्स्-कार्ल् लाङ्गे**-नामकौ[1] द्वौ विज्ञानिनौ, अनयोः

[1] William James (1842-1910); Carl Lange (1834-1900) Danish Psychologist.

पौर्वापर्यं वैपरीत्येन निरूपयन्तौ कमपि सिद्धान्तं 1884-85 वर्षयोः अवर्णयताम् । अस्य सिद्धान्तस्य 'संवेगविषयक-जेम्स्-लाङ्गे-सिद्धान्तः [1]इति नाम। एवमयं सिद्धान्तो भवति। कस्यापि वस्तुनः दर्शने जातस्य शारीरविकारस्यानुभव एव संवेगो भवति। शरीरविकारदर्शनात् जायमानः मानसो विकार एव संवेगः। शारीरविकाराभावे संवेगोऽपि न भवेत् इति जेम्स्वचनं अधो दीयते।

'लोकज्ञानमस्मानेवं बोधयति ; अस्माकं धनं नष्टं भवति। दुःखिता भवामः। ततश्च आक्रन्दामः। अरण्ये भल्लूकं पश्यामः। बिभिमः। पलायामहे च। कोऽप्यस्मानवमनुते। क्रुध्यामः, प्रहरामस्तम्'इति। परं युक्तियुक्तं वचनमेवं भवितुमर्हति। 'वयं दुःखिताः यतो वयमाक्रन्दामः। वयं क्रुद्धाः यतः प्रहरामः। वयं भीताः यतो वयं कम्पामहे' इति। 'नत्वेवम्-यतो वयं आक्रन्दामः, प्रहरामः, कम्पामहे ततो वयं यथायोगं दुःखिताः, क्रुद्धाः भीता ' [2]इति।

अयं सिद्धान्तः सर्वाभ्युपगतो न भवति। कैश्चित् वैज्ञानिकैरयमपसिद्धान्त इति सयुक्तिकं साधितो वर्तते।

**बार्ड्-काननू**[3]-नामकौ द्वौ विज्ञानिनौ संवेगशरीरविकारयोराविर्भावे अन्यं कमपि सिद्धान्तमुद्भावयामासुः। अस्य सिद्धान्तस्य-केन्द्रसिद्धान्तः (Central Theory) इति नाम। संवेगः शारीरो विकारः इति इदमुभयमपि एकस्मिन्नेव समये हैपोतालमसाख्यस्य मस्तिष्कभागस्य कार्येण जायते। संवेगोत्पादकाः प्रथमं हैपोतालमस्-भागमुपस्कुर्वन्ति, ततश्च तन्त्रिकाकोशिकाकार्याणि उपरितनमस्तिष्कं प्राप्य संवेगं जनयन्ति। तदैव अधोमुखतन्त्रिकाकार्याणि अनुकम्पितन्त्रिकामण्डलमपि संप्रेर्य शारीरविकारानप्याविर्भावयन्ति। अत एव संवेगाधिक्येन पीड्यमानानां संवेगशान्त्यर्थं तादृशभेषजं दीयते यत् हैपोतालमस्-भागमुपस्कृत्य संवेगं न्यूनीकरोति। ततश्चान्वयव्यतिरेकाभ्यां हैपोतालमस्-भागस्य

---

1. James-Lange Theory of Emotions 2. Quorted by Ross P, 66. 3. Bard, Walter Bradford Cannon (1871-1945)

संवेगस्य च सम्बन्धः इदानीं स्थिरीकृतो वर्तते इति। एते त्रयोऽपि सिद्धान्ताः संवेगस्य शारीरविकारस्य च परस्परसम्बन्धं तन्त्रिकामण्डलोपयोगं च निरूपयन्ति।

आधुनिकशिक्षायां संवेगः प्रधानं स्थानमर्हति। जीवनं कृत्स्नमपि आनन्दपूर्णमनुभवितुं साधुसंवेगाः मानवा एव शक्नुवन्ति। सुसंवेगा एव जीवनमास्वादनीयं कल्पयन्ति। सौन्दर्यानुभूतौ कलारसनायां भूयान् भागः संवेगस्य वर्तते। भाषाध्ययने च संवेगवानेव काव्यनाटकादिषु वर्ण्यमानं तं तमंशं, उत्प्रेक्षादीनलङ्कारान्, व्यङ्ग्यार्थान् शैलीसौन्दर्यं चानुभवितुं रसं प्रत्येतुं च कुशलः स्यात्। परं अतिसंवेगः कदाचिदनर्थमप्यावहेत्। समग्रव्यक्तित्ववृद्धौ पूर्वं वृत्ताः केचन संवेगोपघाता एव प्रतिबन्धका भवन्ति। कुसमंजन-दिवास्वप्न (Day-dreaming) अपचरित्रादिदोषाश्च संवेगदोषेणैवोद्भवन्तीति वैज्ञानिकाः अभिप्रयन्ति। संवेगः शरीरान्तर्वर्त्यवयवकार्याण्यपि उपरुणद्धि। असकृदुपरोधे बहवः उपद्रवाः जायन्ते। आहारः न सम्यक् परिणतिमृच्छेत्। श्वासे हृदयपरिस्पन्दे च संवेगात् वेगो जायेत। तस्मात् विद्यार्थिनां संवेगाः यथा साधुकार्यं कुर्वन्ति, तेषामनुपातश्चोचितो भवति तथाचरितव्यमाचार्यैः। स्थितप्रज्ञ इति गीतायां यो वर्णितः स एव साधुकल्पितसंवेगवान् मानव इति वक्तुं शक्यते।

यस्य संवेगः समीचीनः स एवं वर्तेत। सः कालानुगुणं संवेगं तारतम्येन प्रकाशयेत्। सः संवेगं निग्रहीतुमपि शक्नुयात्। सः आत्मदयां (Self-pity) न कुर्यात्। परेभ्यो वस्तूनामादानापेक्षया तेभ्यो दानमेवास्मै रोचेत। परैः सह संभूय कार्यकरणे उत्साहवान् भवेत्। यथाशक्ति कुटुम्बस्य पाठशालायाः जनसमाजस्य ग्रामस्य नगरस्य च हिते प्रवर्तेत। स्वेन कृतमपराधं बुद्ध्वा कर्तव्यं निश्चिनुयात्। कालं व्यर्थं न नयेत्। व्यर्थचिन्ताभीत्यादयः अस्य हृदि पदं नैव लभेरन्। अतिसङ्कटकालेऽपि संभ्रममप्राप्य धीर एव वर्तेत। आत्मनः संवेगेषु प्रायशः वात्सल्यादीनेव प्रकाशयेत् न तु कोपादीन्। संवेगानां मिथो विरोधे (Conflict) विवेकेनासमीचीनं निरुन्ध्यात्। समीचीनमनुमन्येत। मनोनिग्रहे समर्थः स्यात्।

मूलप्रवृत्तय इव एते संवेगा अपि सम्यग् वर्धनीयाः आचार्यैः पितृभिश्च ; समीचीनमार्गे प्रवर्तनीयाः अथवा शोधनीयाः। समीचीनसंवेगप्रदर्शने गुरवः पितरश्च स्वयमादर्शपुरुषा भवितुमर्हन्ति । संगीतश्रवणे नाटकदर्शने काव्यानुभूतौ कलावस्तुवीक्षणे प्रकृतिसौन्दर्याभिनन्दने च विद्यार्थिनः परिचयवन्तः कार्याः। कमपि छात्रम् 'अयं मूर्ख' इति नैव निन्देदाचार्यः। एवं कृते अनभिमतः संवेगः पदं लब्ध्वानर्थं कुर्यात्। छात्रः न केवलमेतादृशमाचार्यं किन्तु तदध्याप्यं विषयमपि द्विष्यात्। कैशोरदशायां संवेगमधिकृत्य प्रबोधः कर्तव्यः। यथा असमीचीनमार्गे युवानः न प्रवर्तेरन् यथा च संवेगान् परिष्कुर्युः अथवा निगृह्णीयुः तथा तेभ्यः उपाध्यायाः साहाय्यं कुर्युः। निर्नियन्त्रणं अकाले अनुचितेन मार्गेण यद्येकैकोऽपि मानवः स्वसंवेगं प्रकाशयेत् तर्ह्यत्र लोके जीवनमेव पशुजीवनतुल्यं स्यात्। अतः बाल्ये एव संवेगानां परिष्कारे नियन्त्रणे च बालानां प्रशिक्षणं प्रदेयम्। कलाकार्येषु आसक्तिः, काव्यानुभवः, सत्सङ्गतिः, भगवति भक्तिश्चात्र उपकुर्युः।

संवेगेषु भीतिः कोपश्च प्रधानौ। भयं च सर्वजीवसाधारणं वर्तते। पराजये, आपदि च मानवस्य भीतिः जायते। शिशवः महान्तं शब्दं श्रुत्वा, प्रकाशं दृष्ट्वा, पतनं मत्वा च भीता भवन्ति। अन्धकारोऽपि भीतिं उत्पादयति। पितॄणां भीतिरपि बालस्य भीतिं जनयति। पितरः सदाचारवर्धनायापि पिशाचादीन् निर्दिश्य बालेषु भीतिमुत्पादयन्ति। पाठशालामागच्छतो बालस्य नूतनानि कानिचन भयकारणानि संमुखीभवन्ति। परीक्षापराजयः, सतीर्थ्यपरिहासः उपाध्यायैः क्रियमाणानि तर्जनादीनि इति बहूनि वर्तन्ते। यूनां च निरुद्योगभीः, गृहस्थानां कुटुम्बनिर्वाहभीः इति बह्व्यः भीतयो विद्यन्ते। केषांचित् निष्कारणमपि भीतिर्भवति। अस्याः नाम फ़ोबिया (Phobia) इति। परं युक्ता भीतिस्तु नरं आत्मरक्षायै उद्योजयेत्। ततश्च निरर्थकभीतिपरित्यागाय विद्यार्थिभ्यः उचितः प्रबोधः कार्यः।

यदा अभिलषिते विघ्नो जायते तर्हि कोपो भवति। स्वातन्त्र्यस्य प्रतिरोधे कृते शिशुरपि कुप्येत्, कोपं च बह्वीभिः चेष्टाभिः प्रकाशयेत्। ततश्च कोपशोधनायापि बालेभ्यः प्रशिक्षणं देयम्। हासोऽपि कोपस्य प्रतिभेषजं (Antidote) भवति। युक्तकोपस्तु आत्मोन्नत्यै कारणं भवति। **वामन-शिवराम-आप्टे**-महोदयः, प्रथमं संस्कृतपरीक्षायां पराजितः बन्धुभिरुपहसितश्च भूत्वा तीव्रं कोपं प्राप्य ततः संस्कृतं सम्यगधीत्य महापण्डितः बहुग्रन्थनिर्माता चाभवदिति ज्ञातमेव। प्रतिरुद्धाः संवेगाः भावग्रन्थीन् (Complexes) उत्पादयन्ति। हीनभावग्रन्थिश्च मानवस्य पुरोगतिं प्रतिबध्नाति। तस्मात्संवेगं मूलप्रवृत्तिं च सम्यग् ज्ञात्वा उपाध्यायैः तयोः शोधनं कर्तव्यम्। हीनभावना च, तादृशभावनावतां साध्ये कर्मणि नियोजनेन निराकृता भवति। उपाध्यायाश्च छात्रेषु प्रीत्या वर्तेरन्।

## सामान्याः सहजप्रवृत्तयः[1]।

मक्डूगल्महोदयः "यथा मूलप्रवृत्तयो जीवेषु दृष्टाः तथा काश्चन, मूलप्रवृत्तितो विभिन्नाः सामान्याः सहजप्रवृत्तयोऽपि दृश्यन्ते" इति कथयति। सहानुभूति-अनुकरण-संसूचना-क्रीडा-प्रभृतयः अत्र सहजप्रवृत्तावन्तर्भवन्ति। मूलप्रवृत्तयः नियतेन प्रेरणेनोद्भाविताः सत्यः नियतेन मार्गेण प्रवर्तन्ते। सहजप्रवृत्तयस्तु न तथा। आहारान्वेषणवृत्तिः क्षुधया केवलमुद्बोधिता भवति। आहारान्वेषणरूपं व्यापारं जनयति। अनुकरणादीनामुद्बोधने न तादृशं किमपि नियतं प्रेरणमपेक्ष्यते। अत एव एतासां सामान्या इति विशेषणमपि दीयते। एकैकस्या अपि वृत्तेः नियतः संवेगो वर्तते। सहजप्रवृत्तीनां तु न तथा इति मूलप्रवृत्तीनां सहजप्रवृत्तीनां च भेदोऽवगन्तव्यः। परं मूलप्रवृत्तिवदेता अपि सहजा एव। प्राथमिकसहजप्रवृत्तित्रये इदं वक्तुं शक्यं यत् एताः वृत्तयः जनसमाजे एवाविर्भवेयुः इति, एकस्य मानवस्य मनः अपरस्य मनःकार्येणोपस्कृतम् भवति इति च। ज्ञानं संवेगः कृतिरिति कार्यत्रयं मनसः वर्तत इति पूर्वं निर्दिष्टम्। यदा

1. General Innate Tendencies.

नरः कोऽपि स्वाशयं (स्वज्ञानं) अन्यस्य पुरतः प्रस्तुत्य तन्मनः उपस्करोति तदा संसूचनं (Suggestion) नाम व्यापारो जायते । यदा कश्चन आत्मनः संवेगेन अन्यस्य मनसि तादृशमेव संवेगं जनयति तदा स व्यापारः सहानुभूतिकरणम् (Sympathy) इत्युच्यते । यदा कस्यापि कायिक-वाचिकव्यापारं दृष्ट्वा अन्योऽपि तादृशमेव व्यापारं करोति तदा तत् अनुकरणमिति निर्दिश्यते । उपाध्यायस्य मतमनुसर्तुं बालाः प्रयतन्ते । इदं संसूचनस्योदाहरणं भवति । हसन्तं बालं दृष्ट्वा अन्ये बालाः स्वयमपि सन्तुष्यन्ति हसन्ति च । इयं सहानुभूतिः । बालाः उपाध्यायैः उच्यमानां वाचं अनूच्चारयन्ति । व्यायामाचार्योक्तरीत्या व्यायामं कुर्वन्ति । एतत्सर्वमनुकरणं भवति । एताः वृत्तयः जनसमाजानुगुणं विकासप्राप्तौ बालस्य साहाय्यमाचरन्ति । शिक्षाविषये एतासां वृत्तीनां महत् कार्यं वर्तते ।

## सहानुभूतिः[1]

अन्यस्य सुखदुःखादीनां भावानां तेन सह योऽनुभवो भवति तस्य सहानुभूतिरिति नाम । "परकीयं संवेगं विभावनं (Feeling) च तत्प्रकाशकनैसर्गिकचिह्नानां विलोकनेनानुमाय सद्य एव योऽनुभवो द्रष्टुर्जायते सा एव सहानुभूतिः" इति लक्षणं उच्यते **ड्रिवेर्** (Drever)-महोदयेन । चिह्नदर्शनेनैव सद्यः सहानुभूतिः जायते; न तु सुखदुःखकारणान्वेषणानन्तरमिति विशेषः । संभूय वर्तमानाः हरिणप्रभृतयः प्राणिनः, अनया वृत्त्या उपकृता भवन्ति । यद्येको हरिणः भीत्या पलायेत तर्हि सर्वेऽपि पलायन्ते । आत्मानं च रक्षन्ति । यदा केचन जनाः भीताः पलायन्ते तदा पार्श्वस्थिता अपि पलायेरन् । इयं सहानुभूतिः क्रियाशीला (Active), तदितरा (Passive) इति द्वेधा विभज्यते । सहानुभूतिरस्मासु क्रियाशीला यदि स्यात् तदास्माभिः किमपि कार्यमपि क्रियेत । भिक्षुकाः अस्मासु तादृशीं सहानुभूतिमुत्पादयन्ति यतो वयं सद्यो धनादि दद्मः । कदाचि-

---

1. Sympathy

दत्र प्रतारणमपि भवति। अक्रियाशीलसहानुभूतौ केवलमनुभव एव भवेत्। काव्यनाटकाद्यध्यापने उपाध्यायः सहृदयो भूत्वा रसमनुभवन् यदि तत्तद्रसानुभवानुगुणं निपुणनटवत् सात्त्विकादिभावानपि आविष्करोति तर्ह्येव बाला अपि तेन सह सहानुभूतिं प्राप्य काव्यसौन्दर्यमनुभवेयुः। कक्ष्यायां विद्यार्थिनः सर्वेऽपि आत्मनः अनुभवं सर्वदा सर्वथा च यथा समं भजेयुः तथा व्यवहरेत् उपाध्यायः। तदैव अनुशासनमपि कक्ष्यायां सुष्ठु रक्षितं स्यात्। उपाध्यायः यत् अन्याय्यं मन्यते तदेवान्याय्यत्वेन मन्तव्यं विद्यार्थिभिः। यादृशं दण्डनमनुशासनभङ्गे वितरति, तदपि दण्डनं न्याय्यमित्येव प्रत्येतव्यं बालैः। यदि शोभनं किमपि कार्यं अभिनन्दति उपाध्यायः तदपि सहानुभूत्या अभिनन्दनीयं छात्रैः। उपाध्यायानुभवस्य वैपरीत्येन अनुभवं यथा न प्राप्नुयुः बालाः तथोपाध्यायः न्याय्ये मार्गे वर्तमानः उचितेन मार्गेण आत्मनः अनुभवं प्रकाश्य विद्यार्थिनोऽपि तत्र भागिनः कुर्यात्। अनेन ज्ञायेत कियान् प्रभावो वर्तते सहानुभूतेः शिक्षायामिति।

अयं सहानुभूतिस्वभावः सर्वेषां वर्तत एव। केषांचित्तु न वर्तेत। अत एव केचन निर्दया भवन्ति। केचित्तु हसितुमपि न जानन्ति। काव्यनाटकादिविषये सहानुभूतिविरहिताः अरसिका भवन्ति। अत एवोक्तं 'अरसिकेषु कवित्वनिवेदनं शिरसि मा लिख, मा लिख, मा लिखे'ति।

## अनुकरणम्

परस्य कायिकं वाचिकं वा व्यापारं अनुसृत्य, यत् तत्सदृशं क्रियते तदेवानुकरणमिति पूर्वमुक्तम्। अनुकरणं च न सर्वप्राणिसाधारणम्। ये जीवाः संभूय वर्तन्ते (Gregarious) तेषामेवायं स्वभावः वर्तते। अस्माकं जीवनं सर्वमपि अनुकरणेनैव निष्पन्नं भवति। विदितमविदितं वा वयं सर्वेऽपि गतिस्थितिभाषणादिषु अस्मदीयाननुकृतवन्तः। अनुकुर्महे च। बालाश्च पितरं मातरं धात्रीं वानुकुर्वन्ति। प्रथममविदितमेवानुक्रिया भवति। भाषा-स्वर-निरर्थक-

चेष्टास्वपि (Mannerisms) पूज्यजनाः अनुक्रियन्ते। अस्माकं संस्कृतिः सर्वापि अनुकरणमूलैव। मक्डूगल्-महोदयः अनुकरणं पञ्चधा विभक्तवान्। परं तेषु प्रधानभूतानि त्रीणि भवन्ति।

## 1. सहानुभूत्यनुकरणम्[1]

बालः कश्चित् हसन्तं, रुदन्तं, भयात् धावन्तं वा बालं अनुकृत्य स्वयमपि हसेत्, रुद्यात्, धावेत्। अत्र कारणचिन्ता नैव क्रियते। परकीयस्य भावस्य सहानुभूतिं प्राप्यात्र अनुकरणं भवति। अस्यैव प्रतिक्रियानुकरणमित्यपि नाम दीयते।

## 2. प्रत्ययचालितानुकरणम्[2]

चतुरं क्रीडतां जनानां हस्तपादचलनादिज्ञानमस्मासु तादृशमेव चलनादिकमुत्पादयेत्। परकीयक्रियाज्ञानेनोत्पादितत्वात् अनुकरणस्यास्य एवं नाम। बालाः पुरतः स्थितस्याचार्यस्य सर्वमपि मुखभावचेष्टादिकं सुसूक्ष्मं पश्यन्ति, अनुकुर्वन्ति च। अत्र बुद्धिपूर्वमनुकरणं वर्तत इति बुद्धिपूर्वानुकरणमथवा ऐच्छिकानुकरणमित्यपि नाम भवति।

## 3. विचारानुकरणम्[3]

विचिन्त्य, किमपि प्रयोजनमुद्दिश्य कस्यापि महतः कार्यादीनां यदनुकरणं तस्येदं नाम दीयते। सङ्गीते, वेदाध्ययने शरीरव्यायामे अन्यत्र चैतादृशमनुकरणं भवति। गानाचार्यः वेदाध्यापकश्च यथा कथयति तथैव मात्रयाप्यन्यूनानतिरेकमनूच्चारणं भवति। किमप्युन्नतं लक्ष्यं स्वीकृत्य तदनुगुणं व्यवहरिष्यन्तः तत्र कमपि पुरुषं आदर्शं गृहीत्वा स इवाचरन्ति। 'यद्यदाचरति श्रेष्ठः तत्तदेवेतरो जनः'। इदं चानुकरणं प्रायः युवसु दृश्येत। यान् पूज्यतमान् मन्यन्ते तेषां वेषभूषादिकमप्यनुकुर्वन्ति। सामान्यजनानां, वेषभूषा-

---

1. Sympathetic imitation. 3. Deliberate imitation.
2. Ideo-motor Imitation.

दिविषये, छायाचित्राभिनेतारो नेतारो भवन्ति। अन्येषां केषांचित् वैज्ञानिकानां मतानुसारेणापरमपि द्विविधं अनुकरणं वर्तते। सभासु सुष्ठु क्रियमाणस्य भाषणस्य अथवा गानस्य श्रवणात्परं तदभिनन्दनरूपेण केचन करघोषं कुर्वन्ति,ताननुसृत्य इतरेऽपि करतालं कुर्युः। अत्र क्रिया केवलमनुक्रियते। उद्देश्यं तु नेक्ष्यते। अतः अस्य स्वतोजातानुकरणमिति[1] नाम। नाटकपात्राणामात्मन्यध्यासेन रामभीमवत् यदा भाषणचेष्टादिकं क्रियते तत्र नाटकानुकरणं[2] भवति। अत्र कल्पनाशक्तिरपेक्ष्यते, यतोऽभिनेता अभिनयकाले आत्मानं रामं भीमं वा कल्पयति।

## अनुकरणं शिक्षा च

शिक्षाकलायामनुकरणस्य महत् स्थानं वर्तते। प्राचीनकाले विद्या सर्वाप्यनुकरणेन लब्धा। सर्वोऽपि प्राचीनः संप्रदायः अनुकरणेनैवाद्यावधि रक्ष्यते, दीयते च सन्ततिभ्यः। "येनास्मत्पितरो याताः येन याताः पितामहाः। तेन यायात् सतां मार्गं तेन गच्छन्नरिष्यती"ति इदं मनुवचनमपि विपदभावं सूचयदनुकरणस्य प्राधान्यमपि व्यञ्जयति। येऽनुकर्तुं समर्थाः ते एव भाषाज्ञानं सुखं द्रुतं च प्राप्नुवन्ति यतो भाषाज्ञानमनुकरणप्रधानम्। यस्य अनुकरणशक्तिरधिका स एव शीघ्रतरं ज्ञातुं कर्तुं च प्रभवति। प्राणिषु वानराः पक्षिषु शुकाश्च अनुकरणशक्तिमन्तो दृश्यन्ते।

अत्यनुकरणं स्वातन्त्र्येण चिन्तनं, स्वतःकर्तव्यां कल्पनां च (Originality) नाशयतीति, मूढानामेवानुकरणमवश्यापेक्षितं न तु बुद्धिमतामिति च केषांचिदाशयः। इदं तु न समीचीनम्। अनुकरणं तावत् शिक्षणकलायां प्रथमं सोपानं भवति। ततश्च अनुकरणेन प्राप्तज्ञानाः मानवाः पश्चात् स्वातन्त्र्येण चिन्तने कल्पनायां च स्वयमेव प्रवर्तेरन्। भाषाज्ञानं भाषाशैलीज्ञानं च प्रथममनुकरणेनैव प्राप्तव्यं भवति। ये त्वनुकुर्वन्ति तेऽपि विना विचारं सर्वमनुकुर्वन्तीति वक्तुं न शक्यम्। बहुष्वेकं स्वानुकार्यं निश्चिन्वन्ति। तद्व्यवहारेष्वपि कमप्याद्रियन्ते। ततश्च

---

1. Spontaneous imitation. 2. Dramatic imitation

वर्तेत एवानुकरणेऽपि स्वातन्त्र्यम्। अनुकरणनिराकरणं नोचितम्। अन्धानुकरणं तु वर्ज्यं स्यात्। अनुकरणेन पूर्णफलप्राप्त्यर्थं सर्वांशानुकरणं वर्जनीयं भवति। उपाध्यायाश्चात्यनुकरणं निराकृत्य यथा बालाः उचितानुकरणेन शिक्षायां प्रगतिं प्राप्नुयुः तथोपदिशेयुः। आदर्शभूतैरुपाध्यायैः समीचीनकार्याभ्यासादय एव प्रदर्शनीयाः। अत एवोपनिषदाचार्यः कथयति, "यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि, नो इतराणि" इति। यथा विद्यार्थिनः उपाध्यायेषु गौरव-बुद्धिमावहेयुः तथोपाध्यायैराचरितव्यम् यतो बाला उपाध्यायमनुकुर्वन्ति सोत्साहम्।

## संसूचनम्[1]

नराः केचन परकीयमाशयं भावांश्च, विना हेतुचिन्तनं, येनोपायेन ग्राहिता भवन्ति, तस्योपायस्य 'संसूचनम्' इति नाम। परोऽपि स्वाशयमन्यस्मै तथा कथयति यथा अन्यः विना पर्याप्तकारणचिन्तनं तदुक्तं सर्वं गृह्णाति। अत्र सूचनशब्दः ग्रहणान्तं सूचयति। तर्करीत्याङ्गीकाराय पर्याप्तयुक्तयसत्तायामपि परोक्ताशयस्य पूर्णतृप्त्या ग्रहणं यो व्यापारो जनयति तस्य सूचनमिति नामेति तल्लक्षणमुक्तं मक्डूगलेन[2]। अत्र पराशयो गृह्यत इत्यपि बुद्धिः न भवेत् ग्रहीतुः। पराशयमपि स्वाशयमेव मन्येत ग्रहीता। भोजराजोदाहृतं किमपि पद्यमत्रावधान-मर्हति। "यदेव रोचते मह्यं तदेव कुरुते प्रिया' इति वेत्ति; न जानाति तत्प्रियं यत्करोति सा" इति। यो विषयः सूच्यते स सूचनीयपदवाच्यो भवति। ये चानायासं परोक्तं सहसा गृह्णन्ति तेऽपि सूचनीयाः (Suggestible) इति व्यपदिश्यन्ते। सूचनीयत्वस्वभावः मानवानां स्वाभाविकयूथवृत्तित्वरूपमूलप्रवृत्तेः फलं भवति। संसूचनं शुभमशुभं वा फलमुद्दिश्य कर्तुं शक्यते। प्रचारसूचना

---

1. Suggestion—2 Suggestion is a process of communication resulting in the acceptance with conviction of the communicated propositi n in the absence of logically adequate grounds for its acceptance. p. 83 *Introduction to Social Psychology* McDougall.

(Advertisement) - प्रभृतिषु व्यञ्जना प्रधाना भवति। अस्मदालङ्कारिकैः व्यञ्जनावृत्त्या वस्त्वलङ्काररसानां सूचनं यत्र काव्ये क्रियते तदेवोत्तमं काव्यमिति कथयद्भिः सूचनाप्राधान्यं द्योत्यते एव। परमाधुनिकाः मनोविज्ञानिनः काव्यसूचनं सूचनेऽन्तर्भावयितुं नेच्छन्ति। संसूचनेऽवगन्तव्याः केचन विषयाः वर्तन्ते।

1. मनोवशीकरणप्रक्रियया (Hypnotism) येषां मनः पूर्वमेव वशीकृतं ते तादृशभिषजा (Hypnotist) उक्तं सर्वमङ्गीकुर्वन्ति।

2. प्रौढापेक्षया बालाः द्रुतं पराशयं गृह्णन्ति। क्रीडतां बालानां चित्रं त्रिंशत्क्षणपर्यन्तं केभ्यश्चन बालेभ्यः प्रदर्श्य चित्रं तिरोधाय, अत्र चित्रे कति मार्जारा वर्तन्त इति पृष्टाः मार्जाराभावेऽपि त्रयः, चत्वारः इति किमपि उत्तरं दद्युः बालाः।

3. बालापेक्षया प्रौढापेक्षया च बालिकासु स्त्रीषु च सूचनीयत्वधर्मः अधिको वर्तते। अत्र लिङ्गं न कारणम्। बालिकाः स्त्रियश्च तादृशपरिवेषे वर्ध्यन्ते यत्र पुरुषाणामाशयस्य प्राधान्यं भवति। स्वातन्त्र्येण चिन्तनस्यावकाशादानेन इयं दशा तासु जातेति केचन वैज्ञानिकाः अभिप्रयन्ति।

4. ये मन्दबुद्धयः ये च सूक्ष्मेक्षिकाहीनाः तेऽपि द्रुतं सूचनीयतां प्राप्नुवन्ति।

5. यान् वयमस्मत्तः ज्ञानानुभवादिषूत्कृष्टान् मन्महे तेषामाशयः विना पर्यालोचनमस्माभिरङ्गीक्रियते। भिषजां वावदूकानां धार्मिकमताचार्याणामाशयग्रहणमत्रोदाहरणम्।

6. श्रान्ताः परोक्ताशयं गृह्णन्ति। अत्र श्रान्तिः शारीरश्रान्तिं युक्त्यस्फुरणं अन्यच्चैतादृशं सर्वं सूचयति।

7. मधुपानेनास्वाधीनचित्ताः परोक्तं गृह्णन्ति।

8. पामरा जनाः वार्तापत्रिकासूक्तं सर्वं तथ्यत्वेन गृह्णन्ति। अत्र कारणं मुद्रितत्वमेव। अनृतं चेत् कथं धनव्ययेन मुद्राप्यते इति युक्तिरपि ग्रहणार्थमुच्यते।

9. बहुभिरुच्यमानं गृह्यते। अत एवोच्यते 'महाजनो येन गतः स पन्थाः' इति।

10. अनृतमपि पुनः पुनरुक्तं चेत् सत्यत्वेन स्वीक्रियते। युद्धकाले कश्चिद्देशः शत्रुदेशमधिकृत्यानृतं पुनः पुनरुक्त्वा प्रचारं करोति। श्रोतारश्च केचनात्र विश्वसन्ति। त्रयो धूर्ताः केनापि विप्रेण स्कन्धे ऊढमजशिशुं सारमेयमसकृद्वर्णयन्ति स्म। ब्राह्मणोऽपि तेषामाशयमङ्गीकृत्य अजशिशुमपि सारमेयं मेने इति कथा वर्तते।

11. विधिवाक्योक्तापेक्षया निषेधवाक्येन कृतं संसूचनं निषेध्यविषये विपरीतं फलं जनयति। 'न कलञ्जं भक्षयेत्' इति वाक्यं कलञ्जभक्षणे प्रवृत्तिं जनयति। अत एव निषिद्धेषु केषांचिदधिकतरा रुचिः। 'शब्दो न कर्तव्यः' इति कथनापेक्षया 'शान्तं स्थीयता'मिति कथनमुचितं भवति। 'प्रायो नेतिश्रुतिविषयता विश्वमाधुर्यहेतुः' इति **श्रीनीलकण्ठदीक्षितः**।

12. साक्षात्कथनापेक्षया व्यञ्जनावृत्त्या, अथवा प्रसङ्गेन उक्तस्य विषयस्य शीघ्रमेव पराङ्गीकारो लभ्यते।

13. केचित् परोक्तं न केवलं न गृह्णन्ति, किन्तु तद्विपरीतमप्याचरन्ति। अस्य विपरीतसूचनम् (Contra-Suggestion) इति नाम।

14. कस्यचिन्मनसि पूर्वमेव स्थितस्य भावस्य स्थाने अन्यं भावं संपादयितुं यत्सूचनं क्रियते तस्य प्रतिसूचनं (Counter Suggestion) इति नाम भवति।

15. केचित् आत्मनो मनसि जातमाशयं विना युक्तिचिन्तनं समीचीनं मन्यन्ते। अस्य स्वतःसूचनं (Auto-Suggestion) इति नाम।

16. येषां आत्माभिमानः अधिको वर्तते, ये च स्वतः ज्ञानवन्तो भवन्ति ते परोक्तं न गृह्णीयुः।

17. कोऽपि विषयः असकृदुच्यमानः श्रोतुः मनसि वैरस्यं जनयन् नाङ्गीकारं प्राप्नुयात्।

संसूचनं सर्वथा वर्जयितुं न शक्यम् । बालविषये पितरः उपाध्यायाश्च स्वाभिप्रायं सूचयन्ति । शिक्षायां सूचनं प्रधानं साधनं भवति । उपाध्यायानां विशालं ज्ञानं अनुभवश्च वर्तत इति विद्यार्थिनः उपाध्यायेषु गौरवबुद्धिं कुर्वन्ति । गुरोः स्थानकृतं गौरवमपि वर्तते । उपाध्यायोक्तं सर्वं विद्यार्थिनो निर्निरोधं यथा गृह्णीयुः तथा सुगुणैरुपाध्यायैर्भाव्यम् । विद्यार्थिषु प्रीत्या वर्तमाना अपि उपाध्यायाः यथा विद्यार्थिभिः ज्ञाने सच्चारित्रे च आत्मनोऽप्युत्कृष्टा मन्येरन् तथा व्यवहरेयुः । उपाध्यायः आत्मनः स्वभावादिकं परिपूर्णं न प्रकाशयेत् । यदि प्रकाशयति तर्हि तदीयगुणज्ञानापेक्षया दोषज्ञानमेवाधिकं प्राप्य विद्यार्थिनः उपाध्याये लाघवबुद्धिमेव कुर्युः । ततश्चोपाध्यायः आत्मनः अनवगति (inscrutability) - कृतेन विस्मयेन यथैनमुपसर्पेयुः छात्राः तथा वर्तेत । गूढस्यैव चमत्कारकारित्वमालङ्कारिका अपि मन्वते ।

उपाध्यायैः संसूचनस्य दुष्प्रयोगो न कर्तव्यः । संसूचनं शुभायाशुभाय वोपयुज्येत । उपाध्यायैस्तु शुभायैव प्रयोक्तव्यम् । यत्र विषये उपाध्यायः संसूचनं कर्तुमिच्छति तत्रोपाध्यायेन प्रथमं प्रत्ययवता भाव्यम् । सत्यवचनादिषु स्वयं अविश्वासवानाचार्यः परेषां मनस्सु सत्यवचनप्रभावं नोद्भावयेत् । मतसिद्धान्तेषु तीव्रप्रत्ययवन्त एव परान् स्वमते प्रवर्तयितुं शक्ता भवन्ति । प्रियं प्रदर्शयतां वचसि प्रत्ययो जायते । तस्मादुपाध्यायैः प्रीतिमद्भिः भाव्यम् । केचनोपाध्यायाः स्वाभिमतं राजनैतिकं पक्षमधिकृत्यासकृत्कक्ष्यायां भाषित्वा विद्यार्थिनां मनः स्ववशं नयन्ति । एतत्तु नितरां गर्हणीयमेव । उपाध्यायाः जनस्य सर्वस्यापि भृत्या भवन्ति । न तु यस्य कस्यापि नैतिकपक्षस्य । ततश्च सर्वत्र सामान्यप्रतिपत्तिभिः उपाध्यायैः भाव्यम् । उपाध्यायेन सूचनं नैव कर्तव्यमिति निरोधे कृते, तेन चाकृते सूचने, महाननर्थः स्यात् यतः अप्रशस्तानि सूचनानि अन्यैः दीयमानानि विद्यार्थिनां मनस्सु दोषमापादयेयुः । तस्मादुपाध्यायेनोचितानि सूचनानि कर्तव्यान्येव ।

## क्रीडा

अनुकरणादिवत् क्रीडनमपि मनुजस्य (जीवस्य) जन्मना सिद्धः कश्चन प्रवृत्तिविशेष एव । यूथचारिषु उच्चतरजीवेषु च अयं स्वभावो दृश्यते । जीवस्य स्वयूथाङ्गत्वसंपादने (Social contact) क्रीडायाः महत् प्राधान्यं वर्तते । क्रीडया एव जीवाः स्वयूथ्यैः संपर्कं प्राप्य मैत्रीं अथवा सयूथ्यत्वं प्राप्नुवन्ति । क्रीडायां अनुकरणस्य युयुत्सारचनाप्रवृत्त्योश्चोपयोगो विद्यते । जीवेषु स्वतो जायमानः अयं क्रीडास्वभावः शिक्षादिकं नापेक्षते इति हेतोः क्रीडायाः सामान्यसहजप्रवृत्तौ अन्तर्भावः क्रियते ।

बालेषु दृश्यमानः असाधारणस्वभावस्त्वयमेव यत् तेषां क्रीडासक्तत्वम् । 'बालस्तावत् क्रीडासक्तः' इति **भगवत्पादाः** । बालानां बालत्वमेव न स्यात् यदि ते न क्रीडेयुः । क्रीडायामेव बालानां सर्वोऽपि स्वभावः स्पष्टं आविष्कृतो भवति । अध्ययनकालेषु बालाः स्वभावस्य निरोधं कुर्वन्ति । क्रीडायां तु निर्निरोधमात्मा प्रकाश्यते तैः । बालानां भाव-संवेग-वृत्त्यादीनां ज्ञानं क्रीडाङ्गने एवाविर्भवति ।

का नाम क्रीडा ? क्रीडायाः लक्षणं किम् ? क्रीडायाः कार्यस्य च को भेदः ? कुतो बालाः क्रीडन्ति ? को वा लाभस्तैः क्रीडया प्राप्यते ? एवमादीनां प्रश्नानामुत्तरं बहुधा दीयते मनोवैज्ञानिकैः । उत्तराणां सामान्यं नाम क्रीडा-सिद्धान्ताः (Theories of play) इति ।

क्रीडाया लक्षणं त्वेवमुक्तम्—'क्रीडा नाम कोऽपि क्रियाविशेषः योऽनन्य-प्रयोजनतयोपादीयते '[1] इति । क्रीडया प्राप्तव्यमन्यत् किमपि नास्ति । क्रीडा तावत् क्रीडार्थमेव भवतीति, अस्य लक्षणस्यार्थः । अव्याप्त्यादिदोषदुष्टत्वमस्य

---

1 'It is an activity which is undertaken for its own sake'. Valentine, *Psychology and its bearing on Education*, p. 173.

लक्षणस्य प्रतिपादयन्ति केचित्। सामान्यतो दर्शने इदं लक्षणं क्रीडासामान्ये सङ्गच्छत एवेत्यभ्युपगन्तव्यम्।

## क्रीडा, कार्यं च

कार्यस्य, सद्यः, कालान्तरे वा निष्पद्यमानं अन्यत् किमपि प्रयोजनं स्यात्। क्रीडायास्तु एतादृशमन्यत् क्रीडातः, क्रीडारसतो वा भिन्नं किमपि फलं न भवति।

कार्यम्, करणकाले श्रमदायि स्यात्। फले प्राप्ते तु तुष्टिं जनयति। 'क्लेशः फलेन हि पुनर्नवतां विधत्ते' इति कालिदासः। क्रीडा तु करणकाले एव तुष्टिं ददाति। क्रीडाकार्ययोः भेदः, वस्तुतः क्रीडां कार्यं वा कुर्वतः मानवस्य मनोभावे केवलं वर्तते। क्रीडापि परकीयनिर्बन्धात् क्रियमाणा क्लेशं ददती कार्यसदृशी भवति। यदि कोऽपि क्लेशमविगणयन् सोत्साहं कार्यं करोति तदा तस्य तदेव कार्यं क्रीडायते। अध्यापनमपि सोत्साहं वेतनप्राप्तिं अविगणय्य क्रियते चेत् तर्हि रसावहं क्रीडनमेव भवेत्।

## क्रीडासिद्धान्ताः

### 1. प्रवृद्धशक्तिसिद्धान्तः[1]।

अयं सिद्धान्तः प्रथमं **षिल्लर्** (Shiller) - महोदयेन, पश्चाच्च **हेर्बर्ट् स्पेन्सर्** (Herbert Spencer) - महोदयेन च प्रवर्तितः। बालाः पितृभिः पोष्यमाणाः स्वशरीरे स्थितां सर्वामपि शक्तिं न व्ययीकुर्वन्ति। अत एव निरर्थक-चेष्टास्वपि प्रवर्तन्ते बालाः। बाष्पशकटस्यापेक्षितादधिकं बाष्पं यथा निस्सार्यते एवं बालैः स्वशरीरे मनसि च स्थिता अधिका (प्रवृद्धा) शक्तिः क्रीडया बहिः निस्सार्यते इति। अयं सिद्धान्तः सर्वाङ्गीकारं न लभते। शक्तिमन्तो बाला इव दुर्बलाः श्रान्ताश्च बालाः अधिकशक्त्यभावेऽपि क्रीडन्त्येव। बाष्प-

---

[1] Surplus Energy Theory.

निस्सारणेन बाष्पशकटस्य कौशलं नाधिकं भवति। बालानां तु क्रीडया ज्ञानं बुद्धिविकासश्च जायते। क्रियाकरणकौशलमपि ते प्राप्नुवन्ति। अधिकशक्ति-निस्सारणमेव यदि प्रयोजनं तर्हि यया कयाचन क्रीडया तद्भवतीति कुतो बालाः विभिन्नां क्रीडाप्रक्रियां वाञ्छन्ति इत्यत्र कारणान्तरं वक्तव्यं स्यात्। तस्मादयं सिद्धान्तो नादर्तव्यः।

2. **कार्ल् ग्रूस्** (Karl Groos)-नामकः विज्ञानी '**पूर्वाभिनयसिद्धान्तं** ( Practice Theory ) विस्तरेण वर्णितवान्। अस्य सिद्धान्तस्य प्रथमं निर्देशस्तु मेलेब्रान्षे (Malebranche)-नामकेन विज्ञानिना कृतः। क्रीडाकार्याणि सर्वाण्यपि भविष्यज्जीविकां अभिप्रवर्तन्ते। क्रीडा च जीवं भाविजीवनाय सन्नद्धं करोति। इदानीं क्रियमाणा क्रीडा जीवनोपयुक्तकार्येषु कौशलमापादयति। मार्जारशिशुः क्रीडन् स्वपुरतः स्थितस्य कन्दुकस्योपरि निपत्य गृह्णाति। कन्दुकग्रहणपरिचयः, पश्चात् जीवने करिष्यमाणाय मूषिकग्रहणाय कौशलं जनयति। एवं बालिका दारुप्रतिमाशुश्रूषां कुर्वाणा पश्चात् करिष्यमाणे अपत्यसं-रक्षणे कौशलं लभते। मृगजीवनपद्धत्यपेक्षया मनुष्यजीवनं जटिलं वर्तत इति क्रीडा अपि बहुप्रकारा वर्तन्ते। बालाश्च न केवलं मिथ्यायुद्धादिकं कपड्डीप्रभृतिषु कुर्वन्ति ; किन्तु वस्तुसंश्लेषणविश्लेषणात्मिकामपि (Analytical, synthetical) क्रीडां आचरन्ति। एवं कृतः परिचयः पश्चाद् गृहादिनिर्माणकार्येषु प्रयुज्यते।

अत्र सिद्धान्ते अङ्गीकार्यः अंशः ईषत् स्यादपि। परं सर्वा अपि क्रीडाः जीवनसन्नाहार्थाः इति वक्तुं न शक्यते। बालाश्च भविष्यज्जीवनाय इदानीं क्रीडया शिक्षणं प्राप्यत इति ज्ञानवन्तश्च न भवन्ति क्रीडाकाले।

3. अस्य सिद्धान्तस्य प्रतिपक्षभूतं अन्यं कमपि सिद्धान्तं **स्टान्लि हाल्** (Stanely Hall, 1846-1924)-नामकः मनोविज्ञानी कथयति स्म। अस्य **पुनरावृत्ति-सिद्धान्तः** (Recapitulation Theory) इति नाम। पूर्वोक्तः सिद्धान्तः भावि-जीवनेन क्रीडां संबध्नाति। अयं सिद्धान्तस्तु क्रीडां पूर्वकाले वृत्ताभिः मानव-

जीवनदशाभिरथवा प्रक्रियाभिः सह संबद्धय निरूपयति। जीवः (मानवः) यां यां दशां अनुभूय नागरिकतामागतवान्, तां तां दशां क्रीडया पुनरपि वर्तयति। अनागरिकावस्थातः नागरिकावस्थाप्राप्तौ बहूनि पर्वाणि वर्तन्ते। पूर्वकाले मानवः मृगया-मीनग्रहण-कृषिकर्मप्रभृतिकार्याणि क्रमशो ज्ञात्वा कृतवान्। वर्षातपादिभ्यो रक्षणाय गृहमपि निर्मितवान्। एतान्येव कर्माणि क्रीडया बालः पुनः करोति। सिकताभिः गृहं निर्मान् बालः पूर्वतनैः स्वजातीयैः पूर्वकाले कृतमेव गृहनिर्माणकार्यं पुनः वर्तयति इति। अत्रायं दोषो वर्तते। एतं सिद्धान्तमादृत्य सर्वेऽपि क्रीडाप्रकाराः पुनरावृत्तिरूपा इति वर्णयितुं न शक्यते। कालदेशलिङ्गादिभेदेन क्रीडायां विभिन्नाः प्रकारा वर्तन्ते। एतानंशान् निरूपयितुं न प्रभवति अयं सिद्धान्तः।

4. मक्डूगल्-महाशयस्तु स्पर्धामेव क्रीडायाः मूलमभिप्रैति। सर्वेषामपि जीवानां स्वप्रतिपक्षिणं अतिशयितुं अथवा जेतुं स्वभावो वर्तते। इयं प्रकृतिः युयुत्सावृत्तेः भिन्ना। युयुत्सावृत्तौ प्रतिपक्षिणं नाशयितुं इच्छा स्यात्। स्पर्धायां तु प्रतिपक्षिहनने मतिः न भवति। किन्तु तस्य सत्तायामेव मनो वर्तते, यतस्तस्य सत्तायामेव पुनः पुनः जयप्राप्तिः स्यात्। अत एव सारमेयशिशवः युद्धं कुर्वाणा इव पीडां अनुत्पादयन्त एव परस्परं सन्दश्य क्रीडन्ति। तत्तद्देशीयक्रीडापर्यालोचनेऽपि इदं भायात्, यत् देशजनस्पर्धामात्रानुगुणमेव (Degree of rivalry) क्रीडाप्युद्भाविता वर्तते इति, यत्र देशे जनानां स्पर्धास्वभावः न तीव्रः तत्र (यथा भारते) स्पर्धाप्रधानक्रीडा नादृता वर्तत इति च। अत्रेदं वक्तव्यम्—अयमपि सिद्धान्तः क्रीडाः सर्वा अपि निरूपयितुं न शक्नोति यतो बह्वीषु क्रीडासु स्पर्धागुणः नैव दृश्यते।

### 5. रेचनसिद्धान्तः (Cathartic Theory)

क्रीडा बालानां मनसि स्थितानां संवेगभावादीनां निर्दुष्टाविष्करणं संपादयतीति अयं सिद्धान्तः कथयति। स्पर्धासूयाप्रभृतयो बहवो भावाः बालानां

मनसि निलीना वर्तन्ते । तेषां च ताद्रूप्येण प्रकाशनं समाजेन नाङ्गीक्रियते । तादृशभावानां साक्षादाविष्कारः समाजोपद्रवाय स्यात् । बालानां उचिताभिवृद्धिं च निरुन्ध्युः यद्येते भावाः निर्गमिता न भवेयुः । ततः क्रीडैव एतान् भावान् शोभन-मार्गेण निर्गमयति । अयमंशः भावनाक्रीडासु कबड्डीप्रभृतिषु दृश्येत । अयमपि सिद्धान्तः क्रीडास्वरूपमीषन्निरूपयति । तन्त्रिकारोगार्ता बालाः क्रीडापराङ्मुखा वर्तन्त इति, बहूनां मानसग्रन्थीनां परिहारे क्रीडैव चिकित्सात्वेनोपयुज्यत इति इदमुभयममुं सिद्धान्तं स्थिरयति ।

### 7. मनोरञ्जनसिद्धान्तः (Recreation Theory)

क्रीडां मनोरञ्जनरूपां वर्णयति लासरस् (Lāzarus) - नामको विज्ञानी । परिश्रमादनन्तरं विश्रान्त्यै मनोरञ्जनाय च क्रीडा भवति इति । अयं सिद्धान्तः प्रवयोभिः क्रियमाणाः क्रीडाः निरूपयेत् ; न तु बालक्रीडाः ।

सर्वेऽपीमे सिद्धान्ताः कृत्स्नं क्रीडास्वरूपं न निरूपयन्ति । क्रीडाया एकैकोऽप्यंशः एकैकेनापि सिद्धान्तेन निरूप्येत् । ततश्च सर्वसिद्धान्तोपसंहारेण क्रीडा-स्वरूपमवगन्तव्यं वर्तते ।

## क्रीडाफलानि

क्रीडया बहवो गुणा भवन्ति बालानाम् । शरीराभिवृद्धौ आरोग्यरक्षणे च क्रीडायाः मुख्यं स्थानं वर्तते । व्यायामकरणेन क्षेत्रारामादिषु कठिनतरकार्याणा-माचरणेन च यद्यपि शरीरारोग्यं भवेत् । परं मानसी तुष्टिस्तु नैव भवेत् तादृशैः कार्यैः । शरीरारोग्यरक्षणे क्रीडैव बालानां पर्याप्तं कारणं भवति। समुचितवातवति प्रकाशवति च क्रीडाङ्गने यथेच्छमितस्ततो धावित्वा स्वातन्त्र्येण क्रीडने यो लाभो भवति न स कदाचिदपि गृहकार्येण काष्ठच्छेदनेन वा प्राप्येत । क्रीडाकाले सम्यगवेक्षणादिना इन्द्रियशक्तिश्च वृद्धिमेति । कौतूहलं वर्धते । रचनाशक्तिश्च कौशलं प्राप्नोति । सच्चारित्रम्, त्यागबुद्धिः, आत्मनः अपजयेऽपि जेतुरभिनन्दनम्, असूयाऽभावः, सहयोगदानाभिरुचिः इत्यादीनां बहूनां शोभनगुणानामाविर्भावः

क्रीडायामेव भवति। खेलकभावना (Sportsman spirit) नाम काचनोत्तमभावना क्रीडात एव भवति। इयमेव भावना पराजयेऽपि मनः प्रक्षोभरहितं संरक्ष्य शान्तिं प्रयच्छति। क्रीडया केचन नेतृत्वमपि प्राप्नुवन्ति। क्रीडया कश्चन निर्दुष्टः मानसोल्लासः अथवा कोऽपि रसानुभवो भवति। अत एव **कालिदासः** "रेमे मुहुर्मध्यगता सखीनां, क्रीडारसं निर्विशतीव बाल्ये" इति च पार्वत्याः क्रीडां वर्णयति।

## क्रीडाप्रकाराः

बालाः वयसोऽनुगुणं विभिन्नक्रीडास्वासक्ता भवन्ति। वर्षत्रयावधि कर्मज्ञानेन्द्रियव्यापारदायिनीं क्रीडां वाञ्छन्ति। वस्तूनां ग्रहणं, दूरे प्रक्षेपः, काष्ठखण्डैरारचनम्, आरचितस्य पुनरवपातनम्, सिकतागृहनिर्माणम्, धावनम् इत्येवमादीन्यत्र प्रधानानि। अन्यैः बालैः सह क्रीडा न भवत्यस्यां दशायाम्। एकप्रकारामेव क्रीडां पृथग्भूय कर्तुमिच्छन्ति न तु संभूय।

2. 3—6-**वर्षाणि**। अत्र कल्पनाप्रधाना भवति क्रीडा। भावना अत्र मुख्या। बालाः आत्मानं आचार्यं भिषजं वा मन्यन्ते। बालिका च मातरम्। अभिनयोऽपि स्यादत्र।

3. 6—12-**वर्षाणि**। अत्र क्रीडा प्रायशः स्पर्धाप्रेरिता भवति। 'इतरापेक्षया अहमेव समर्थः' इति आत्माभिमानोऽपि जायते, तत्प्रदर्शनं क्रीडाद्वारा क्रियते। क्रमेण स्पर्धा हीयते। सहयोगयुक्तक्रीडासु स्पृहा जायते। द्वादशवर्षात् परं सहयोगयुक्तैव क्रीडा भवति। अत्र कोऽपि नेतृत्वेन गृह्यते। तदाज्ञानुरोधित्वं क्रीडानियमपरिपालनं च श्रद्धया क्रियते अस्यां दशायाम्।

पूर्वकाले, बालाः क्रीडया वृथा कालं नयन्तीति प्रत्ययः आसीत्। इदानीमयं प्रत्ययो नष्टः। अधुना बालक्रीडासु अवधानं दीयते। क्रीडोपकरणानि च

बहूनि विरच्यन्ते। क्रीडाकाले यथा बालानां शरीरोपघातः हस्तपादादिभङ्गश्च न भवति तथोपकरणानि निर्मीयन्ते अमेरिकादेशीयैः। न केवलं मनोरञ्जनानि किन्तु ज्ञानोत्पादकानि कौशलवर्धनानि च क्रीडोपकरणानि कल्प्यन्तेऽधुना। लिङ्गभेदेन क्रीडाभेदो वर्तते। बालाः अधिकशक्तिव्ययकारिणीं क्रीडां वाञ्छन्ति। बालिकाश्च मृदुक्रीडासक्ता भवन्ति। अत्र निदानम् शरीरदौर्बल्यम्, समाज-स्थितिश्च ॥

## शिक्षणे क्रीडाया उपयोगः

अधुना शिक्षणेन पूर्णफललाभाय क्रीडापि साधनत्वेनोपयुज्यते। आधुनिक-शिक्षणं च बालकेन्द्रं (Paidocentric)[1] भवतीति आदम्स् (Sir John Adams) अभिप्रैति। बालकेन्द्रत्वबुद्धिरपि क्रीडासिद्धान्तफलभूतेति तस्य मतम्। क्रीडा-प्रणालीति (Play way method) या प्रणाली सर्वादृता दृश्यते सा शिक्षणे स्थितं क्लेशमपनीय तत् रुचिपूर्णं प्रीतियुक्तं च करोति। बालानां क्रीडाभिरुचिः नैसर्गिकी। इमां नैसर्गिकीं शक्तिमुपयुज्य शिक्षणं बालाभिरुचितं कर्तुं प्रयतन्ते शिक्षातन्त्रकुशलाः। **काल्ड्वेल् कुक्** (Caldwell Cook) - नामकः विज्ञानी स्वकीये **क्रीडापद्धत्याख्ये** ग्रन्थे (the Play Way) क्रीडाप्रणाल्येव सर्वत्रानुसर्त-व्येति दृढतरं निरूपयति। बालोद्यानप्रणाली, मान्टिस्सोरिप्रणाली, रचनाप्रणाली (Project method), स्वतःशोधनप्रणाली (Heuristic method), नाटक-प्रणालीति एताः सर्वा अपि प्रणाल्यः क्रीडाप्रणाल्याः रूपान्तराण्येव। स्कौट्-शिक्षणे, नागरिकताशिक्षणे च (Citizenship training) क्रीडैवोपयुज्यते। अनया प्रणाल्या अध्याप्यमानाः सर्वेऽपि विषया बालानामुत्साहमुत्पाद्य तन्मनस्सु स्वत एव प्रविशन्ति। अनया प्रणाल्या अध्यापने कृते बालाः साहसकारिण इव (Adventurers), गवेषका (Explorers) इव च सोत्साहं ज्ञातुमुद्युक्ताः

---

1. **स्टान्लि हाल्**—महोदयेन कल्पितमिदं असुन्दरं आंग्लेयीपदमिति स एव कथयति। P. 14, *Modern Developments in Educational practice.*

भवन्ति। ऐतिहासिकविषयाध्ययने (History) कथावस्तुनः अभिनयः कर्तुं शक्यते। पदैः वाक्यरचनम्, वर्तन्या पदसम्पादनं च क्रीडया कर्तुं शक्यते। भूगोलादिषु सर्वमुपकरणं दत्वा अध्येयं विषयं निर्दिश्य तदधिगमाय प्रेर्यन्ते बालाः। क्रीडायां निरनुशासनं बालाः प्रवर्तन्ते। यथेच्छमिति तु न मन्तव्यम्। कांश्चन नियमाननुसरन्तः उपाध्यायपर्यवेक्षणं प्राप्यैव बालाः शिक्षन्ते। ततश्च क्रीडांशस्यापि अस्त्यध्यापने उपयोगः। परं सर्वमपि सर्वास्वप्यवस्थासु क्रीडयैवाध्यापयितुं शक्यमिति न मन्तव्यम्। बालानामुत्साहं संवर्ध्याध्यापनीयमिति तु सारः॥

# पञ्चमोऽध्यायः

## शिक्षणम् (Learning)

शिक्षा, शिक्षणमिति पदद्वयं शिक्ष-विद्याऽऽदाने इत्यस्मात् धातोः निष्पन्नमिति वैयाकरणाः। विद्या-आदानम् इति पदद्वयस्याप्यर्थः अवगन्तव्यः। का नाम विद्येति ज्ञातव्यम्। आदानं च, अत्र मुख्यार्थकं न भवति। शिक्षा-धात्वर्थज्ञाने सत्यपि निष्कृष्टतया शिक्षास्वरूपज्ञाने अस्त्येव क्लेशः।

आधुनिकमनोविज्ञानिनः शिक्षास्वरूपं स्वस्वसिद्धान्तानुसारं न्यरूपयन्। शिक्षणं च बहुविधं वर्तते। कायिकव्यापारेषु कौशलसम्पादनं तेष्वन्यतमम्। पुनः पुनः कस्यापि कार्यस्य करणेन तत्र कौशलं सम्पाद्यते। सन्तरण-कन्दुक-क्रीडाप्रभृतीन्यत्रान्तर्भवन्ति। द्वितीयं च बुद्धिशक्तिवर्धनरूपम्। अत्र चिन्तनतर्कणादीनामन्तर्भावो भवति। तृतीयं च स्मरणरूपम्।

शिक्षणं सर्वजीवसाधारणो धर्मः। अयमेव धर्मः चेतनमचेतनात् विभज्य प्रदर्शयति। परमयं धर्मः इतरजीवापेक्षया मनुजेऽधिको वर्तते। सन्तरणज्ञाने भाषाज्ञाने भूगोलादिविषयज्ञाने च शिक्षणपदमुपयुज्यते। परमेषां शिक्षणेन प्राप्ये फले भेदो वर्तते। सन्तरणेन शरीरबलं जायते। भाषाशिक्षणेन तु आशयाविष्करणशक्तिः स्यात्। सच्चारित्रशिक्षणेन केचन शोभना गुणा भवन्ति। त्रिष्वप्येतेषु भिन्नेषु शिक्षणेषु कोऽयं साधारणो धर्मो वर्तते इति विचारिते इदं भायात्—यत् शिक्षणेन जीवस्य व्यवहारे पूर्वमविद्यमानः कश्चन विपरिणामः अथवा विकारो जायत इति[1]। अयं विपरिणामः केवलशरीराभिवृद्ध्या

---

1. Learning may be defined, therefore, as the change or modification of an organisms's behaviour that results from the organism's own activity. *General Psychology*. P. 174. ASHER and others.

(Maturation) न जातः ; किन्तु जीवस्य क्रियया अनुभवेन च जायते स्म। शिक्षणं नाम जीवस्य स्वकीयव्यापारेण जीवव्यवहारे जायमानः विकारः अथवा विपरिणामो भवति। अत्र शिक्षणं कारणम्। विपरिणामः कार्यम्। कार्य-कारणयोरभेदेन निर्देशः कृतो वर्तते लक्षणे। लक्षणपर्यालोचने इदं मुख्यं भायात् (1) यत् शिक्षणं सर्वदा जीवव्यवहारे विपरिणामं जनयतीति, (2) अयं विपरिणामश्च जीवस्य कार्यात् जायते इति च। इन्दुवासरे रामशब्दस्य षष्ठ्येकवचने रूपं किमिति पृष्टः देवदत्तः रूपमजानन् परस्मिन्नहनि जानीयात् रामस्येति। कथमिदं स जानाति स्म। केनाप्युक्तं रूपं श्रुतवान् स्यात्। अथवा शब्दमञ्जरीं विलोक्य ज्ञातवान् भवेत्। उभयत्र रामः किमपि कृत्वैव (पूर्वत्र श्रवणम्, उत्तरत्रावलोकनम्) अजानात्। न तु किमपि अकृत्वा। अत एवोक्तं— 'जीवस्य क्रिया, ततो जायमानः विपरिणाम इति अंशद्वयं वर्तते शिक्षणे' इति। न केवलं क्रिया किन्तु अनुभवोऽपि जीवव्यवहारे विपरिणामं जनयतीति अनुभवोऽपि शिक्षणलक्षणे घटनीयो वर्तते। शिक्षणसाधनं मनो वर्तत इति बहवो विज्ञानिनः। शिक्षणमेव जीवस्य मनः प्रेरयति विपरिणमाय। अत एव रुमाक्षिप्ते काष्ठे जायमानो विकारः शिक्षणकृतो न भवति। तत्र मनः जीवक्रिया च न स्तः।

अन्ये केचन विपरिणामाः कालातिपातात् शारीराभिवृद्ध्या च जायन्ते ; न तु जीवस्य क्रिययेति तेषां न शिक्षणफलेऽन्तर्भावः। जातः शिशुः कालक्रमेण वस्तुग्रहणम्, उत्थानम्, मन्दं चलनम्, अन्यच्चैतादृशं जानाति। इदमपि शिक्षणे नान्तर्भाव्यते।

ततः शिक्षणं जीवक्रियया व्यवहारेषु विपरिणाममुत्पाद्य जीवेषु विकासं, परिवेषसमाजादिविषये सामञ्जस्यं च जनयतीत्यपि अवगम्यते। इदं सामञ्जस्यं क्रमशो जायते। स्थिरं च भवेत्। कदाचित्कालानुगुणं पुनः परिवर्तनमपि प्राप्नुयात्।

शिक्षणं पाठशालायामेव प्राप्यत इति न मन्तव्यम्। पाठशालायाः बहिरपि विभिन्नसन्दर्भेभ्यः जनसमाजाच्च प्राप्यते। परिवेषबलादपि शिक्षणं

भवति । काश्चन विद्याः कुलधर्मा भवन्ति । ‘कुलविद्या अनधीतैव पाकं लभते’ इत्यस्त्याभाणकः ।

शिक्षणं सर्वजीवसाधारणम् सदपि मनुजेष्वेवेदमधिकं दृश्यते । तेष्वपि न समानम् । मानवानां बुद्धिशक्त्यनुगुणमिदं तरतमभावेन तेषु वर्तते । यस्य बुद्धिशक्तिरधिका तस्य शिक्षणकौशलमप्यधिकं वर्तते । शिक्षणस्य प्रमस्तिष्कावरणस्य (Cortex) च दृढः सम्बन्धो वर्तते इति निरूपितम् । व्यूह (maze)-मार्गं पूर्वं ज्ञातवान् कश्चन मूषिकः पश्चादपनीतप्रमस्तिष्कावरणः व्यूहमार्गं न जानाति स्म । मानवः स्वानुभवादिव परानुभवादपि जानाति । शिक्षणं च कमपि नियतं मार्गमवलम्ब्य पाठशालासु क्रियते । तत्र किमप्युत्कृष्टं लक्ष्यमपि भवति । पूर्वतनानामनुभवमाकलय्य भविष्यद्भव्यजीवनाय शिक्षणं बालं सन्नाहयति । बालः शिक्षणेन प्राप्तसुसमञ्जनः सुष्ठु जीवनं वर्तयितुं शक्नुयात् । ततश्चोपाध्यायैः किमपि शोभनं लक्ष्यं पुरस्कृत्याध्यापनं कर्तव्यम् ।

बाल्ये एव क्रियमाणं शिक्षणं फलेग्रहि भवति । प्रवयसां बुद्धिः नूतनांशग्रहणे मन्दा भवति । अपरवयसि शिक्षणशक्तिः हीना ; नत्वत्यन्तं लुप्ता ।

व्यवहारवादिनां मतानुगुणं शिक्षणस्वरूपमेवं निरूप्यते । प्राणिनां सहजक्रियाकरणशक्तिः वर्तते एव । प्रेरणे सति प्रतिक्रिया भवतीति ज्ञातमेव । तस्या एव प्रतिक्रियायाः हेत्वन्तरेण (उपाधिना) उत्पादनमेव शिक्षणमिति व्यवहारवादिनो मन्यन्ते । तन्मतानुसारेण शिक्षणं सर्वमुपाध्युत्पादनरूपं भवति । शिक्षणफलं च तदुत्पन्नक्रियारूपमेव । सहजप्रेरकं विना कृत्रिमप्रेरकेण प्रतिक्रियोत्पादनमेव उपाध्युत्पादनपदव्यपदेश्यं भवति । उपाध्युत्पादनं न केवलं नूतनव्यवहारमुत्पादयति, किन्तु पूर्वस्थितमपि व्यवहारं परिवर्तयति । शिशुः कश्चित् क्षीरपात्रस्याधरेण स्पर्शे जाते क्षीरं चूषति । अत्र क्षीरपात्रस्याधरेण स्पर्शः प्रेरको भवति, प्रतिक्रिया च चूषणम् । एवमसकृत् कुर्वन् बालः क्षीरपात्रदर्शनसमकालमेव चूषणं करोति । अत्र वास्तविकं प्रेरकं न वर्तते । किन्तु तद्दर्शनम् । तदेवात्र प्रेरकं जातमिति अस्य

औपाधिकं प्रेरकं (Conditioned Stimulus) इति नाम। प्रतिक्रियायाश्च औपाधिकी प्रतिक्रिया (Conditioned Reflex) इति नाम।

औपाधिकप्रतिक्रियोत्पादनं कर्तुं शक्यमित्ययमाशयः रष्यादेशीयेन पावलोव् (Pavlov I.P., 1849-1936) - नामकेन विज्ञानिना, 1890-तमे वर्षे शुनकीयं किमपि निदर्शनं प्रदर्श्य प्रकाशितः। आहारदर्शने आस्ये लालोत्पन्ना भवतीति विदितमेव। अनन्तरमाहारस्थालकदर्शने आहारानेतुः भृत्यस्य पदशब्दश्रवणेऽपि स्वशुनः आस्ये लालां जातां वीक्ष्य पावलोवः केनापि उपाधिना लालामुत्पादयितुमियेष। भोजनदानसमये वैद्युतशक्त्या घण्टिकां वादयामास। एवमसकृत्कुर्वन् भोजनं विना घण्टानादश्रवणेनापि लालां जातामपश्यत्। एवं गन्धस्पर्शप्रकाशादीनां भोजनदानकाले सहयोगं संपाद्य लालामुत्पन्नां ददर्श। ततश्चैवं सिद्धान्तयामास पावलोवः—'सर्वमपि शिक्षणं अभ्यासनियमादिभिः क्रियमाणं अनुकूलप्रेरकजातं औपाधिकक्रियापरम्परारूपमेवे'ति।



* पावलोव्

---

* Photo: Kindly given by the Information Branch of USSR Consulate General in Madras-17.

औपाधिक-अनुकूलित-क्रियोत्पादनक्रमः एवं सूचयितुं शक्यते ।

(अ) सहजप्रेरणम् S.1 आहारः → प्रतिक्रिया R.1 लालोत्पत्तिः ।

(आ) प्रेरणम् S.2 घण्टानादः → प्रतिक्रिया R.2. आकर्णनाय कर्णस्य परावर्तनम्

(इ) प्रेरणं S.1 आहारः<br>
,, S.2 घण्टानादः } → प्रतिक्रिया R.1 लालोत्पतिः ।

इदमुभयं असकृत् कृत्वा ततः एवं क्रियते ।

(ई) प्रेरणम् S.2 घण्टानादः केवलम् → प्रतिक्रिया (R.1) लाला ।

द्वितीयेन प्रेरणेन या अभिमता प्रतिक्रियोत्पाद्यते तस्यैवोपाधिकोत्पादनमिति नाम । प्रतिदिनमस्माकं कार्येषु बहूनि एतादृशानि (उपाधिना उत्पाद्यमानानि) वर्तन्ते । श्वासकोशात् गलनालद्वारा निर्गच्छन् वातः उपाधिवशात् वर्णात्मना भाषात्मना च परिणमते । स एव वातः सप्तस्वरघटितमधुरगीतरूपेणाप्याविर्भवति । आङ्गिकवृथाचेष्टाः उपाधिवशात् रम्यतामापादिताः आङ्गिकाभिनया भवन्ति । मातुलं मामेत्याह्वातुं प्रेरितो बालः तत्समानवयसः अन्यानपि मामशब्देनाह्वयति । पत्रे लिखितं 'बालः' इति पदं पठेत्युक्तः रामः पठति । अनन्तरमनुक्तोऽपि पठेत् । **तेनालिरामकृष्णः** औपाधिकप्रक्रियया मार्जारं क्षीरविमुखं, मर्कटं च कदलीफलविद्वेषिणं चकारेति श्रूयते । मनोभावा अपि एवमौपाधिकहेतुनोत्पादयितुं शक्या इति वाट्सन्-महोदयः निरूपितवान् । श्वेतमूषिकं दृष्ट्वा पूर्वं अबिभ्यत् **आल्बेर्ट्** (Albert) - नामको बालः, मूषिकदर्शनसमकाले उत्पादितेन परुषशब्देन भायितः मूषिकादपि बिभेति स्म । न केवलं मूषिकः भीतिमुत्पादयामास, किन्तु श्वेतवर्णं सर्वमपि वस्तु भीतिमजनयत् बालस्य । अस्य औपाधिकक्रियाप्रसर इति नाम । औपाधिकप्रतिक्रियोत्पादनाय सहजप्रेरकौपाधिकप्रेरकयोः असकृत् सहसान्निध्यमपेक्ष्यते । उभे अपि प्रेरके

---

S. Stimulus. R. Reflex.

समकालावस्थितिमपेक्षेते इति अस्य समकालोपाधिकरणम् (Simultanious conditioning) इति नाम। घण्टां वादयित्वा द्वित्रिनिमेषेभ्यः परमेव यदि भोजनं दीयते, तर्हि लालापि द्वित्रिनिमेषेभ्यः परमेव जायते। प्रतिक्रियायाः विलम्बेन जायमानत्वादस्य विलम्बितोपाधिकरणमिति (Delayed conditioning) इति नाम। अत्र प्रेरकप्रतिक्रिययोः मध्ये स्थिते काले यदि जीवस्य चित्ताकर्षकं अन्यत् किमपि अन्तरा भवति तर्हि लाला नैव जायेत। वर्तुलप्रकाशरूप-मुपाधिमुत्पाद्य स्रावितलालः श्वा दीर्घं प्रकाशं दृष्ट्वा लालां न स्रावयेत्। अत्र निदानं उपाध्याकारभेद एव। प्रकाशाकारयोर्भेदं श्वा जानातीति ज्ञायते। अस्य भिन्नोपाध्युपस्थापनं (Differential Conditioning) इति नाम। केवलोपाधि-जनिता प्रतिक्रिया यदि चिरं सहजप्रेरकं विना भवति तर्हि नैव जायेत। आहारं विना घण्टानाद एव कतिचिद्दिनानि क्रियते चेत् तर्हि लालोत्पत्तिर्न भवति। अस्योपाधिकरणस्य नाम प्रायौगिकविनशनम् (Experimental extinction) इति। एवं नष्टापि प्रतिक्रिया पुनरुद्भावयितुं शक्या यदि सहजप्रेरकोपाध्योः सहसान्निध्यं यथापूर्वं क्रियते। अस्याः प्रक्रियायाः नाम निरोधनाशनम् (disinhibitioning) इति। कश्चन बालः प्रथमं श्वेतशशं दृष्ट्वा अभीतः आसीत्। पश्चात् केनाप्यु-पाधिना श्वेतशशदर्शने बिभाय बालः। भयरहिता या पूर्वावस्था आसीत् सा पुनरपि उपाध्यन्तरोपस्थापनेन कर्तुं शक्या। इयमेवं कृता आसीत्। कोष्ठे उपविश्य भुञ्जानस्य बालकस्य दर्शने दूरे प्रथमं शशः सन्निधापितो बभूव। क्रमशः दिने दिने बालसमीपमानीते शशे, बालः यादृशीं प्रतिपत्तिं भोजनविषये प्रादर्शयत् तामेव शशेऽपि प्रदर्शयामास। क्रमशः शशतो भीतिरपि नष्टा। अस्याः प्रक्रियायाः नाम पुनरुपाधिकरणं (Reconditioning) इति। कदाचिदतिपरिचयात् उपाधिः प्रतिक्रियां नोत्पादयेत्। अत एव मधुपायिनो मदप्राप्त्यर्थमधिकमधिकं मधु पिबन्ति। अतिवैदुष्यं मनःकवाटं बध्नाति। अत एव पण्डितः कश्चिदन्यं पण्डितम् नाभिनन्दति। **ऐन्स्टीन्** (Einstein) - महोदयोक्ते सिद्धान्ते प्रथमं विज्ञानिनः अवधानमपि नाकुर्वन् इति श्रूयते। एतस्य विरुद्धाभ्यनुकूलनं (Negative adaptation) इति नाम।

उपाध्युत्पादने केचनांशा अवधेया वर्तन्ते ।

1. सहजप्रेरकस्योपाधेश्च कञ्चित्कालं युगपदवस्थापनं कर्तव्यम् ।

2. सहजप्रेरकस्योपाधेश्च बहुवारमुपस्थापनं कार्यम् ।

3. प्रेर्यस्य प्रेरकविषयेऽवधानं, प्रतिक्रियाकरणशक्तिश्च अपेक्ष्येते ।

4. उपाधिकरणकाले प्रेर्यस्य मनसो विकर्षकाणामसान्निध्यं च सम्पादनीयम् इति ।

इदं सहजोपाधिप्रतिक्रियाज्ञानमुपाध्यायस्यावश्यकम् । शिक्षणं सर्वमपि प्रतिक्रियारूपमिति अङ्गीकृतम् । संवेगादिना जायमानः कार्यविशेषः अन्ये च व्यवहाराः प्रेरकानुगुणं भवन्तीति ज्ञातमेव । ततश्च युक्तस्योपाधेरुपस्थापनमुपाध्यायस्य कृत्यम् । बालेष्वसमीचीनव्यवहारानुत्पादोऽपि आचार्यस्य धर्म एव । [केचन पितरः शिशूनां रोदनं शमयितुमसकृत् खाद्यादिकं ददति । एवं प्रोत्साहिता बाला रोदनेनैव सर्वमपि स्वाभिमतं साधयितुं प्रयतेरन् । ]

एतावता नैव मन्तव्यं सर्वमपि शिक्षणं प्रतिक्रियारूपमेवेति । प्रतिक्रियायां अनन्तर्भवन्ति कठिनतराणि सुसूक्ष्माणि च शिक्षणानि वर्तन्ते । सौन्दर्यानुभूतिः केवलप्रतिक्रियारूपा न भवति । तस्मात् प्रेरकप्रतिक्रियारूपात् शिक्षणात् विभिन्नमन्यदपि शिक्षणं वर्तत इत्यभ्युपगन्तव्यम् ।

कथं जीवाः शिक्षन्ते ? शिक्षणेन जीवानां मस्तिष्के को वा विपरिणामो जायत इत्यत्र बहोः कालात् प्रयोगाः कृता आसन् । एकोनविंशशताब्द्याः उत्तरार्धकालपर्यन्तं मनोविज्ञानिनः मनुजेतरजीवानां व्यवहारं मनुजव्यवहारतुल्यं मत्वा जीवव्यहारेण मनुजव्यवहारं निरूपयितुं प्रायतन्त । ततश्च शिक्षणविषयेऽपि मनुजेतरजीवविषये ये अंशा दृश्येरन् ते एव मनुजशिक्षणेऽपि समन्विता भवेयुरिति विचिन्त्य, **तार्ण्डैक्** (Thorndike 1874-1949), हल् (Hull 1884-1952)-नामकौ विज्ञानिनौ प्रयोगमकुरुताम् । जीवाः प्रयत्नपराजयप्रणाल्या शिक्षन्त इति अनयोः सिद्धान्तः । प्रयोगार्थं च मार्जारा मूषिकाश्चोपयुक्ता आसन् ।

## प्रयत्नपराजयप्रणाली[1]

इयं प्रणाली तार्ण्डैक्-महोदयेन दृष्टा। क्षुधार्तो मार्जारः कस्यामपि बद्धार्गलायां पेटिकायां निहितः। पेटिकायाः बहिः मार्जारचक्षुर्गोचरे स्थाने आहारश्च निहितः भवति। अन्तःस्थितस्य उत्तोलकस्य (Lever) चालने कृते अर्गलं पेटिकातः स्वयमेव गलितं भवति। कवाटं चोद्घाटितम् जायते। बुभुक्षितः पेटिकायाः अन्तः बद्धश्च मार्जारः बहुवारं प्रयत्य पराजयानपि प्राप्य अन्ते कवाटमुद्घाटय बहिरागत्य भोजनं प्राप्तवान्। अत्र प्रयोगे त्रयः अंशाः दृष्टाः; (1) आरम्भे मार्जारस्य महत् औत्सुक्यं, त्वरा, यथेच्छव्यापाराश्चासन्; (2) अनन्तरं निरर्थकव्यापारपरित्यागः; (3) अन्ते मार्जारस्य कवाटोद्घाटनप्रक्रियाज्ञानं इति। एवमसकृत् प्रयोगे कृते मार्जारः प्रथमं कृतान् निरर्थकव्यापारान् अत्यन्तं परिहृत्य साक्षादेव कवाटोद्घाटनं कर्तुं समर्थो दृष्टः। एवमेव क्षुधार्तः मूषिकः कश्चित् व्यूहयन्त्रद्वारे प्रवेशितः



* तारण्डैक्

1. Trial and Error method.

* Photo : Kindly given by United States Information Service, Madras-6.

बहून् अन्धमार्गान् प्राप्य तान् परिहृत्य अन्ते व्यूहयन्त्रापरान्ते निक्षिप्तमाहारं प्राप्नोति स्म। प्रथमं मूषिकः यथेच्छं गच्छन् अन्धमार्गेऽपि गच्छति स्म। एवमबद्धानि बहूनि कृत्वा अन्ते जिगाय। असकृत् एवं प्रयत्ने कृते, अबद्धानि न्यूनीभवन्ति। ततश्च साक्षादेवाहारं प्राप्तुमपि शक्नोति स्म। यथा एते जीवाः शिक्षन्ते एवमेव




18. **व्यूहयन्त्रम्। अ=प्रवेशमार्गः। इ=आहारस्थानम्।**

मानवा अपि प्रयत्नपराजयप्रणाल्या शिक्षन्ते। शिशुभिः दर्व्या (Spoon) क्रियमाणं भोजनम्, उपानद्धारणम्, प्रौढैः क्रियमाणं मोटारशकटविद्रावणम्, टै-धारणम्, अन्यानि चैतादृशानि अनयैव प्रणाल्या शिक्षितानि भवन्ति। दर्पणरेखालेखनमपि (Mirror-drawing) इमां प्रणालीं विशदं निरूपयेत्। अत्र कश्चित् रेखाद्वयेन कल्पिते नक्षत्ररूपचित्रे नक्षत्रं साक्षादविलोकयन् तद्बिंबं केवलमादर्शे पश्यन् नक्षत्रे लेखिन्या रेखां विलिखेत्। लेखने बहून्यबद्धानि भवेयुः। बहुवारं प्रयत्यैव विना दोषं कोऽपि लेखितुं शक्नुयात्।

अस्यां प्रणाल्यां केचन दोषा अपि वर्तन्ते। इयं प्रणाली अतिश्रान्तिकरी। लाघवं न भवति अस्यां प्रणाल्याम्। कदाचिदियं प्रणाली मनुजमापदि लगयेत्। यद्युचितं फलं न भवति तर्हि जीवो न प्रयतेत। नापि शिक्षेत।

## अनुकरणप्रणाली[1]

अनुकरणं सहजप्रवृत्तिरूपमिति, तस्य च शिक्षणेऽस्त्युपयोग इति च पूर्वमेवोक्तम्। शिक्षितपूर्वः कश्चित् किमपि कार्यं स्वयं कृत्वा दर्शयति। तत्पश्यन् अन्योऽपि तथा कुरुते। शरीरव्यायाम-शिल्पकलादिकार्याणि अनुकरणप्रधानानि। भाषाशिक्षणमप्यनुकरणमूलमेव। मानवेषु अनुकरणशक्तिरधिका। बालाश्च निसर्गादेवानुकरणकुशलाः। अनुकरणेन शिक्षणे द्वयमपेक्षितम्। यस्य कार्यमनुक्रियते तेन, अनुकर्तव्यं मूलं कार्यं सम्यक् कर्तव्यम्। अनुकार्यः शोभनादर्शो भवेत्। यस्तमनुकरोति सोऽप्यनुकरणे समर्थः स्यात्। अत्रानुकरणाभ्यासः पूर्वमेव बाले स्थितः यदि शोभनो भवति तर्ह्येव शिक्षणमपि सफलं स्यात्। पूर्वप्रणाल्यपेक्षया इयं शतगुणं श्रेयसी। व्यर्थव्यापाराः, आयासः, आपच्चात्र न भवन्ति। अतश्चोपाध्यायैः कक्ष्यायां क्रियमाणं सर्वमपि कार्यं समीचीनमनूकूलं च विद्यार्थिनां पुरतः कर्तव्यम्।

## अन्तर्दृष्टिप्रणाली (सूक्ष्मेक्षिकाप्रणाली)[2]

इयं प्रणाली प्रथमप्रणालीतोऽत्यन्तं भिन्ना। **तार्ण्डैक्**-महोदयः—'जीवः कश्चित् प्रयत्नपराजयप्रणाल्या एव शिक्षते। अत्र शिक्षणे अन्तर्दृष्टिः अथवा विचारो न भवति। यथा अस्माभिः द्विचक्रिकाविद्रावणे शरीरावस्थितिः शिक्ष्यते तथा मार्जारोऽपि पेटिकातो बहिर्निर्गमनं शिक्षते स्म। कथं उद्घाटनं कार्यमिति तस्य दर्शनं (विचारः-अन्तर्दृष्टिः- प्रज्ञा) नास्ति' इति कथितवान्।

अत्र मृगाणां अन्तर्दृष्टिः नास्तीति यदुक्तं तदाक्षिपति **कोलर्** (Kohler) 1887)-नामको विज्ञानी। **टाल्मन्** (Tolman. E.C 1886-)-नामकः विज्ञान्यपि अमुं सिद्धान्तं स्थिरीकृतवान्। कोलरमहोदयः अवयविमनोविज्ञानिषु (Gestalt Psychologist) अन्यतमः। प्रथमजगद्युद्धे अयं **कानरि**(Canary Islands)-द्वीपेषु निवसन् शिक्षणविषये वानरानुपयुज्य प्रयोगान् चकार। तत्रेदमेकं निरूपणं

---

1. Learning by imitation. 2. Learning by insight.

भवति। पञ्जरनिक्षिप्तस्य वानरस्य (Chimpanzee) दर्शनविषये पञ्जराद्बहिः तद्धस्ताप्राप्ये स्थाने किमपि कदलीफलं निक्षिप्तमासीत्। फलं हस्ताप्राप्यं विदित्वा वानरः पञ्जरे निक्षिप्तेन दीर्घेण दण्डेन फलं गृह्णाति स्म। तदनन्तरं दीर्घदण्डस्थाने ह्रस्वं वंशदण्डद्वयं निक्षिप्तम् आसीत्। ह्रस्वदण्डद्वयमपि पृथक् पृथगुपयुज्य प्रयतमानो वानरः फलं ग्रहीतुमशक्तः तूष्णीमुपविवेश। पश्चात् दण्डद्वयेन क्रीडन् एकस्य दण्डस्य अन्ते स्थिते द्वारेऽपरं दण्डं यदृच्छया निवेशयामास। कदल्यादाने पूर्वं स्वकृतस्य प्रयत्नस्य, अद्य निष्पन्नस्य कार्यस्य च सहसा सम्बन्धं अन्तर्दृष्ट्या पर्यालोच्य दीर्घ-दण्डेन फलं ग्रहीतुं शक्यमिति निश्चित्य इदानीं दीर्घीभूतेन दण्डेन तत् गृहीतवान्। अत्र कोलरमहोदयः समस्यायाः उत्तरदर्शनं वानरस्य यत् क्षणात् जातं तत्रैवाव-धारणं करोति। प्रयत्नपराजयप्रणाल्यात्र क्रमशो ज्ञानं न जातम्। कृत्स्नां वस्तुनस्यां सम्यग् दृष्ट्वा, समस्यासम्बद्धानां अवान्तरभागानां परस्परं सम्बन्धं चावगत्य कार्य-कारणभावं विचिन्त्य आकुलतां विना स्थितस्य जीवस्य मनसि यत् ज्ञानस्फुरणं भवति तस्य स्फुरणस्यान्तर्दृष्टिः (Insight) इति नाम। अत्र पुनरपि प्रसङ्गात् अन्तर्दृष्टिपद-मीषत् विव्रियते। प्रत्यक्षे विषयीभूतानां सर्वेषामप्यंशानां पृथक् भासमानानां कृत्स्नत्वे-नाथवा अवयवित्वेन (Potential gestalt) यत् मनसा कल्पनं (Reorganisation) सैवान्तर्दृष्टिरिति व्यवह्रियते। कल्पनम्, तेन जायमानं ज्ञानमिति इदमुभयमपि अन्तर्दृष्टिपदवाच्यमेव। एवं कल्पनं क्षणे जायते। विलम्बेनापि जायेत इति केचित्। (30-तमे पुटे दत्तं चित्रं विलोक्यताम्। श्वेतवर्णभागस्य अवयवित्वेन कल्पने पुष्पभाजनं दृश्येत। कृष्णवर्णभागस्यावयवित्वेन कल्पने मुखद्वयं दृश्येत) "यदि वस्तुनः सर्वेऽप्यवयवाः दृष्टिगोचरा भवेयुः तर्हि मृगा अपि कृत्स्नदर्शनं प्राप्योत्तरं (Solution) द्रष्टुं शक्ता भवेयुः। तार्ण्डैक्महोदयस्य मार्जारः समस्यायाः (वस्तुनः) कृत्स्नं स्वरूपं न ज्ञातवान्। मार्जाराय दत्ता समस्या च तद्बुद्धि-शक्त्यतिक्रान्ता। लघ्वी काचन समस्या दातव्या आसीदि"ति कोलरभिप्रैति।

एतेषु सिद्धान्तेषु को वा श्लाघ्यतम इति विचारो नापेक्ष्यते। उक्ताः सर्वा अपि प्रणाल्यः सन्दर्भानुगुणं शिक्षणे उपयुज्यन्त एव। पाठशालासु

शिक्षोचितवातावरणकल्पने अध्यापनप्रणाल्युपादाने चोपाध्यायानां एषां सिद्धान्तानां ज्ञानं साहाय्यमाचरेत् ।

## शिक्षानियमाः[1]

ताण्डैक्-महोदयः शिक्षणे बहून् प्रयोगान् कृत्वा त्रीन् प्रधाननियमान् प्रकाशयामास । एतेषां नियमानां ज्ञानं, तदुपयोगज्ञानं चोपाध्यायानामवश्यापेक्षितम् ।

## अभिमुखतानियमः[2]

यदा बालकः शिक्षणाभिमुखः क्रियाकरणाभिमुखो वा स्यात् तदा द्रुतं शिक्षते; कार्यं च करोति । बालस्याभिमुख्यं अध्यापने अध्ययने वा स्थितस्य श्रमस्यार्धमपनयति; यदा बालः शिक्षणाय सन्नद्धो न भवति, तदा क्रियमाणमध्यापनमरुन्तुदं भवति । बहवः उपाध्यायाः इमं सिद्धान्तमजानन्तः बालानां श्रमं जनयन्ति । कालस्य नैष्फल्यमापादयन्ति । स्वयमपि क्लेशमनुभवन्ति । यदि जिज्ञासावृत्तिरुद्बोधिता अभिरुचिश्चोत्पादिता भवति तर्हि बालकाः शिक्षणाय सन्नद्धा भवन्ति । जिज्ञासामभिरुचिं चानुत्पाद्य क्रियमाणमध्यापनं शवशरीरोद्वर्तनमिव निष्फलं भवति । पाठ्योद्देश्यप्रदर्शनं (Motivation) बालान् सन्नद्धान् कुर्यात् । चतुराः उपाध्याया दैनन्दिनिकसम्भवं कमपि आधारीकृत्य गणितं भूगोलं इतिहासं वाध्यापयितुं पूर्वरङ्गं कर्तुं शक्ता भवेयुः । बालानां शारीरमानसाभिवृद्धिः (Maturity), बुद्धिविकासः, पाठ्यविषयकं पूर्वज्ञानं, अपेक्षा, पाठशालावातावरणमित्येतत् सर्वं बालानां सज्जतासंपादने उपकुर्यात् । आधारविद्या (Basic Education) बालान् स्वयमेव सन्नद्धान् करोति । पाठोपक्रमात् पूर्वं कर्तव्यमुद्देश्यप्रदर्शनमधिकृत्य पश्चादपि वक्ष्यते । अनारोग्य-चिन्ता-संवेगोपद्रव-बुद्धिविकासराहित्यादयः सन्नाहविघ्नकारिणः ।

## अभ्यासनियमः[3]

उपयोगनियमः (Law of use), अनुपयोगनियमः (Law of disuse) इति

---

1. Laws of learning. 2. Law of readiness.
3. Law of exercise or Law of habit.

द्वेधा विभज्यावगम्यते अयं नियमः। नियमस्वरूपमेवं वर्णयति तार्ण्डैक्—
"कस्यापि प्रेरकस्यानुगुणं प्रतिक्रिया अव्यभिचारेणासकृत् जायते चेत् तर्हि अनयोः सम्बन्धः दृढतरो भवति। प्रतिक्रिया न भवति चेत्तर्हि अनयोः सम्बन्धो नष्टो भवति। तथा च, प्रथमं प्रेरकप्रतिक्रिययोः सम्बन्धेन ज्ञानं जायते। असकृत् सम्बन्धोत्पादनेन च लब्धं ज्ञानं दृढं भवति" इति। शिक्षितव्यमसकृत् कृतं चेत् शीघ्रं ज्ञातं भवति। रागालापनमसकृत् शिक्ष्यते। टैप्-करण -टेन्निस्-क्रीडाप्रभृतयः अभ्यासेनैव वशंवदा भवन्ति। कौशलं च प्राप्यते। अनभ्यासे कौशलं हीयेत। 'अनभ्यासे विषं शास्त्रम्' 'क्षणादूर्ध्वमतार्किकः', 'अभ्यासो हि कर्मसु कौशलमावहति', "न हि सकृन्निपातमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामादधाति [1]" इति वाक्यानि अस्य नियमस्य प्रभावं वर्णयन्ति। उपयोगः अनुपयोगश्च अस्मिन्नियमेऽतिप्रधानभूतौ। असकृत् अभ्यासकरणे स्वतो रुचिर्न भवेद्बालानाम्। अतः तुष्टिः, अर्थज्ञानं, अभिरुचिश्च अभ्यासे कारणानि। तुष्टिजनकं कार्यमभ्यस्यते। यत्रार्थज्ञानं भवति तदपि आवर्त्येत। यत्र स्वतोऽभिरुचिः तत्रापि अभ्यासो भवति। भाषाज्ञानमपि अभ्यासेनैव जायते।

## परिणामनियमः[2]

अयं नियमः शिक्षितुः मनसि जायमानां फलभूतां तुष्टिमाश्रित्य कल्पितः। यस्य विषयस्य शिक्षणे मनसः तुष्टिः भवति तस्य शिक्षणं सुलभं भवति। शिक्षितं च मनसि दृढं वर्तेत। यत्र प्रयोजनाभावबुद्धिः अतुष्टिश्च तत्र शिक्षणं न फलति। शिक्षितमपि चिरं मनसि न वर्तेत। पारितोषिकदानादयः इमं नियममेव पुरस्कृत्य प्रवर्तन्ते। दण्डनाभावोऽपि पारितोषिकतया ग्राह्यः। दुरभ्यासो यदि तुष्टिमुत्पादयति तर्हि तत्र बालः प्रवर्तेत इति दुरभ्यासान्निवारणे प्रयतितव्यमुपाध्यायैः।

अमुं नियमं केचनाक्षिपन्ति। 'या तुष्टिरत्र शिक्षणोद्योजकत्वेन निर्दिश्यते सा शिक्षणसमकालं नैव भवति। शिक्षणात् परं खलु सा जायते!। तुष्टिकरा

---

1. गणरत्नमहोदधिः; 2. Law of effect.

एव विषयाः मनसि दृढं लग्ना भवन्तीतीदमपि नाभ्युपगन्तव्यम् । अतुष्टिकरमपि मनसि लग्नं भवत्येव ' इति । अत्रेदमुत्तरं भवति । भविष्यता फलेन प्राप्तव्यं सुखं प्रतीक्षमाणाः जनाः कार्यकरणकाले क्लेशमपि महान्तं सहन्त इत्यनुभवविदितमेव। ततः बालाः अपि स्वापेक्षापूर्तिं कामयमानाः क्लेशमपि न गणयेयुः । तस्मादयं विधिः निष्प्रयोजन इति वक्तुं नैव शक्यमिति ।

शिक्षितुः मनोभावस्य शिक्षणफलस्य चास्ति दृढतरः सम्बन्धः । ततश्च तुष्टिकरस्य विषयस्य शिक्षणे बालानां रुचिर्भवेदेव । अत एवाधुनिका मनोविज्ञानिनः इमं विधिं स्वमतानुसारं परिवर्त्याङ्गीकृतवन्तः । तस्मादुपाध्याया अपि एतेषां नियमानां फलेग्रहित्वमवगत्य यथार्हमध्यापने उपयुञ्जीरन् ।

## शिक्षणोपस्कारका हेतवः

शिक्षणे अन्ये केचनांशा अपि साहाय्यमाचरन्ति । तैः कृतं साहाय्यं यदि भवति तर्हि शिक्षणं अध्यापनं वा ललितं स्यात्, फलदायि च भवेत् । शिक्षितं चिरं बुद्धौ वर्तेत । वक्ष्यमाणाः सहायका भवन्ति ।

## अभिप्रेरणम्

सर्वेष्वपि कार्येषु बलवत् प्रेरकं किमपि अपेक्ष्यते । प्रेरकं यदि न भवति तर्हि कार्यमपि न स्यादेव । अस्मिन् प्रसङ्गे मोटिवेषन् (Motivation) इति पदस्यार्थोऽपि सम्यक् ज्ञातव्यः । चलनार्थकात् धातोः निष्पन्नं पदमिदम्, यत् (उद्देश्यं फलं वा) (नरं) जीवं चलयति (प्रेरयति) कार्यकरणाय तन्निर्दिशति । कुतः कश्चित् किमपि पुस्तकं पठति? कुतः कश्चित् सर्वकारीयं धनं भूरि स्वकार्यायोपयुङ्क्ते? कुतः कश्चित् धूर्तो भवति? कुतः कश्चिद्बहूनां पुरतो लज्जावान् भवति? कुतः कश्चिज्जयं प्राप्नोति? अन्यश्चापजयम्? अत्र निर्दिष्टानां प्रश्नानां यत् यत् उत्तरं दीयते तत्तदेव तत्तत्कार्यं प्रति मोटिवेषन् (अभिप्रेरणं) भवति । अभिप्रेरणज्ञानं च कर्तव्ये कार्ये परिवर्तनादिकं कर्तुं परमुद्योजयेत् । कदाचिज्जीवस्य दुःस्थितिः, सुस्थितिर्वा जीवं प्रेरयेत् । क्षुधा पिपासा च सारमेयं

वीथ्यां भ्रामयति ; वानरं च शाखासु चलितुम् । कदाचित् लप्स्यमानं फलमपि अभिप्रेरणं स्यात् । शिक्षणे चोपाध्यायैः, पाठात्प्रागेव प्रेरकोपस्थापनं कार्यम् । तत एवाध्ययने अभिरुचिः भवेत् । हेर्बर्ट्-महोदयस्य पञ्चपर्वप्रणाल्यामिदं प्रथमं पर्व भवति । उष्णमापनोपकरणम् (Thermometer) अधिकृत्याध्यापने एवं अभिप्रेरणं कर्तुं शक्यते । ' चत्वारः कदाचित् काफ़ीं पातुं शालां गताः । परिचारकेण च काफ़ी आनीता । चतुर्षु द्वौ सद्य एव काफ़ीं पातुं प्रवृत्तौ, द्वौ तु न । निदानं पृष्टौ ' अत्युष्णा वर्तते काफ़ी ' इत्यूचतुः । काफ़ी तु समोष्णा । परं द्वयोस्तु न तथा भाति स्म । ततः तौ तां अनुष्णयितुं पात्रात् पात्रे आवपताम् । अनेनेदं ज्ञायते यदौष्ण्यविषये नराणां प्रतीतिर्न श्रद्धातव्येति । तस्मात् सर्वाङ्गीकारयोग्यं किमपि मानमपेक्ष्यते; तच्च विज्ञानिनो दृष्टवन्त इति तदधिकृत्योच्यत' इति । एवं ' दधि मानय ' ' मोदकैस्ताडय ' इत्यादिभिः सूचितां कथामुक्त्वा विशेषशब्द-ज्ञानस्य सन्धिज्ञानस्य चावश्यकतोपस्थापनीया ।

वैयक्तिकाभिप्रेरणं सामाजिकाभिप्रेरणमिति इदं द्वेधा विभक्तुं शक्यम् । वैयक्तिकांशाः संवेगादयः प्रथमाभिप्रेरणे अन्तर्भवन्ति । आत्मगौरव-परकृतपूजन-स्पर्धादयः द्वितीयेऽन्तर्भवन्ति । बाह्य[1]-आभ्यन्तर[2]त्वेनापि विभज्यतेऽभिप्रेरणम् । अध्येयो विषयः आत्मनोऽपेक्षां पूरयतीति यदा बालो जानाति तदायं स्वयमेव श्रद्धयोत्साहेन च शिक्षेत । इदमेवाभ्यन्तरमभिप्रेरणमुच्यते । एतादृशबुद्ध्युत्पादन-मेवोपाध्यायस्य प्रथमं कार्यम् । पारितोषिकं दण्डनं च बाह्याभिप्रेरणे भवतः । दण्डनादपि पारितोषकमेव श्लाघ्यमभिप्रेरणमिति विज्ञानिनः । दण्डनं कदाचित् आचार्ये, अध्येये विषये च द्वेषं जनयति । पाठ्येतरविषयेषु च बालानां प्रवर्तनम्, अध्ययने च बालानामधिकावकाशदानं, सम्भूय कार्यकरणे बालानां प्रेरणं, समीचीनः उपाध्यायशिष्यसम्बन्धः इत्यादीन्यपि उचितान्यभिप्रेरणानि भवन्ति ।

---

1. Extrinsic motives. 2. Intr insic motives.

## स्पर्धा - सहयोगश्च[1]

कक्ष्यां द्वेधा विभज्य तयोः परस्परं स्पर्धोत्पादनमपि शिक्षणे साहाय्यं कुर्यात्। पक्षकृतस्पर्धापेक्षया वैयक्तिकस्पर्धैवाधिकं फलं ददाति। स्पर्धा प्रद्वेषं जनयतीति स्पर्धापेक्षया सहयोग एव वरमिति केचित् विज्ञानिनः। सहयोगेऽपि केचन दोषा वर्तन्ते। बुद्धिमन्तः एव प्रगतिमन्तो भवति। अन्ये केवलमनुचरा एव भवेयुः। सहयोगे शक्तिमन्तोऽपि केचन सहयोगाभिनयं कुर्युः। सहयोगः स्वतः कार्यकरणशक्तिं (Initiative) न जनयति। 'यत् सर्वेषां कार्यं तत् कस्यापि कार्यं न भवती'ति वर्तते आभाणकः।

## परिवेषः

परिवेषापेक्षानुगुणं बहवो विषया इदानीं अध्येया वर्तन्ते। शिक्षणानुगुणं वातावरणं पाठशालैव कल्पयति। बहुभिः सह क्रियमाणमध्ययनमपि शिक्षणमुपस्करोति।

## विकासः[2]

बालस्य मनःपरिपाकोऽपि शिक्षणमुपस्करोति। गभीरशास्त्रार्थज्ञाने प्राप्तविकासं मन एव साहाय्यं कुर्यात्।

## अवधानम्[3]

शिक्षणेऽवधानमपेक्ष्यते। अवधानहीनः केवलं शरीरमात्रेण कक्ष्यायां सन्निहितो भवति। मनस्तु कुत्रापि परिभ्रमत् स्यात्। ततश्चाध्यापनं तद्विषये ऊषरे वर्षितमिव निरर्थकं स्यात्।

## मार्गनिदेशनम्[4]

कक्ष्यायां स्थितं बालं तच्छक्तिं तदपेक्षां च ज्ञात्वा, स यथा स्वयमेव शिक्षेत तथा मार्गं प्रदर्शयेदाचार्यः। बालाः स्वयमेव ज्ञातुमिच्छन्ति न त्वाचार्यैः

---

1. Competition and Co-operation. 2. Maturation.
3. Attention. 4. Guidance.

क्रियमाणं दर्वीप्राशनम् वाञ्छन्ति । ततश्चाचार्यः सर्वं स्वयमेव न विवृणुयात् । यथा श्लोकतात्पर्यादिकं विद्यार्थिनः स्वत एवावगच्छेयुः तथा तान् प्रश्नैः नयेत् । अध्येयविषयं तदध्ययनोपयोगिविषयं चाधिकृत्य कथनम्, शिक्षणे जनिष्यमाणान् विघ्नान् निर्दिश्य तन्निवारणोपायकथनम्, 'मयेदं शिक्षितुं शक्यमि'ति विद्यार्थिनां मनसि आत्मप्रत्ययोत्पादनं चाचार्यस्य मुख्यं कार्यम् ।

## वैयक्तिकापेक्षा[1]

शिक्षणशक्तिश्च सर्वेषु बालेषु समाना न वर्तते । तस्मादेकैकस्यापेक्षानुगुणं विषयस्य प्रणाल्याश्च कल्पनं शिक्षणमुपस्करोति । यथा बालाः शिक्षणे तुष्टिं प्रगतिं च प्राप्नुयुः तथा विषयाः नातिकठिनाः, नातिसुलभाश्च कल्पनीयाः । प्रणालीपरिवर्तनमपि कार्यम् ।

## आचार्यशिष्यसम्बन्धः[2]

बालाः यदि स्वाचार्ये गौरवबुद्धिं वहन्ति तर्हि तदध्याप्ये विषयेऽपि गौरवबुद्धिं कृत्वा सम्यक् शिक्षन्ते । विद्विष्टाचार्येणाध्याप्ये विषये विद्वेषवन्तो भवन्ति । तस्मादुपाध्यायशिष्यसम्बन्धेन प्रीतिमता भाव्यम् ।

## अधिगमरेखा[3]

शिक्षणे जाता प्रगतिः कयाचन रेखया प्रदर्शयितुं शक्या यस्या नाम अधिगमरेखा इति । शिक्षणायोपयुक्तस्य परिमितस्य कालस्य, शिक्षणप्रगतेश्च यः पारस्परिकः सम्बन्धो वर्तते स सूच्यते अनया रेखया । इयं रेखा कस्यापि छात्रस्य शिक्षणप्रगतिं (Rate of learning) आश्रित्य वर्तते । सर्वेषां शिक्षणप्रगतिः समाना न भवति । एकस्यापि विद्यार्थिनः प्रगतिः सर्वदा समानरूपा न वर्तेत । शिक्ष्यमाणविषयं शरीरस्वास्थ्यादिकं चावलम्ब्य भिन्ना भवति ।

---

1. Individual need. 2. Teacher-pupil relationship.
3. Learning curve.

इयं रेखा टैपूकरण-टेलिग्राफी (तारप्रणाली)-प्रभृतिषु लब्धां प्रगतिं सम्यक् प्रदर्शयितुं शक्नोति। भाषा-गणित-विज्ञानाध्ययनादिषु रेखया प्रदर्श्यमाना प्रगतिः नातिविश्वसनीया स्यात् यतोऽत्र मापनं श्रमसाध्यं वर्तेत। या रेखा प्रगत्यर्थं व्ययितं कालं प्रदर्शयेत् सा कालरेखा (Time curve) इत्युच्यते। या रेखा शिक्षणसमये कृतान्यबद्धानि सूचयति तस्याः अबद्धरेखा (Error curve) इति नाम। या रेखा अभ्याससंख्यानुगुणं प्राप्तां प्रगतिं सूचयति तस्याः प्रगतिरेखा (Attainment curve) इति निर्देशः।

बहूनां शिक्षणप्रगतिरेखादर्शनेन केचन सामान्यधर्माः शिक्षणे तर्किता वर्तन्ते।

शिक्षणप्रगतिः प्रारम्भदशायां मन्दं मन्दं भवति। शिक्षणविषये क्रिया-कौशलस्यापेक्षितस्याभावात् प्रगतिर्मन्दा भवेत्। केषांचित्तु अत्यासक्त्या कौशलपरिवर्तनाच्च (Transfer of skills) प्रारम्भे एव द्रुता प्रगतिः भवति प्रारंभप्रगतेः परं कञ्चित् कालं तीव्रा प्रगतिर्भवति। इयं तीव्रप्रगतिश्च चिरं नानुवर्तेत। किञ्चित्कालात्परं प्रगतिरप्रवाहिनी (Stagnated) स्यात्। इमामवस्थां समस्थलावस्थां (अधित्यकां-Plateau) वदन्ति। अस्या दशायाः प्राप्त्यनन्तरं प्रयतमानोऽपि कश्चित् प्रगतिं न लभते। अतिप्रयत्ने कृते कदाचित् प्रगतिः प्राप्येत। सर्वापि प्रगतिः शरीरोवच्चावधिं (Physiological limit) अतीत्य न भवेत्।

अधिकतरं कृताभ्यासोऽपि मानवः शतत्रयपदपरिमितं अध्वानं पञ्चसु क्षणेषु गन्तुं नैव शक्नुयात्[1]। अधिकां प्रगतिं प्राप्तुं शरीरशक्तिसीमा नानुमनुते। प्रायशो बहवः अधित्यकायामेव विश्रान्ता भवन्ति। शारीरसीमपर्यन्तमपि परिश्रमं

---

(1) "दशहस्तान्तरं व्योम्नो यो नामोत्प्लुत्य गच्छति। न योजनशतं गन्तुं शक्तोऽभ्यासशतैरपि।" हरिभद्रः।

कर्तुं केषांचित् नोत्साहः। कदाचिदन्तर्दृष्ट्या प्रणालीविशेषाद्वा समस्थलावस्था-मतीत्य प्रगतिः प्राप्यते कैश्चित्।




अभ्यासकालः (सप्ताहरूपेण)

19. **अधिगमरेखा**

प्रायौगिककुशलैः मनोविज्ञानिभिः समस्थला प्रगतिः कस्माज्जायते इत्यत्र कानिचन कारणानि निर्दिष्टानि वर्तन्ते। शिक्षणे प्रारम्भदशायां स्थितः उत्साहः पश्चात् क्षीणो भवति। टैप्करणादिकं शारीरं श्रममपेक्षते। ततश्च तत्र विरागो जायेत। अनारोग्यम्, प्रगतावश्रद्धा, एतदेव पर्याप्तं ममेत्यलंबुद्धिः, आत्मनः कौशले अप्रत्ययः, इत्यादिभिः कारणैः प्रगतिः स्तब्धा जायते। प्रणाल्यपि अत्र निमित्तं स्यात्। विषयकाठिन्यमपि प्रगतिं प्रतिबध्नीयात्। अधित्यकादशायां पूर्वं शिक्षितं सर्वं दार्ढ्यं अश्नुते। तस्मादियमवस्था सफलैवेति बहूनां मतम्। प्रगत्य-भावकारणानि ज्ञात्वा अधित्यकावस्थातो विद्यार्थिनः प्रणालीपरिवर्तनेन, नूतनप्रेरणो-पस्थापनेन, अन्यैरुपायैश्च उपाध्यायैः उद्धर्तव्याः। शारीरसीमानं यावत् प्रगतिं प्राप्तुं

प्रोत्साहनीयाश्च भवन्ति । अनुस्यूतशिक्षणापेक्षया विरम्य विरम्य शिक्षणं फलदायि भवति । अत एव विरामो दीयते विद्यार्थिभ्यः । अल्पकालविरामः असकृत् दीयमानः शिक्षणकौशलं वर्धयति । विरामकाले विद्यार्थिनः न शिक्षन्त इति न । तेषां मनस्तु अविदितमेव पूर्वाभ्यस्तं विषयं विरामकाले परिचिन्वदेव वर्तते । विरामकालः आविर्भावकाल[1] इत्युच्यते । 'हिमे विसर्पणं ग्रीष्मे, सन्तरणं च शिशिरे शिक्षामहे' इति वर्तते भाषान्तरे आभाणकः[2] ।

शिक्षणे प्रगतिः सर्वेषां समाना न भवतीत्युक्तम् । तत्रेमानि कारणानि भवन्ति ।

1. शिक्षितॄणां मध्ये परस्परं बुद्धिशक्त्याद्यदिषु भेदो वर्तते ।

2. वयसः अनुगुणं बुद्धेर्विकासो वर्तते । यस्य बुद्धिविकासः शरीराभिवृद्धिश्च सम्यक् वर्तते सः द्रुतं प्रगतिं प्राप्नुयात् ।

3. शिक्षणं तावत् क्रियारूपं (Active process) वर्तते । अत एव **विल्लियम् जेम्स्**-महोदयः, 'कार्यं कृत्वैव वयं शिक्षामहे[3]' इत्याह । यदि शिक्षिता शिक्षणे सोत्सहं भागी स्यात् तर्हि प्रगतिरपि द्रुतं प्राप्येत । उपाध्यायाः केचन अध्यापनकाले छात्राणां क्रियाशीलत्वं नापादयन्ति । छात्रा अपि यदि क्रियाशीला भवन्ति तर्ह्येव ते अध्ययने रुचिमन्तो भवेयुः ।

4. शरीरस्थितिः मनःस्थितिश्च यदि सुष्ठु स्यात् तर्ह्येव शिक्षणे प्रगतिः स्यात् । श्रान्तिः अनारोग्यं चात्र विघ्नमाचरतः ।

5. शिक्ष्यमाणविषयसदृशविषयेषु स्थितं पूर्वज्ञानं च शिक्षणे साहाय्यं करोति ; वैशेषिकदर्शने प्रज्ञावन्तः गौतमन्यायदर्शनं द्रुतं ज्ञातुं शक्ता भवेयुः ।

---

1. Period of Incubation.

2. We learn to skate in summer and swim in the winter: Ross, P. 50. 3. We learn by doing.

6. अधिगमरेखा, प्रगतिः कथं वर्तते इति ज्ञाने उपाध्यायस्य साधनं भवति। शिक्षणे स्थितं व्यक्तिगतप्रगतिभेदमपि इयं प्रदर्शयेत्। प्रगत्यभावकारणान्यपि द्रष्टुमियं रेखा निर्दिशेत्। ततश्च विघ्ननिवारणे प्रगतिप्राप्तौ च अनया रेखया उपकृताः आचार्याः प्रयतेरन्।

## अभ्यासः[1] (Habit)

शिक्षितं किमपि कार्यं यदि पुनः पुनः बुद्धिपूर्वं कृत्वा स्थिरः परिचयस्तत्रापाद्यते तर्हि प्रयत्नाधिक्यं अभ्यासं च विना तत्कार्यं, पश्चात् कर्तुं शक्यते, यतः तदिदानीं अभ्यस्तं (Habit) जातम्। इदंप्रथमतया क्रियमाणं किमपि कार्यं क्लेशं जनयेत्। अस्माकमवधानं सर्वं तत्रैव कार्ये लग्नं भवति; प्रयत्नश्चाधिकोऽपेक्ष्येत। प्रथमं लेखने प्रवृत्तो बालः लेखिनीं सम्यक् धर्तुमपि न जानीयात्। लेखनाय अनपेक्षितमपि कार्यं किमपि कुर्यात्। पुनः पुनः परिचयात् स एव बालः पश्चात् वृथाव्यापारान् परित्यज्य अभ्यासं संपाद्य सुष्ठु द्रुतं च लेखितुं प्रभवेत्। अबद्धानि न कुर्यात्। अभ्यासश्च आवृत्त्या संपाद्यते। चिन्तनपुरस्सरं कस्यापि कार्यस्यासकृदावृत्त्या तत्कार्यकरणाभ्यासो जायते। पश्चात्तु अभ्यासः, चिन्तनं विनापि, कार्यं कर्तुं शक्तिं ददाति। अभ्याससम्पादनं मनःकार्यत्वेनोक्तम्। केवलतन्त्रिकाकार्यत्वेनापि अभ्यासं व्यवहारवादिनो वर्णयितुं शक्नुवन्ति। यदा तन्त्रिकामार्गे प्रेरकानुगुणं प्रतिक्रिया कापि जायते तदा तन्त्रिकामार्गः तादृशप्रतिक्रियायाः पुनः करणे किमपि सौविध्यं (Facility) धत्ते। कस्यापि कार्यस्य करणकाले 'क' इत्यस्मात् तन्त्रिकास्थानात् 'त' इतीदं तन्त्रिकास्थानं प्रति तन्त्रिकाधारा यदि सकृत् गच्छति तर्हि पुनरपि तत्र जायमाना तन्त्रिकाधारा 'त' इतीदं स्थानं प्रत्येव गन्तुमुद्युङ्क्ते। ततश्चाभ्यासः जायते। तन्त्रिकामण्डलं नरेण यथा वर्त्यते तथैव तमनुवर्तते। 'यो (नरः) यथा

---

1. संस्कृतभाषायां 'अभ्यास' शब्दः आवृत्तौ उपयुज्यते। अत्र तु आवृत्तौ, तादृशावृत्त्या निष्पन्ने कौशले चोपयुज्यते।

वर्तयत्येतत् तं तथैवानुवर्तते' इति शरीरमुद्दिश्य भगवान् व्यासः कथयति। अभ्यासशब्दश्च कायिकव्यापारान् केवलं प्राधान्येन निर्दिशन्नपि मनोभावे स्थितं अभ्यासमपि सन्दर्भानुगुणं सूचयितुम् अलं भवति।

अभ्यासस्य, मूलप्रवृत्तेः, व्यवहारवादिनां व्यवहारस्य च मिथो भेदो वर्तते। व्यवहारः मूलप्रवृत्तयश्च सहजाः। अभ्यासस्तु शिक्षणेन अथवा प्रयत्नेन निर्वृत्तः। मूलप्रवृत्तयः सर्वजीवेषु समानाकारेणैवाविर्भवन्ति। अभ्यासश्च व्यक्तिभेदेन विभिन्नो वर्तते।

अस्माकं दिनचर्या सर्वापि अभ्यासमूला वर्तते। दन्तधावन-स्नान-वस्त्रधारण-भोजन-शयनादीनि सर्वाण्यपि अभ्यासानुगुणमेव क्रियन्ते प्रतिदिनम्। अत एव कदाचित् 'अभ्यासराशिः मानवः (Bundle of habits)' इत्यप्युच्यते। अभ्यासः सच्चारित्रस्यापि मूलम्। सर्वदा सत्यमेव वदितुं यस्य अभ्यासो भवति स एव सत्यवादीति प्रथां भजते; न तु सकृत् सत्यकथनेन। यः असकृत धर्माचरणेन आहितसंस्कारो भवति स एव (धार्मिकः) धर्मशीलो भवति। अत एव **पाणिनिरपि** ताच्छील्ये पौनःपुन्ये च णिनिप्रत्ययं विधत्ते। कस्यापि कार्यस्य असकृदभ्यासेन तद्विषयकः कोऽपि संस्कारः मानवे आहितो भवति। स च सर्वदा अविनाभूतः सन् मानवस्य प्रकृतिविशेषो भवति। अत एव तादृश-संस्कारस्य-अभ्यासस्य-द्वितीया प्रकृतिः (Second nature) इति नाम दत्तं वर्तते।

एवं लब्धः संस्कारः बहुविधो वर्तते। लेखन-सन्तरणादयः कायिकाः (Physical)। पठनेन असकृत् भाषणेन च जायमानः संस्कारः वाचिकः (Verbal)। केचन परैः व्यवहारं सम्यगाचरन्ति। कर्तव्यं च कार्यं सुष्ठु कुर्वन्ति। अयं सामाजिकसंस्कारो (Social habits) भवति। आर्जवसत्योद्योगादयः सदाचरणसंस्काराः (Moral habits)। केचन सर्वेष्वपि संशयशीलाः। केचन सर्वत्र विश्वासिनः भवन्ति। इदं सर्वं चिरपरिचयात् जातमिति अस्य संस्कारस्य **चिन्तनासंस्कारः (Thought habits) इति नाम।**

शिक्षणे अभ्याससंपादनस्यावश्यकता वर्तते। कानिचन कार्याणि द्रुतं कर्तव्यानि भवन्ति। परीक्षायामुत्तरं समग्रं होरात्रये लेखनीयम्। यदि द्रुतलेखने परिचयो न भवति तर्हि कृत्स्नोत्तरलेखनमसाध्यम्। अभ्यासेन क्रियमाणेषु कार्येषु अवधानं नापेक्ष्यते। द्विचक्रिकाविद्रावणे कायिकव्यापारः सर्वः स्वतःकृतः (Automatic) भवति। चक्षुः केवलं गन्तव्ये मार्गे प्रहितं वर्तते। अत्र विभिन्नैरवयवैः कार्यकरणे सहयोगः (Co-ordination) अपेक्ष्यते। तच्च अभ्यासेनैव साध्यम्। अत एव अर्चकाः देवमन्दिरेषु घण्टायाः वादनम् नीराजनञ्च युगपदेव कर्तुं शक्नुवन्ति। निर्दुष्टं टैप्करणमपि अभ्यासकार्यम्। अभ्यासः अनायासं कर्म कर्तुमस्माकं सौविध्यं ददाति। तस्मात् यत्र अभ्यासः छात्राणामुपकाराय कल्पेत, तत्र अभ्यासं संपादयितुं छात्राः उपाध्यायैः उपकर्तव्याः।

अभ्यासः सम्पादनीय इत्युक्तम्। परमतिमात्रं अभ्याससंपादनं क्वचित् हिताय न भवति। मञ्चशायिनः केवले स्थण्डिले शयानाः स्वापं न लभन्ते। प्राचीने संप्रदाये कृतपरिचयानां नव्यसंप्रदाये रुचिर्न भवति। सुन्दरवस्तुभिः दृढपरिचयात् कदाचित् सौन्दर्यानुभवो न्यूनीभवति। 'अतिपरिचयादवज्ञा'पि जायते। तस्मादति सर्वत्र वर्जयेत्।

यथा शोभनः परिचयः, तथा अशोभनः परिचयोऽपि बालानां संवेगदोषात्, सहवासदोषात्, परिवेषबलात्, नैसर्गिकाभिरुचेश्च जायते। दन्तदंशननिरर्थकचेष्टाकरणादयः परिचयाः दोषोद्घाटनेन निराकर्तव्या भवन्ति। दुष्टमैत्री सन्मैत्र्या अपनेया स्यात्। नैसर्गिकाभिरुच्या जायमानाः दुष्परिचयाः अपनेतुमशक्या एव। अत एवोच्यते 'येऽपि स्वभावजा गुणास्ते न शक्या वारयितु'मिति। दुरभ्यासवान् मानवः, 'अयं परिचयो दुष्टः' इति यदि स्वयमेव विवेकं प्राप्नोति तर्हि तं परित्यक्तुं शक्त एव स्यात्।

## प्रशिक्षणान्तरणम्[1]

शिक्षणे चैकस्मिन् विषये संपादिता शक्तिः किमन्यविषयशिक्षणे उपकुर्या-

---

1. Transfer of training

दित्यत्र विवदन्ते विज्ञानिनः। मनोविज्ञानिनः पूर्वकाले एवमचिन्तयन्। "चिन्तने स्मरणे कल्पने तर्कणे अवेक्षणे च विभिन्नाः शक्तयो वर्तन्ते। एताः शक्तयः कठिनविषयशिक्षणेन वर्धिताः भवन्ति। एवं एकत्र वर्धिता शक्तिरन्यत्रापि स्वकार्यं कर्तुमप्रतिहतं प्रवर्तेत। तस्मादेकत्र लब्धस्य कौशलस्यान्यत्र संक्रामणं कर्तुं शक्यम्" इति। अस्य **प्रशिक्षणान्तरणमिति** नाम। "प्रशिक्षणं सामान्यशक्तिं वर्धयति। गणित-लातिन्-प्रभृतयो विषयाः अधीताः अवगमं युक्तिचिन्तनं च वर्धयन्ति। भौतिकरसायनादयः अवेक्षणशक्तिमेधयन्ति। पूर्वकाले लातिन्-गणितादिषु कृतभूरिपरिश्रमा एव कुशलप्रशासका आसन् यतस्तेषां मनःशक्तयः सर्वत्राप्रतिहतं प्रसरितुं कृतप्रशिक्षाः" इति एतत्सिद्धान्तानुसारिणः कथयन्ति। ये त्विमं सिद्धान्तं नाङ्गीकुर्वन्ति तेषामयमाशयः। कुशलप्रशासितृत्वं न प्रशिक्षणमूलम्। ते प्रशासकाः पूर्वमेव बुद्धिमतां कुले उत्पन्नाः अभिजाताश्च आसन्। पूर्वकाले पाठशालाप्रवेशोऽपि बुद्धिमतां एव दत्त आसीत्। यदि लातिन्-गणिताद्यध्ययनं बुद्धिकौशलमुत्पादयतीत्यङ्गीक्रियते तर्हि चोरणमपि बुद्धिकौशलं दद्यादित्यङ्गीकर्तव्यम्; यतश्चोरा अपि युक्तिपूर्वं चिन्तयन्ति; सम्यगवेक्षन्ते; शोभनं निश्चिन्वन्ति चेति। अन्यच्च, एतादृशप्रशिक्षणान्तरणं कर्तुं शक्यं किमित्यत्र **विल्लियम् जेम्स्**-नामको विज्ञानी पञ्चाशतो वर्षेभ्यः पूर्वं कमपि प्रयोगं कृतवान्। अष्टसु दिनेषु, 131-निमेषान् व्ययीकृत्य **विक्टर् ह्यूगा** (Victor Hugo)-महाशयस्य सटैर् (Satyr)-ग्रन्थात् 158-पङ्क्तीः कण्ठस्थीचकार। पश्चाच्च अष्टत्रिंशद्दिनेषु **मिल्टन्**-(Milton) कवेः पारडैस् लास्ट् (Paradise Lost) इत्यस्य काव्यस्य प्रथमं सर्गं कण्ठस्थीचकार। ततः पुनरपि सटैर्ग्रन्थात् अन्याः 158-पङ्क्तीः कण्ठस्थीकर्तुं प्रायतत। यदि प्रशिक्षणान्तरणसिद्धान्तः सत्यः स्यात् तर्हि प्रथमकण्ठस्थीकरणापेक्षितात् कालात् न्यून एव कालः तृतीयकण्ठस्थीकरणस्यापेक्षितः स्यात्। मध्ये मिल्टनकाव्यकण्ठस्थीकरणेन अवगमे स्मरणे च शक्तिः वर्धिता किल! वस्तुतस्तु तृतीयकण्ठस्थीकरणस्य प्रथमादपि अधिकः कालः अपेक्षितः आसीत्। अनेन ज्ञायते प्रशिक्षणान्तरणं न शक्यमिति। **जेम्स्**-

**प्रयोग**: वस्तुतः इमं सिद्धान्तं साधयितुं बाधितुं वा नैव शक्तः। तत्रेदं निदानम्। तृतीयकण्ठस्थीकरणकाले अस्योत्साहः न्यूनः स्यात्; प्रथमभागापेक्षया पश्चादुपात्तः सटैर्भागः कठिनतरः स्यात्। परन्तु अन्यैः कृताः केचन प्रयोगाः प्रशिक्षणान्तरणं न सुशकमिति निरूपयन्ति। केचन विद्यार्थिनः दत्तासु रेखासु का दीर्घतरेति, केवलं दर्शनेनैव ज्ञातुं प्रशिक्षिता आसन्। इदं प्रशिक्षणं वस्तुगुणविवेचने शक्तिं दत्तवदेव स्यात्। प्रशिक्षणान्तरणसिद्धान्तस्य याथार्थ्यमभ्युपगम्यते चेत् तर्हि एवं दैर्घ्यज्ञाने प्रशिक्षिताः बालाः वस्तूनां आकारभेदं भारविस्तारादिभेदं च ज्ञातुं शक्ता एव भवेयुः। वस्तुतः विद्यार्थिनः अशक्ता एवासन्। प्रयोगादिदमपि ज्ञातमासीत् यत् समानेऽपि विषये प्रशिक्षणान्तरणं न शक्यम् इति। दैर्घ्यज्ञान-शिक्षणकाले या दीर्घरेखा दत्ताः ततोऽपि दीर्घतरासु रेखासु दत्तासु दैर्घ्यविवेचनं कर्तुं छात्राः असमर्था एवासन्। 'न हि शणसूत्रवानाभ्यासे त्रसरसूत्रवानवैचित्र्यलाभ' इति **वामन**वचनमपि अत्र स्मरणमर्हति। कस्याञ्चि-दवस्थायां आर्जवेन वर्तितुं शिक्षिताः बालाः अन्यस्यामवस्थायां आर्जवयुक्ता नासन्। कार्यालयागमने समयपरिपालनं (Punctuality) कुर्वन्तोऽपि केचनान्यत्र समयपरिपालनं न कुर्वन्ति। स्कौट्-बालाः स्कौट्-कार्यकाले सेवायां रक्ता अपि अन्यस्मिन् समये सेवाविरक्ताः दृश्यन्ते स्म। तार्ण्डैक्महोदयस्य प्रयोगोऽपि प्रशिक्षणान्तरणसिद्धान्तं नाद्रियते। प्रथमं केषांचित् बालानां बुद्धिपरीक्षणं कृत्वा, समबुद्धीन् तान् वर्गद्वयात्मना विभज्य, बुद्धिशक्तिवर्धकत्वेन प्रथितान् विषयान् प्रथमवर्गबालान्, तदितरान् विषयानन्यवर्गबालांश्चाध्यापयामास कञ्चित्कालम्। ततः उभयवर्गबालकानां बुद्धेः मापनं कृतवान्। तत्त्वतः प्रथमवर्गबालानां बुद्धिशक्त्या अधिकया भाव्यम् यतस्ते तादृशान् विषयानधीतवन्तः। वस्तुतस्तूभयवर्गबालकानां बुद्धिशक्तिः समानैवासीत्। ततश्च अधीयमानविषयमाश्रित्य प्रवर्तितः अयं प्रशिक्षणान्तरणसिद्धान्तः न तथाभूत इति निरूपितो बभूव। जीवनोपयुक्तानामेव विषयाणां पाठ्यचर्यायां यदि प्रवेशो भवति तर्हि जीवनेऽनुपयुक्तानां लातिन्प्रभृतीनां पाठ्यचर्यातो निष्कासनं भवेदिति भिया तेषां विषयाणां अत्यन्तपरित्यागो मा

भूदिति मत्या च प्रशिक्षणान्तरणसिद्धान्तः कैश्चित् स्वार्थपरैः द्रढीक्रियते इति केचित्।

प्रशिक्षणान्तरणसिद्धान्तः अत्यन्तमसाधुरिति वक्तुं न शक्यते। इदमन्तरणं सर्वत्र कर्तुं शक्यमिति तु नोच्यते। अनुभवादपि इदं ज्ञायते। अधीयमानयोः द्वयोर्विषययोः यदि अंशाः समाना भवन्ति, प्रणाली च समाना, तर्हि एकस्मिन् विषये लब्धं कौशलमन्यत्रोपयोक्तुं शक्यते। जन्तुशास्त्राध्ययने लब्धं कौशलं वनस्पतिशास्त्राध्ययने उपयुज्यते, यतः अनयोः शास्त्रयोः अध्येयांशाः समाना भवन्ति। गणितशास्त्राध्येतुः भौतिकशास्त्राध्ययनं ललितं स्यात्। एवं भौतिकशास्त्राध्येतुः रसायनशास्त्राध्ययनं सुकरं भवेद्यतस्त्वत्र प्रणाली समाना। टैप्करणसमर्थः हार्मोनियं वादयितुं योगयन्त्रं (Comptometer) चालयितुं च शीघ्रं जानीयात्। कन्नडलिपिज्ञः आन्ध्रलिपिं ज्ञातुम्, केरलभाषाभिज्ञः तमिलभाषां द्रुतं भाषितुं च शक्नोति। प्रशिक्षणान्तरणे प्रकृष्टं फलं प्राप्तुं विषययोः सम्बन्धः असकृदुपाध्यायैः निरूपणीयः। विद्यार्थिनोऽपि तादृशसम्बन्धगवेषणाय प्रेरणीयाः। अस्यान्तरणस्य भावान्तरणम् (Positive transfer) इति नाम। शिक्षणं बालस्य सामान्यशक्तिं विशेषशक्तिं च वर्धयति। सामान्यशक्तेरन्तरणं तु साध्यम्, न तु विशेषशक्तेः। क्वचिद्विषये प्राप्तं प्रशिक्षणं अन्यविषयज्ञाने प्रतिबन्धमाचरेत्। करेण कन्दुकक्रीडां कुर्वतां पादेन कन्दुकक्रीडनं न सुकरम्। मातृभाषाज्ञानं प्रवयसि आंग्लेयीपठने नोपकुर्यात्। एतादृशान्तरणस्य निषेधात्मकमन्तरणम् (Negative transfer) इति नाम।

अत्रोपाध्यायैः कर्तव्यानीमानि भवन्ति। अधीयमानानां विषयाणां परस्परं सम्बन्धज्ञानोत्पादनपूर्वकमध्यापनं कार्यम्। संस्कृतव्याकरणस्य भाषाव्याकरणस्य च सम्बन्धः निरूप्यते चेत् तर्हि व्याकरणाध्ययनं सुलभं स्यात्। इदं संबन्धज्ञानं यथा स्थिरं स्यात्तथा अध्यापनं कार्यम्। प्रशिक्षणान्तरणायापि प्रशिक्षणं देयम्। अलङ्कारवृत्तादीनां लक्षणं जानन्तोऽपि केचन बालाः अतिदेशं कर्तुमप्यसमर्था वर्तन्ते। रामशब्दसाजात्यात् कृष्णशब्दरूपाणि एकस्यामपि

विभक्तौ वक्तुं न जानन्ति केचन। उपाध्याये स्थिता गौरवबुद्धिः तदध्यापिते विषयेऽपि तादृशीं बुद्धिं जनयेत्। इदमपि प्रशिक्षणान्तरणे उपयुज्यते। ततश्च विद्यार्थि-उपाध्यायसम्बन्धः समीचीनः संपादनीयः। अत एवोच्यते 'मा विद्विषावहै' इति। उन्नतलक्ष्यप्रदर्शनमपि प्रशिक्षणान्तरणे उपकुर्यात्। "क्रियमाणं सर्वं सम्यक् कर्तव्यम्[1]" इति इदं उन्नतं लक्ष्यं पुरस्कृत्य यदि कार्यं क्रियते, कृते कस्मिन्नपि कार्ये कौशलं च यदि प्राप्यते तर्हि तत् कौशलं सर्वत्र कार्येषु प्रसरेदेव।

## प्रधानतमाः शिक्षणहेतवः

शिक्षणे उपस्कारकाः के इति केचन पूर्वं निर्दिष्टाः; परं तेभ्योऽपि प्रधानतमानि कानिचन कारणानि वर्तन्ते यानि शिक्षणे अतितरां साहाय्यमाचरन्ति। एतेषां कारणानामभावे शिक्षणरूपं कार्यमेव न जायेत। प्रत्यक्षं, अवधानं, अभिरुचिरिति एषां कारणानां स्वरूपमिदानीं विचार्यते।

## प्रत्यक्षम्

किं नाम प्रत्यक्षम्? नैयायिकानां प्रत्यक्षलक्षणं तु विदितमेव। मनोविज्ञानिनस्तु प्रत्यक्षं एवं निरूपयन्ति। 'यदा यदा विषयः स्वस्वेन्द्रियमभि सन्निधत्ते तदा तदा तत्तदिन्द्रियगोचरविषयं प्रति (मनसः) यज्जाग्रत्त्वं वर्तते तदेव प्रत्यक्षम्' इति। इन्द्रियाणि च आत्मनो वातायनानीत्युच्यन्ते। इन्द्रियैरेव पदार्थज्ञानं जायते। मनसो व्यापारे चिन्तनं प्रधानम्। प्रत्यक्षं विना, चिन्तनं न भवतीति प्रत्यक्षस्य प्राधान्यं ज्ञायते। बालानां शिक्षणे प्रथमोपायः प्रत्यक्षमेव। अनुकरणमपि प्रत्यक्षं विना नैव कर्तुं शक्यम्। प्रत्यक्षं विना कल्पनाशक्तिरपि नोदियात्।

विषयैरिन्द्रियसन्निकर्षे प्राप्ते यत् संविद्यते तत् प्रत्यक्षमिति ज्ञातम्। प्रत्यक्षे अंशद्वयं वर्तते। प्रथमांशस्य संवेदनमिति (Sensation) नाम। अत्र

---

1. '**औवै**' इति प्रथितायाः तमिळ्भाषाविदुष्याः उपदेशः संस्कृते अनूदितः।

स्थूलं विभावनं भवति। दूरादागच्छन् कश्चन शब्दः श्रूयते। सः व्योमयानस्य मोटार्-शकटस्य वा शब्दः स्यादिति यत् भानं प्रथमं तदेव संवेदनशब्दवाच्यम्। पश्चात्तु निश्चिततया जायमानं ज्ञानं प्रत्यक्षं भवति। नैतावता मन्तव्यम् यत् प्रथमं प्रकारज्ञानं जायते, तदनन्तरं प्रकारिज्ञानमिति। कमलदर्शने रूपगन्धादीनां क्रमेण प्रथमम् प्रतीतिः, तदनन्तरं एषां संकलनेन कमलप्रतीतिरिति। इमां प्रक्रियां नाङ्गीकुर्वन्ति मनोविज्ञानिनः। किन्तु जायमानं प्रत्यक्षं अवयविप्रत्यक्षमेव अथवा सविकल्पकं प्रत्यक्षमेवेति मन्यन्ते। अस्मिन् अवयविप्रत्यक्षे कालस्य देशस्य च प्रत्यक्षं जायत एव। तर्हि संवेदनं प्रथमं ततः प्रत्यक्षमिति कथम्? उच्यते—इन्द्रियार्थसन्निकर्षेण किमपि संवेदनं मस्तिष्के जायते। तच्च संवेदनं, पूर्वानुभवोपस्कृतेन मनसा एव वस्त्वात्मना निरूप्यते। गृहप्रत्यक्षेभित्तिकवाटादीनां संवेदनं जायते। गृहमिति ज्ञानं तु मनसोत्पाद्यते। एवमश्वपिण्डदर्शने प्रथमं केवलपिण्डसंवेदनं भवति। मनस्तु व्याख्याति, "अयमश्वः, न तु गौः" इति। "चक्षुः अवयवान् पश्यति। मनस्तु संघटमानं अवयविनं कृत्स्नम्"[1] इति कोऽप्याह। केषुचित् गूढचित्रेषु रूपद्वयं विलोक्यते। दृश्यमानं चित्रं तु एकमेव। प्रत्यक्षं तु विभिन्नवस्तुद्वयविषयकं भवति विभिन्ने क्षणे। अत्र किं निदानमिति चेत् प्राप्तेन्द्रियसन्निकर्षं चित्रं एकमेव (कर्म)



20. **परिवर्तनशीलं चतुरश्रम्**
**कति चतुरश्राणि वर्तन्ते इति गणना क्रियताम्। पुनरपि क्रियताम्। संख्या विभिन्ना स्यात्।**

---

1. "The eye sees a mosaic, the brain a continuous picture." Quoted by Guilford, p. 241.

मनः (कर्तृ मस्तिष्कं) द्वेधा व्याख्याति[1]। ततश्च बाह्यं आभ्यन्तरमिति कारणद्वयं पदार्थज्ञानं जनयति। बाह्यकारणेन संवेदनं भवति, आभ्यन्तरेण लब्धस्य संवेदनस्य व्याख्या क्रियते। संवेदनं पृथक् कृत्वा ज्ञातुं न शक्यम्[2]। अत एव अवयविमनोविज्ञानिनः प्रत्यक्षं परिशीलयन्तः कांश्चन नूतनानंशानुक्तवन्तः।

सर्वत्र प्रत्यक्षे, प्रधानं वस्तु, तत्परिवेषश्च (Figure and Ground) दृश्येते। वस्तु सुविशदं दृश्येत; परिवेषस्तु सामान्यतया। अनयोः सम्बन्धश्चात्र ज्ञायते। अवयवेभ्योऽतिरिक्तः अवयवी। ततश्च अवयवधर्मेभ्यः अतिरिक्तः अवयविधर्मः। [अस्मच्छास्त्रकारेषु नैयायिकाः अवयवातिरिक्तं अवयविनं वाञ्छन्ति। तन्तुभ्यः भिन्नः पटः अवयवी। 'यदि पटः तद्धर्मश्च अतिरिक्तौ नाङ्गीक्रियेते तर्हि तन्तव एव धार्यन्ताम्, न तु पटः' इति आपादयन्ति]। दर्शनकाले अवयविन्येवास्माकं दृष्टिः पतति। न तु अवयवेषु



**21. अपूर्णरेखं चित्रम्। अपूर्णापि रेखा पूर्णतया गृह्यतेऽत्र।**

पृथक्। पदेषु वर्तन्यशुद्धिर्नास्माभिर्विलोक्यते यतः पठने वयं पदं कृत्स्नं पश्यामः, न तु पदघटितमक्षरं पृथक् पृथक्। यत्र कस्यापि वस्तुनो रूपं रेखया प्रदर्श्यमानं

---

1. 'The stimulus pattern itself has not changed one iota. You are simply reorganising the same pattern of stimulation into another mental configuration: gestalt' *Ibid.*

2. "A pure sensation is only a theoretical abstraction." Boaz, P. 225.

अपूर्णं ( Incomplete ) तत्र तत् अपि पूर्णं कृत्वा द्रष्टुं स्वभावो वर्तते प्रत्यक्षस्य। यादृशं द्रष्टुमिष्यते तादृशं वस्तु विलोक्यते न तु यादृशं तत्त्वतो वर्तते ।

अन्ये केचन प्रत्यक्षधर्माः परैः उक्ता वर्तन्ते । जातं संवेदनं मस्तिष्केण प्रत्यक्षात्मना आरच्यते इति पूर्वमुक्तम् । तत्र कानिचन साहाय्यकारीणि वर्तन्ते ।

1. सामीप्यम्—( Proximity ) चित्रे दत्तानां रेखाणां द्वन्द्वरूपेण दर्शने रेखयोः समीप्यं कारणम् । प्रयत्नं कृत्वापि अत्र एकस्मात् द्वन्द्वात् एकां रेखां अपरस्मादपरां च संयोज्य दर्शनं न सुशकम् ।




22. **युगलरेखाचित्रम्।**



23. **एकवर्गीयबिन्दुचित्रम्।**

2. सादृश्यम् ( Similarities ):—प्रथमचित्रे वामभागे स्थिताः बिन्दवः एकवर्गीयत्वेन विलोक्यन्ते । द्वितीयचित्रे तिर्यक् स्थिताः बिन्दवः एकवर्गीयत्वेन दृश्यन्ते । अत्र निदानं बिन्दूनां साजात्यम् ।

3. अनुस्यूतिः (Continuity):—एकस्यां पङ्क्तौ वर्तमानाः ताराः अथवा वृक्षाः एकेन प्रत्यक्षेण गृहीता भवन्ति। तत्र निदानम् पदार्थानां स्थितौ दृश्यमानं अनुस्यूतत्वम् ।

4. पूर्णत्वं सममितत्वं च (Completeness and Symmetry):—

पूर्णरूपेण सममितत्वेन च स्थितं वस्तु विलोक्यते। अत एव बालः आकाशे स्थितं पूर्णं चन्द्रं विलोकयेत् प्रथमम्। मेघं तु असममितरूपं पश्चात् पश्येत्।

शिशूनां प्रत्यक्षं दोषरहितं न स्यात्, यतस्तेषामिन्द्रियाणि जननसमये प्राप्तपूर्णशक्तीनि प्राप्तपूर्णविकासानि च न भवन्ति। अत एव विलियम् जेम्स्-महोदयः "शिशूनां प्रत्यक्षं स्थूलमव्यक्तं आकुलं च ( Blooming, buzzing confusion ) वर्तते यतस्ते संवेदनं प्रत्यक्षत्वेनारचयितुमशक्ताः" इत्याह।

अत एव केचित्, 'शिशूनां संवेदनमेव वर्तते। प्रवयसां तु (Adults) प्रत्यक्षात् केवलसंवेदनं विभज्य ज्ञातुमशक्यमि'ति च कथयन्ति। अयं सिद्धान्तः अवयविवादिमनोविज्ञानिभिः नाङ्गीक्रियते। शिशवोऽपि 'इदं मातृमुखमि'ति, मातृमुखं भित्त्यादिभ्यः पृथक्कृत्य जानन्त्येव। अत्र कोष्ठभित्त्यादयः परिवेषतां (Background) भजन्ते। मातृमुखं च प्रत्यक्षं वस्तु (Figure) भवति। ततः परिवेषवस्तुरचनात्मकं प्रत्यक्षं शिशूनामपि वर्तते इत्यभिप्रयन्ति।

अस्मच्छास्त्रकाराः ज्ञानेन्द्रियाणि रूपरसगन्धस्पर्शशब्दग्राहकाणि चक्षू-रसनाघ्राणत्वक्श्रोत्राख्यानि पञ्च वर्तन्त इति प्रतियन्ति। आधुनिका मनो-विज्ञानिनः दशेन्द्रियाणि गणयन्ति। इन्द्रियाणां नामानि तद्विषयाश्च अधो दीयन्ते।

| इन्द्रियम् | विषयः |
|---|---|
| 1. चक्षुः | रूपम्, प्रकाशश्च |
| 2. श्रोत्रम् | व्यक्तः शब्दः ; अव्यक्तध्वनिश्च |

---

| | |
|---|---|
| 1. Vision | Colour etc. |
| 2. Hearing | Sound etc. |

| | |
|---|---|
| 3. घ्राणम् | गन्धः |
| 4. रसना | रसाः |
| 5. त्वक् | स्पर्शः |
| 6. शीतेन्द्रियमुष्णेन्द्रियं च | शैत्यमौष्ण्यं च |
| 7. व्यथेन्द्रियम् | व्यथाः |
| 8. पेशीन्द्रियम् | आकुञ्चनप्रसारणचलनपरिस्पन्दादयः |
| 9. अन्तरवयवीयमिन्द्रियम् | क्षुत्पिपासादयः |
| 10. अवस्थानेन्द्रियम् | अवस्थितिरनवस्थितिश्च |

प्राथमिकेन्द्रियपञ्चकमधिकृत्य ज्ञातमेव। षष्ठादारभ्य दशमपर्यन्तानामिन्द्रियाणां विषयमधिकृत्य किञ्चिद् वक्तव्यम्।

6. शीतोष्णेन्द्रियम्—बहूनां तन्त्रिकाणां अग्रभागाः त्वचोऽधोभागे वर्तन्ते। ते एव शैत्यमौष्ण्यं च जानन्ति। शैत्यमौष्ण्यं च ज्ञातुं तन्त्रिकाभागाः पृथक् वर्तन्ते; ये तन्त्रिकाभागाः औष्ण्यं गृह्णन्ति ते शैत्यप्रत्यक्षं न जनयन्ति। ये शैत्यं ज्ञापयन्ति ते औष्ण्यं न निवेदयन्ति इति शरीरतन्त्रनिष्णाताः कथयन्ति। रोमकूपभागे स्थिताः तन्त्रिकाः निष्पीडनं (Pressure) गृह्णन्ति।

7. व्यथेन्द्रियम् - संग्राहकतन्त्रिकाः कृत्स्ने शरीरे सर्वतो वर्तन्ते। अत एव व्यथा सर्वत्र विभाविता भवति। क्वचिदवयवेषु व्यथा बलवता प्रेरकेणो-

---

| | |
|---|---|
| 3. Smell | Smell |
| 4. Taste | Tastes |
| 4. Touch | Pressing etc. |
| 6. Warmth and cold | Temperature |
| 7. Pain | Pain |
| 8. Kinaesthetic | Muscle contractions, etc. |
| 9. Internal organs | Hunger, etc. |
| 10. Static (in semicircular canals in the ear) | Movements of the head |

त्पाद्यते । अन्तःस्थितानामवयवानां व्यथाग्रहणशक्तिरीषन्न्यूनेति मन्यन्ते विज्ञानिनः ।

8. पेशीन्द्रियम् - चलनकारिषु पेश्यादिषु अवयवेषु वर्तन्ते काश्चन तन्त्रिकाः । ता एव तन्त्रिकाः चलनस्पन्दादीनां प्रत्यक्षं जनयन्ति । यस्मादेताः पेशीभिः संबद्धाः तस्मादासां पेशीन्द्रियमिति निर्देशः । अत एव अन्धाः निमीलिताक्षाश्चात्मनः करचरणादिचालनं जानन्ति ।

9. अन्तरवयवीयमिन्द्रियम्—क्षुत्-पिपासा-वमन-कामादीनां ज्ञानमान्तरैरवयवैरुत्पाद्यते । अन्तरवयवेषु स्थिताः तन्त्रिका एव एतद्विषयकं प्रत्यक्षं जनयन्ति । क्षुधया जायमानं यत्संवेदनं तदेवात्र (Sensation) प्रत्यक्षत्वेन परिगण्यते । बुभुक्षावृत्तितः अस्य विभज्य ज्ञानाय 'क्षुद्बाधाविभावनमि' ति पदमत्रोपयोक्तुं युक्तम् ।

10. अवस्थानेन्द्रियम्—धावनोत्पतनगमनशयनादिकालेषु अस्माकं शरीरमसकृदस्माभिरविदितमेव समावस्थां पुनरानीयते । समावस्थाभावस्य ज्ञानं तु कर्णान्तःस्थिते शंखे अर्धचन्द्राकारवलयत्रये वर्तमानाः संग्राहकतन्त्रिकाः जनयन्ति । इदं वलयत्रयं च शिरसः ऊर्ध्वस्थितिं तिर्यक्स्थितिं च ज्ञातुं प्रभवति । शिरसः चालनं वलयत्रये स्थिते द्रवद्रव्ये कमपि विकारं जनयति । ततश्च तद्गततन्त्रिकाभिः अवस्थितिवैषम्यज्ञानं जायते ।

## भ्रमः निर्मूलभ्रमश्च

समीचीनप्रत्यक्षेणैव ज्ञानं सम्यग् जायते । तत्र च परमं निदानं संवेदनस्य विशिष्यावगमाय यत् व्याख्यानं क्रियते तदपि यदि समीचीनं भवति तर्ह्येव ज्ञानमपि यथार्थं स्यात् । यदि सम्यक् व्याख्यातं (interpreted) न भवति तदा भ्रमः (अयथार्थज्ञानं) जायते । अप्रकाशे दृश्यमानायाः रज्जोः संवेदनं वर्तते । परं व्याख्यानं तु सर्पबुद्धिमुत्पादयतीति इदं भ्रमोदाहरणम् । सामान्यमनोविज्ञानशास्त्रे केचन दर्शनभ्रमाः (Optical Illusions) उदाहृता वर्तन्ते ।

प्रसिद्धमुदाहरणद्वयं दातुं शक्यम् । अस्य च नाम मुल्लर्-लैयेर्-भ्रमः (Muller-Lyer Illusion) इति । प्रथमोदाहरणे समानदैर्घ्ये रेखाद्वयं दीयते । एकस्या रेखायाः अग्रभागाभ्यां बहिर्निर्गच्छन्त्यौ द्वे रेखे शाखारूपेण दीयेते । अपरस्या रेखाया अग्रभागाभ्यां द्वे द्वे रेखे शाखारूपेण परं प्रतिनिवृत्ते

क ख



24. 25, मुल्लर-लैयर-भ्रमः ।

दीयेते । वस्तुतः उभे अपि मूलरेखे समाने । अथापीदानीं प्रथमरेखा दीर्घतरा द्वितीयरेखा च ह्रस्वा विलोक्येत । कन्यका अपि अक्ष्णोरञ्जनार्पणानन्तरं अक्ष्णोः दीर्घत्वप्रतीत्युत्पादनार्थं अपाङ्गात् ईषत् दीर्घां रेखां कर्णाभिमुखं अर्पयन्ति । ततः दीर्घाक्षत्वभ्रमं जनयन्ति । एवं समानदीर्घं रेखाद्वयं 'ख' चित्रे दीयते । तत्र तिष्ठन्ती रेखा दीर्घा भायात्; शयाना तु ह्रस्वा । यथा दर्शने भ्रमः एवं गन्धादिष्वपि भ्रमो वर्तते । अत्र सर्वत्र किमपि वस्तु आश्रित्यैव भ्रमो जातः । कदाचित् किमपि अधिष्ठानं अनाश्रित्यापि भ्रमो भवति । तस्य निरधिष्ठानभ्रमः अथवा निर्मूलभ्रमः ( Hallucination ) इति नाम । अनेन गन्धर्वनगरपिशाचादीनां वस्तुतोऽसतां दर्शनं जायते । अत्र बाह्यप्रेरकं किमपि न भवति । भीति-संवेग-पीडात्यासक्त्यादयः कारणानि भवन्ति । मधुमत्ताश्च विचित्रमृगान् पुरतो धावतः पश्यन्ति । भ्रमे किमपि वस्तु सत् एव अन्यथा भासते । निर्मूलभ्रमे तु असतः (अविद्यमानादेव) कस्यापि भानमिति भ्रमस्य निर्मूलभ्रमस्य च भेदोऽवगन्तव्यः ।

अतीन्द्रियप्रत्यक्षमपि वर्तते इति केचनाङ्गीकुर्वन्ति । मनोविज्ञानिनः भ्रमे कानिचन कारणानि निर्दिशन्ति ।



26. 27. हेरिङ्ग्-भ्रमः (Hering illusion)
चित्रद्वयेऽपितिर्यगायताः रेखाः ऋज्व्यः ; न तु अवनताः ।

1. परिवेषः——परिवेषवशात् कदाचित् दूरस्थः पर्वतः सन्निकृष्ट इव भायात् । स्थालीजले निक्षिप्ता शलाका जलस्यान्तः वक्रेव भाति ।

2. इन्द्रियदोषः—चक्षुर्दोषेण वस्तूनां आकारः वर्णश्च अन्यथा भायात् ।

3. प्रतीक्षा (Anticipation)-कस्मिन्नपि गृहे पिशाचसत्तां श्रुत्वा यत्किमपि तत्र दृष्टं पिशाचं मन्यते बालिशः।

4. पूर्वानुभवः-केवलमहिषज्ञानवान् नरः इदंप्रथमतया दृष्टं गजपोतमपि महिषं शङ्कते।

बालानां संवेदनं प्रत्यक्षं च कदाचित् समीचीनं न स्यात्। विशदं न वर्तेत। प्रवयसामिव सर्वांशग्राहि च न भवेत्। वस्तुतः प्रधानधर्मोऽपि न गृह्येत। प्रत्ययोत्पादनेनापि संवेदनमन्यथा भवति। बालानां अभिरुचिं संवेगं चानुसृत्य संवेदनं जायेत। संवेदनं पूर्णं यथार्थं च यथा स्यात्तथा उपाध्यायैः चित्रप्रदर्शनादिना कर्तव्यम्। बालाः कदाचित् संवेद्यमानं कल्पितेन भावेन अथवा पूर्वदृष्टेन अन्येन केनापि भावेन संयोज्य कथयेयुः। लेखिनीं श्वा अपहरति स्मेति इदं बालवचनं अत्र उदाहरणम्। लेखिनी इदानीं न दृश्यते; श्वा च पूर्वं अन्यत् अपहरति स्म। इदानीमुभयं संयोज्योच्यते। अत्रानृतं बालेनोक्तमिति मत्वा केचन दण्डयन्ति। संवेद्यमानस्य (कल्पितस्य), पूर्वं गृहीतस्य च भेदाग्रहणमेव एवं कथने कारणम्। नानृतकथने रुचिः। संवेदनं चात्मानुभवानुगुणमेव व्याख्यायत इति पूर्वमुक्तम्। अनुभवे न्यूने संवेदनजन्यं ज्ञानमपि न्यूनमेव स्यात्। एकेनेन्द्रियेण संवेदनोत्पादनावेक्षया अनेकेन्द्रियैः संवेदनोत्पादनं वरम्। उपाध्यायस्य वाणीं सर्वदा शृण्वन्तः बालाः श्रान्ता भवन्ति। ततश्च कृष्णफलके उपाध्यायैः विद्यार्थिभिश्च पर्यायेण लेखनं यदि भवेत् तदा श्रवणचक्षुरादिभिः कर्मेन्द्रियैश्च संवेदनं भवत् दृढं ज्ञानमुत्पादयेत्।

इन्द्रियाणां प्रशिक्षणेनैव संवेदनं सम्यक् प्राप्तुं शक्यम्। ततश्चेन्द्रियाणां (Sense-training) देयम्। श्रवणेन्द्रियपाटवरहिताः श्रुतमप्यश्रुतं कथयेयुः। एवं चक्षुर्दोषवन्तः दृष्टमप्यदृष्टम्। इन्द्रियप्रशिक्षणमित्यनेनेदमभिप्रेयते यत् इन्द्रियैः प्राप्तं संवेदनं सम्यगवगत्य ततो जायमानप्रत्यक्षज्ञानलाभाय मनसः शिक्षणमेव इन्द्रियप्रशिक्षणमिति। न तु चक्षुरादीनां कार्यस्याभ्यासेन शक्त्युत्पादनम्। असकृत् गीतश्रवणेन श्रवणेन्द्रियस्य पाटवं न जायते। किन्तु

मनस्तु तादृश-श्रवणेन गीतगुणदोषज्ञाने शक्तं भवति। अत एवोक्तं केनापि– "इन्द्रियेण प्राप्तानि (संवेदनानि) विभक्तुं व्याख्यातुं च यन्मनसः प्रशिक्षणं दीयते तदेव इन्द्रियप्रशिक्षणमिति। कस्यापि इन्द्रियस्य केवलं शिक्षणं इदं न भवति। इन्द्रियस्य शिक्षणेनापि मनसः प्रशिक्षणमेव लक्ष्यं भवती"ति। पूर्वकालीनाः आधुनिकाश्च शिक्षासिद्धान्तकुशलाः अस्य प्रभावं ज्ञातवन्त एव। परं **माण्टिस्सोरि** - महोदयैवात्रोपायमथवा शोभनां प्रणालीं दृष्टवती। तस्याः उपदेशोपकरणानां (Didactic apparatuses) मुख्यमुद्देश्यमिन्द्रियप्रशिक्षणमेव। विभिन्नवर्णाः तन्तवः वर्णज्ञानाय, काष्ठखण्डानि भार-उच्छ्राय-स्थौल्य-परिमाण-आकारज्ञानाय चोपयुज्यन्ते। केचन माण्टिस्सोरिप्रणालीं नाभिनन्दन्ति। इयं प्रणाली बालस्य संवेदनलाभे विवेचने व्याख्याने च शक्तिं दद्यात्। न तु ज्ञातव्यानां वस्तुगुणानामवगमने इन्द्रियशक्तिम्। एवं लब्धं वर्णादीनां विवेचनं परमोद्देश्यं भवितुं नार्हति। बालाः अचिरादेव श्रान्ता भवन्तीत्यभिप्रयन्ति।

बालानां ज्ञानं सर्वं प्रत्यक्षमाश्रित्य वर्तते। काव्यरसास्वादप्रकृतिसौन्दर्यानुभवादिकमपि संवेदनानुगुणमेव स्यात्।

पाठशालासु कथमिदं कर्तुं शक्यमिति विचार्यते। 'मूर्तादमूर्तं प्रति' इति यो नियमः शिक्षायां विहितः स सर्वथानुसर्तव्यः। बहुभ्यः श्रोतव्यम्, बहुधा श्रोतव्यमिति श्रवणप्रभावो वर्ण्यतेऽस्मदीयैः। एवं बहुभिरिन्द्रियैः, ज्ञानोत्पादनं कार्यम्। बालानां इन्द्रियाणि च दोषरहितानि किमिति प्रतिवर्षं भिषग्भिः परीक्षा कार्या। दोषापनयनाय पितृभिरुपाध्यायैश्च प्रयतितव्यम्। मन्दश्रवणदर्शना बालाः पुरोभागे उपवेशनीयाः। यथा बालेन्द्रियाणामुपहतिः न भवति तथा समुचितवातप्रकाशासनादिसौविध्यं च संपादनीयम्। नगरबालापेक्षया ग्रामबालाः क्षुप-सस्य-वृक्ष-नदी-पक्ष्यादिविषये अधिकज्ञानवन्तो दृश्यन्ते, यतस्तादृशवस्तूनां दर्शने अवगतौ च तेषां मनः प्रशिक्षितं वर्तते। प्रत्यक्षं स्वतः पुरुषार्थो न भवति। तेनापि प्राप्तव्यं ज्ञानं वर्तत इति, ज्ञानं प्रधानं मत्वा तदनुगुणोपायः स्वीकर्तव्यः।

## सम्यगवेक्षणम् ( Observation )

कृतं चेन्द्रियप्रशिक्षणं विद्यार्थिषु सम्यगवेक्षणबुद्धिं वर्धयेत्। नियमानुसारि किमपि प्रत्यक्षीकरणमेव अवेक्षणपदवाच्यं[1] भवति। अत्र च किमपि उद्देश्यं वर्तते। निरुद्देश्यकं अवेक्षणं केवलं दर्शनमेव स्यात्। रथ्यायां गच्छन् कश्चित् वानरं नरं रासभं आपणं च पश्येत्। एतेषां दर्शने तस्य किमपि प्रयोजनं न वर्तेत। स एव यदि किमपि वस्तु क्रेतुमिच्छन् आपणमापणं पश्यति तर्हि तस्य तत्रावेक्षणं वर्तते। "अवेक्षणं नाम नियन्त्रितं सोद्देश्यकं दर्शनम्" इति कश्चित् कथयति। अवेक्षणं चिन्तनस्य भावस्य च पूर्वसत्तां सूचयति। अवेक्षणात् पूर्वमेव मनसि कोऽपि भावः, किमपि चिन्तनं च स्यादेव। अवेक्षणकाले वस्तुनः सर्वेऽप्यंशा नावेक्ष्यन्ते। तत्रापि आवेक्ष्यविषयेऽवधानं सारतमस्य ग्रहणं, असाधारणधर्मस्य ज्ञानमित्यादीनि अवेक्षणेन लभ्यन्ते। वानरः आयातीति वदतो बालात् छिन्नवालो वानरः आयातीति अभिदधानो बालः अवेक्षणवान् भवति। प्रथमबालस्य केवलवानरदर्शनमेवासीत्। द्वितीयस्य तु वानरगतविशिष्टांशस्यापि दर्शनमिति विशेषः। अभिमतबन्धुजनादागतस्य पत्रस्य पुनः पुनः पठनमपि अवेक्षणकार्यमेव। केवलेन्द्रियकवाटोद्घाटनं नावेक्षणं भवति।

उपाध्यायैः अवेक्षणप्रशिक्षणमपि विद्यार्थिभ्यो देयम्। बाह्यप्रपञ्चज्ञानं, इतरजनैः सह सामञ्जस्यसंपादनं चैतन्मूलमेव। बाल्ये सम्यगवेक्षणाय प्रशिक्षिताः पश्चात् गभीरशास्त्राध्ययन-तदर्थानुसन्धानादिषु शक्तिं प्राप्नुयुः। अवेक्षणेन पूर्णफलप्राप्तौ त्रीणि कारणानि वर्तन्ते।

1. पूर्वपरिचयः—अत्र इन्द्रियपाटवं केवलं न पर्याप्तम्। यद्वस्तु अवेक्षितुमिष्यते तद्यदि पूर्वमेवेषत् परिचितं भवति तदा तत्रावेक्षणं सम्यग् स्यात्। ततश्चावेक्ष्यवस्तूनां पूर्वपरिचयो बालानां देयः। केचन बालाः मोटार्शकटस्याकृतिदर्शनेनैव तन्निर्मातृसमवायस्य नाम निर्देष्टुं शक्नुवन्ति। तत्र निदानमसकृत् परिचय एव।

---

1. Observation is a regulated perception.

2. वस्तुविषयकं पूर्णं ज्ञानम् । प्रतिदिनं मोटार्शकटं उपयुञ्जाना अपि केचित् सहसा तत्रोद्भूतं दोषं ज्ञातुं न प्रभवन्ति । यान्त्रिकस्तु दोषं झटिति अवेक्षितुं अवगन्तुं च शक्नोति । अत्र निदानं विशिष्टं ज्ञानमेव ।

3. अभिरुचिः अवधानं च । इमे अपि अवेक्षणे साहाय्यमाचरतः । यत्राभिरुचिः तत्रावधानं अवेक्षणं च स्वतो भवतः । अवेक्षणाभ्यासश्च उल्लास-प्रयाण-केदारगमन-उद्यानोपगम-जन्तुनिलयदर्शन - प्राचीनवस्तुसंग्रहालयगमनादिभिः कर्तुं शक्यते । गमनात्पूर्वमेव द्रष्टव्यान्यधिकृत्य कथनमावश्यकम् । अवेक्षणकाले च मुख्याः अंशाः दृष्टाः बालैः सञ्चिकायां लेखनीयाः । प्रत्यागमनानन्तरं अवेक्षितांशानां पर्यवेक्षणं पर्यालोचनं चोपाध्यायैः कार्यम् । स्थावरशास्त्राध्येतारः एवमेवासकृत् कुर्वन्ति । एतादृशाध्ययनस्य अवेक्षणपाठः (Observation lesson) इत्यपि नाम । कार्यकरणमपि अवेक्षणशक्तिं वर्धयति ।

केचन बालाः वृथा सर्वमेवेक्षेरन् । प्रयोजनाभावात् तादृशावेक्षणे उत्साहो न वर्धनीयः । **तिरुपतिस्थश्रीवेङ्कटेश्वरविश्वविद्यालयाधिकारिणः 'ज्ञानंसम्यगवेक्षणम्'** इति योगवासिष्ठरामायणवाक्यं स्वविश्वविद्यालये अध्येतॄणां विद्यार्थिनां आदर्शवाक्यत्वेन यदकल्पयन् तदपि ज्ञाने सम्यगवेक्षणस्य वर्तमानं प्रभावं सूचयत्येव ।

## अभिबोधपुञ्जः[1]

अप्पेर्सेप्षन् (Apperception) इति आंग्लेयी पदस्य मनसा संपाद्यमानं स्पष्टं प्रत्यक्षमित्येकोऽर्थः । Ad - इति लातिनभाषोपसर्गेण Perception इति पदेन च निष्पन्नमिदं पदम् ; पश्चात् शिक्षाशास्त्रानुगुणमस्य पदस्यान्योऽप्यर्थः अङ्गीकृतः । पूर्वज्ञानेन सह जायमानज्ञानस्य संयोजनं यन्मनसा क्रियते तस्य मनःकार्यस्य वाचकमिदं पदमिदानीं जातम् ( Add to perception ) । इमां व्याख्यां हेर्बर्ट् ( Herbart - 1816 ) नामा शिक्षाभिज्ञः कृतवान् । पूर्वज्ञानराशेः अभिबोधपुञ्जः ( Apperceptive mass ) इति नाम । संप्रत्यक्षपुञ्ज इत्यपि केचन निर्दिशन्ति ।

---

1. Apperceptive mass.

भित्तिनिर्माता कश्चित् पूर्वनिचितायाः सिक्तजलाया इष्टकाया उपरि नूतनामिष्टकां निधाय सुधया बध्नाति। सुधायां जायमानः रसायनविकारः इष्टकाद्वयं दृढतरं संयोजयति। एवमेव ज्ञानभित्तिरपि निर्मीयते उपाध्याय-सुधाकारेण। अत्र पूर्वज्ञानं पूर्वेष्टका, नूतनज्ञानं चाधुना दीयमानं नूतनेष्टका। पूर्वज्ञानं नूतनज्ञानेन सह संयोज्य तयोः दृढतरबन्धनं वैशद्यं च मनसा आन्तर-प्रत्यक्षेण संपाद्यते; तादृशमनःकार्यं चोपाध्यायः संपादयति।

मानसप्रत्यक्षेण किं जायते? यज्जायते तच्च कीदृशं भवतीति चोच्यते। पूर्वज्ञानं वर्तमानज्ञाने संस्कारमादधाति। पूर्वज्ञानानुगुणमेव वर्तमानज्ञानस्य वैशद्यं भवति। पूर्वज्ञानस्य वैशाल्यं अगाधतां चाश्रित्य नूतनज्ञानखण्डानि साफल्यं प्राप्नुवन्ति। सर्वोऽपि जनः स्वस्वज्ञानानुगुणमेव वस्तु पश्यति; अवगच्छति च। "स्त्रीभिः कामः, अर्थिभिः स्वर्द्रुः, कालः शत्रुभिरैक्षि सः" इत्युल्लेखालङ्कारोदाह-रणमपि इदमभिव्यनक्ति। सर्वं ज्ञानं धारारूपेण परस्परं सम्बद्धं वर्तते; न तु निरनुबद्धम्। पूर्वज्ञानेन संयोजने कृते एव नूतनज्ञानस्य वैशद्यं बोद्धुरात्मप्रत्ययश्च जायते। यस्य अभिबोधपुञ्जोऽधिकः स एव नूतनं ज्ञानं सुखं विशदं चावगन्तुं समर्थः स्यात्। तस्यैव विद्यायामभिरुचिश्च जायेत। पूर्वज्ञाननूतनज्ञानयोर्मध्ये स्थितमन्तरमवधानमेव संकुचितं करोति।

पूर्वोत्तरज्ञानसंयोजनज्ञानं चोपाध्यायानामवश्यापेक्षितम्। सर्वोऽपि विषयः उपाध्यायदृष्ट्या सुलभो भायात्। परं विद्यार्थिनां स्थाने स्थित्वा यदि पश्येयुरुपा-ध्यायाः तदैव विद्यार्थिनां कष्टं जानीयुः। ततश्च विद्यार्थिनां पूर्वज्ञानं कियद्वर्तते, कीदृशं च वर्तते इति ज्ञात्वा तदनन्तरमेवोत्तरज्ञानं देयं भवति। हेर्बर्ट्-(Herbart)-महोदयेन निर्दिष्टायां पञ्चपर्वप्रणाल्यां भूमिकायाः (सज्जतासंपादनस्य-Preparation) प्राधान्यमेतत्कृतमेव। ज्ञातादज्ञातमिति योऽयं शिक्षानियमो वर्तते सोऽपि एतन्मूलक एव। एवं यदि न क्रियेत तर्हि नूतनानि ज्ञानखण्डानि पूर्वज्ञानासंसक्तानि, विस्मृतानि, कालक्रमेण नष्टानि च भवेयुः। तस्मात् बालानां पूर्वज्ञानं यथा विशालं स्यात् तथा साहाय्यमाचरितव्यमुपाध्यायैः। पूर्वज्ञानाभिवृद्धिं

च पुस्तकालय-छायाचित्रदर्शन-उल्लासयात्रादयः कुर्वन्ति। विपुलज्ञानवानाचार्यश्च अध्यापनकाले अध्याप्यविषयवैशद्याय, उपमाद्यलङ्कारान्, नीतिकथाः, सुभाषितानि, तदा तदा जातान् लोकवृत्तान्तांश्चोपयुज्य पूर्वज्ञानं वर्धयितुं शक्तः स्यात्। पूर्वज्ञानेन संयोजितस्य नूतनज्ञानस्य 'आत्मीयता' सम्पादनाय कियानपि अवकाशो देयः। सद्य एवान्यस्य कस्यापि विषयस्योपक्रमो न कर्तव्यः।

## अवधानम्-अभिरुचिश्च[1]

इदमुभयमधिकृत्य ज्ञानमुपाध्यायानामवश्यापेक्षितम्। शोधिते केदारे उप्तं बीजमेव प्ररोहति, फलं च ददाति। एवमेव छात्राणां मनसः परिष्कारः क्रियते शिक्षारूपबीजग्रहणाय, अवधानेन अभिरुच्या च। यद्यवधानं न भवति तर्हि उपाध्यायेन कृतं सर्वमध्यापनमूषरवर्षणमिव निरर्थकं स्यात्। अध्याप्ये विषये उपाध्यायः विशालं ज्ञानमधिगतवान् स्यात्। परं इदं केवलं न पर्याप्तम्; अध्याप्ये विषये यथा छात्राः अभिरुच्या सह अवधानं कुर्युः तथाध्यापनं कर्तुमपि समर्थो यदि भवेत् तर्ह्येव सः श्लाघ्यतमः आचार्यो भवेत्। कक्ष्यायामध्यापनकाले छात्राणामवधानस्य विघ्नोत्पादकाः हेतवो बहवो भवन्ति। तस्मात्, अवधानं नाम किम्? का नामाभिरुचिः? कथं उभे अपि विद्यार्थिषु भवेताम्? अवधान-नाशकाः के? तेषामपनयनं कथं कर्तव्यमित्येतेषां सर्वेषां ज्ञानमुपाध्यायस्याध्यापने बहूपकुर्यात्। न केवलमुपाध्यायानामन्येषामपि अवधानप्रभावज्ञानमावश्यकमेव। यः सावधानं कर्म करोति, स एव कर्तव्यमपि सम्यक् कर्तुं शक्नुयात्। मोटर्शकटविद्रावयिता यदि क्षणमप्यनवहितो भवति तर्हि शकटवर्तिनां बहूनां विपदं जनयेत्।

किं नामावधानम्? किं तस्य स्वरूपम्? कश्च तस्य स्वभावः? इति प्रश्ना उदियुः प्रथमम्। यद्यपि अवधानमस्माकं विदितमेव; परं लक्षयितुं दुर्घटं वर्तते।

---

1. Attention and interest.

अस्माकं जाग्रदवस्थायां (चैतन्यवत्यामवस्थायां-Conscious condition) बहूनि प्रेरकाणि अस्माकं मनः आकर्षन्ति; प्रेरकाणि सर्वाण्यपि समुच्चित्य यं मनोभागं गृह्णन्ति तस्य चैतन्यक्षेत्रम् ( Field of consciousness ) इति नाम। इदानीं लेखनकाले पत्रे लेखितव्यो विषयः, लेखिनी, उत्पीठिका अन्ये पर्यालोच्यमानाः ग्रन्था इति बहवः पदार्था लेखकस्य (मम) चैतन्यक्षेत्रे भासन्ते। किन्तु एतत् सर्वं समं भासते इति न मन्तव्यम्। एकस्मिन्नेव पदार्थे—पत्रे, लेखिन्यां, विषये वा चैतन्यं ( Consciousness ) सुदृढं लग्नं भवति। मध्ये यदि कोऽपि विघ्नः स्यात् तर्हि तत्र विघ्ने चैतन्यं गतं सत् सुलग्नं भवति।

एकस्मिन् विषये यत् चैतन्यं सुलग्नं भवति तस्य चैतन्यकेन्द्रं ( Focus of consciousness ) इति नाम। चैतन्यकेन्द्रमेवावधानशब्दवाच्यं भवति। अवधानं यदि सुदृढं एकस्मिन् बद्धं स्यात् तर्हि तस्य अवधानकेन्द्रमिति ( Focus of attention ) नाम; केन्द्रमिति पदोपयोगेन ज्ञायते अवधानस्य न केवलं केन्द्रभागो वर्तते, किन्तु केन्द्राद्बहिः परिधिरपि वर्तते इति। अवधानकाले कोऽपि विषयः केन्द्रे स्यात्। अन्ये परिधौ वर्तेरन्। कक्ष्यायां स्थितानामस्माकमवधानं अध्ययनकाले आसन्दी-वातायन-श्यामपट्टिका-विद्युद्व्य-जनादीन् अत्र वर्तमानानपि न गृह्णाति। अस्यामवस्थायां ते पदार्थाः असन्त इव भान्ति। यदा पुनः तानधिकृत्य चैतन्यं प्रवर्तेत तदा तेषु अवधानं भवति। तथा चाभिलषितवस्तुनः चैतन्यकेन्द्रं प्रति आनयनम्, अनपेक्षितानां चैतन्यपरिधिं प्रति प्रापणं चावधानकार्यं भवति। चैतन्यकेन्द्रस्य अभिलषितविषये प्रवर्तनमवधानमि-त्यायातम्। अत्र एवं निरूपणं कर्तुं शक्यम्। विषयः तावत् विपुलकेदारसदृशः। रात्रौ सर्वोऽपि केदारः नैव द्रष्टुं शक्यते। तत्रैव द्रष्टव्ये स्थले यदि वैद्युतकरप्रदीपेन (Torch light) प्रकाशः उत्पाद्यते तर्हि स भागः चक्षुर्गोचरो भवति। प्रकाश-हीने स्थलेऽवस्थिताः पदार्था असत्प्राया भवन्ति। प्रकाशमण्डलेऽपि यत्राधिकः प्रकाशः तत्र विशदं प्रत्यक्षं जायते। अन्यत्र तु तारतम्येन; एवमेव चैतन्य-केन्द्रे स्थितस्यावधानविषयत्वं अन्येषामवधानपरिधौ विद्यमानत्वं च भवति।

| अ | आ | इ |
|---|---|---|
| ई | उ | ऊ |
| ऋ | ॠ | ऌ |

सामान्यतो दर्शने अत्र अक्षरराशिः सर्वोऽपि अवधानविषयो भवति। यदि ऋ इत्येकस्मिन्नक्षरे अवधानं क्रियते तदा अन्यान्यक्षराणि अवधानात् विगलितानि भवन्ति। परिधिं प्राप्नुवन्ति। केन्द्रीयमवधानं आलङ्कारिकाः विगलितवेद्यान्तरं इत्यपि वर्णयन्ति। एवं विगलनं नैसर्गिकमेव। अवधाने यावन्तो विषयाः गोचरा भवन्ति ततोऽप्यधिकाः अगोचरा वर्तन्ते।




1. **अवधानकेन्द्रम्** 2. **अवधानपरिधिः**
3. **परिधेर्बहिर्भागः (अवचेतनं मनः)**

चैतन्यकेन्द्रस्य परिधिः वर्तते इति अनेन निरूपणेन ज्ञायते। होरायन्त्रे टिक् टिक् इति शब्दः सदा वर्तते। परं स शब्दः नास्माभिर्विषयीक्रियते। अथापि चैतन्यपरिधौ स शब्दः वर्तते एव। सहसा तस्य शब्दस्य यदि विरामो भवति

तर्हि स सद्य एव ज्ञायते। केचन विद्यार्थिनः कक्ष्यायां योगनिद्रामनुभवन्तोऽपि उपाध्यायस्वनमवधानपरिधौ धरन्ति। अध्यापकस्वने विच्छिन्ने सहसा प्रबुद्धा भवन्ति। स्वापकालेऽपि अवधानपरिधौ वर्तत एव उपाध्यायस्वनः।

अवधानं च मनसः शक्तिविशेषः ( Facutly) न भवति। अवधातुः कार्यविशेषः अनुभवविशेषो वा भवति अवधानम्। प्रेरकेषु बहुषु द्रव्येषु यत्रास्माकं जिज्ञासा भवति तदेकं पृथक् कृत्वा ( Selection ) तत्र चैतन्यकेन्द्र-समर्पणमवधानं भवति। अवधानेनैव ज्ञानं विशदं भवति। अवधानमेव विषयं बुद्धौ दृढमवस्थापयति। वस्तुविश्लेषणं संश्लेषणं युक्तिचिन्तनमित्यादीनि अवधानवतैव कर्तुं शक्यानि। **रूबिन्** (Edgar Rubin)-नामकः अवयविमनोविज्ञानी चैतन्य-क्षेत्रविषयीभूतानि वस्तूनि, आकृति-भूमि ( Figure and ground ) रूपेण विभज्य, एषु यद् वस्तु तदा तदा अवधानविषयो भवति, तस्य आकृतिः ( Figure ) इति नाम, अन्यस्य नाम भूमिः इत्याह।

अवधानं कार्यविशेष इत्युक्तम्। केवलमनःकार्यमिदं न भवति। संवेग-कायिकव्यापार-इन्द्रियकार्याण्यपि अत्र स्वं स्वं कार्यं कुर्वन्ति। अवधानकाले शरीरावयवाः सर्वेऽपि अवधानकरणाय कामपि निश्चलावस्थां सन्नद्धदशां च प्राप्नुवन्ति। मूषिकग्रहणाय अवधानं कुर्वाणः मार्जारः[1] स्तब्धो विलोक्येत। धावनस्पर्धायां भागिनो युवानः धावनात् पूर्वक्षणे, भूमौ अङ्कितायां रेखायां निभृतं तिष्ठन्तो वर्तन्ते। शरीरस्थितिरपि अवधाने साहाय्यं करोति। अत एव योगाय प्रवृत्तस्य 'स्थिरसुखमासनं' इति आसनमादिशन् युञ्जानस्य शारीर-स्थितिमुचितां सूचयति पतञ्जलिः। इयं शरीरस्थितिः कदाचित् अवधानात् पूर्वं, कदाचित् अवधानात् परं च भवति। विद्यार्थिनः आसिकादर्शनेनैव ज्ञायेत किमयमवधत्ते उत नेति।

---

१ चिक्रंसया कृत्रिमपत्रिपङ्क्तेः कपोतपालीषु निकेतनानाम्।
मार्जारमप्यायतनिश्चलांगं यस्यां जनः कृत्रिममेव मेने॥ माघः 3-51.

शिक्षायामुपयुज्यमानमप्यवधानं केषुचित्कार्येषु नापेक्ष्यते । अवधानेनैव भुक्तस्यान्नस्य जरणं भवतीति न । शरीरे रक्तस्य प्रवहनमपि (सञ्चारः) अवधानं नापेक्षते । अत्यवधानं कदाचित् संवेगाधिक्यमुत्पाद्य क्रियमाणे कार्ये विघ्नमाचरेत् । भाषासंस्कृतावत्यवधानवान् भाषितुं नैव शक्नुयात् । संभ्रमकाले, विशालास्येऽपि पात्रे हस्तः न प्रविशतीत्यस्ति कोऽपि आभाणकः ।

मनोविज्ञानिनः प्रयोगशालासु बहून् प्रयोगान् कृत्वा अवधानविषये कांश्चन सिद्धान्तानकुर्वन् ।

## अवधानविस्तारः (Span of attention)

परिमितकाले केचन विषया एवास्माकं अवधानविषया भवन्ति। अवधाने एकस्मिन् क्षणे एकस्यैव वस्तुनः कति अंशाः अस्माकं अवधानेन ग्रहीतुं शक्या इति विचारः कृतः । अवहितानां अंशानां संख्यया अवधानविस्तारः निर्दिश्यते । दर्शने स्थितः अवधानविस्तारः टाचिस्टोस्कोप् (Tachistoscope)-नामकेनोपकरणेन निरूपितः । इदमुपकरणं परिमिते अतिलघौ काले बहून् अंशान् पुरतः उपविष्टस्य मानवस्य दर्शनपथं नयति । अस्मिन्नुपकरणे बहुबिन्दुमन्ति दृढतरपत्राणि (Cards) एकस्य पश्चादपरमिति क्रमेण निहितानि भवन्ति । एकस्य क्षणस्य पञ्चमे भागे एकं पत्रं प्रदर्श्यते । एकैकस्मिन् पत्रे कति बिन्दवः अथवा अक्षराणि वर्तन्त इति गणयित्वा द्रष्ट्रा वक्तव्यम् । यावतः बिन्दून् गणयितुं शक्नोति तत्संख्याक एव तदीयावधानविस्तारः (Visual span of attention) गण्यते। बिन्दवः यद्याकुलं अंकिता भवन्ति तर्हि प्रवयाः कश्चित् पञ्च वा षड् वा बिन्दून् गणयति । एवं श्रवणावधानविस्तारोऽपि गणयितुं शक्यः । द्रुततरं क्षणे क्षणार्धे वा बहुप्रहारैः फलके उत्पादितेषु शब्देषु पञ्च वा षड्वा प्रहारकृतान् शब्दान् गणयितुं शक्तो भवति कश्चित् ।

## अवधानकालपरिमाणम्

कियन्तं कालमेकस्मिन् विषये अवधानं कर्तुं शक्यमिति विचार्यते । होरात्रयमधीतमिति केचन कथयन्ति । वस्तुतः होरात्रयमवधानमविच्छिन्नमासीदिति

न मन्यन्ते विज्ञानिनः। तत्रैकस्यापि विषयस्य बहवोंऽशाः पर्यायेण अवहिता इति ज्ञातव्यम् यतः मनःकुरंगश्चपलः। अवधानं च अंशादंशं प्रति डोलायते। इदं एवमपि निरूपयितुं शक्यम्। होरायन्त्रं (Timepiece) किमपि पार्श्वे निधाय तच्छब्दः श्रूयताम्। तस्य एकैकोऽपि टिक्शब्दः समः एव वर्तते। परं श्रोतॄणां विषमो भायात्। अत्र निदानं अवधानह्रास एव। 173-तमे पुटे प्रदर्शितं चित्रमपि दर्शनावधानस्य चाञ्चल्यं सूचयेत्। अत्र क्षणेषु दृश्याकृतेः परिवर्तनं (Reversible perspective figure) जायते। प्रयत्नं कृत्वापि कोऽपि जायमानं परिवर्तनं निरोद्धुं नैव शक्नुयात्। अत्रापि निदानं अवधानचाञ्चल्यमेव। ततश्चैव-मुच्यते यत् अवधानं षट्क्षणपर्यन्तमेवैकस्मिन् अंशे वर्तेत। ततः अन्यमंशं गच्छेत्; पुनरपि पूर्वांशमागच्छेदिति। ततश्चोपाध्यायैः अजामितासंपादनाय प्रयत्नः कार्यः। एते अत्र शोभनोपाया भवन्ति। विषये वैचित्र्योत्पादनम्, विभिन्नप्रणाली-स्वीकरणम्, चित्रप्रदर्शनम्, पर्वक्रमेणाध्यापनम्, श्यामपट्टलेखनादिषु विद्यार्थिभ्यः अवकाशदानं, रुचिमुत्पाद्याध्यापनम् इति।

1. अशक्यमवधानम्
2. श्लाघ्यतममवधानम्
3. श्लाघ्यमवधानम्
4. उचितमवधानम्
5. अधममवधानम्

* 28. अवधानरेखाचित्रम्

---

* Taken from, *The Teacher and His Pupils* by H. J. Byrne, with kind permission of Oxford University Press, Bombay.

बैर्न्ने (Byrne)-नामकः उपाध्यायः विभिन्नगुणानि अवधानानि रेखाभिः प्रदर्शितवान् । चित्रे ऋजुरेखा अवधानं, वक्ररेखा अवधानह्रासं च एकस्मिन्नन्तरे वर्तमानं सूचयति ।

## बह्ववधानम्

बहुषु विषयेषु एकस्मिन्नेव क्षणे अथवा समये अवधानं कर्तुं शक्यं किमित्यपि विचारो वर्तते । अष्टावधानिनः शतावधानिनश्च प्रसिद्धा अस्मद्देशे । अष्टसु विषयेषु युगपदेव अवधानं येषामस्ति ते अष्टावधानिनः । अस्मच्छास्त्र-कारेषु नैयायिका वैशेषिकाश्च मनसः अणुपरिमाणत्वमङ्गीकुर्वन्तः "युगपत् ज्ञानानु-त्पत्तिर्मनसो लिङ्गमि' ति कथयन्तश्च ज्ञानयौगपद्यं नेच्छन्ति । अयौगपद्यं बह्ववधा-नाभावकृतमेव । आधुनिकमनोविज्ञानिनां मतं नैयायिकानां मतमनुवर्तते । युगपत् वस्तुद्वये अवधानमसाध्यमिति मनोविज्ञानिनः । " फिलडेल्फियानगरवासी लारड्-नामकः कोऽपि नरः द्वाभ्यां हस्ताभ्यां विभिन्नविषयकं दीर्घं पत्रद्वयं एकस्मिन् काले लेखितुं, तदैव केनचित् संभाषितुं, समस्यायाः कस्याश्चनोत्तरं चिन्तयितुं शक्तो वर्तते'' इति रिप्ले (Ripley)–नामकः विज्ञानी कथयति । 'एतादृशं सर्वमप्यवधानं एकस्मात् विषयात् अन्यं विषयं प्रति द्रुततरं नीयते । तत-श्चावधाने क्रमो वर्तत एव, क्रमस्तु न विभाव्यते ' इति मनोविज्ञानिनः कथयन्ति । दीर्घशष्कुलीभक्षणे पञ्चभिरपीन्द्रियैः पञ्चविधानि ज्ञानानि युगपदेव जायन्त इति वदतः पूर्वपक्षिणः मतं अवधानानां क्रमिकत्वं शत-पत्रपत्रदलवेधनन्यायेन निरूपयन् नैयायिकः निरस्यति । सर्वथा ज्ञानस्यावधा-नस्य वा यौगपद्यं नास्तीत्येव वैज्ञानिकाः अभिप्रयन्ति । अथवा क्रियमाणेषु कार्येषु द्वे त्रीणि वा परिचयवशात् स्वतः चलितानि (Automatic) भवेयुः यत्रावधानं नैवापेक्ष्येत । तस्मादेतादृशेषु कार्येषु अवधानानां यौगपद्यं वर्तत इति ज्ञानं भ्रममूलकमेव । अवधानं विषयद्वये प्रेरयितुमशक्यमिति अनेन प्रयोगेणापि निरूपयितुं शक्यम् । कश्चित् औ-आरभ्य अ-पर्यन्तं अचः प्रातिलोम्येन एकस्मिन-निमेषे लिखतु । द्वितीये निमेषे अयुग्मसंख्याः एकमारभ्य लिखतु । अनन्तरे

निमेषद्वये उभयमपि पर्यायेण, [1]प्रथममेकमक्षरं, अनन्तरं संख्या, अनन्तरमक्षरमिति, क्रमेण लिखतु। पूर्वं निमेषद्वये यावत् कृतं तावत् पश्चात् निमेषद्वये कर्तुं न शक्यं स्यात्। तत्र निदानं किमिति चेत्, अक्षरविषयकमवधानं संख्याविषयकमवधानं च परस्परं बाधेते। ततश्च प्रगतिह्रासः।

एवं दारुनिर्मितायां गजप्रतिमायां यदा दारु इति बुद्धिः तदा गजबुद्धिर्न भवति, यदा गजबुद्धिः तदा दारुबुद्धिः न भवतीति भगवत्पादाः शङ्कराचार्याः कथयन्ति[2]। यद्यवधानं द्विविषयकं युगपत् भवितुमर्हं स्यात् तर्हि दारु गजश्च युगपत् दृश्येयाताम्।

4. बालाः इन्द्रियविषयेष्वेवावदधते। कठिनपदैः प्रतिपादिते दुरवगाहे चार्थे अवधानं न कुर्वन्ति। तस्मात् ललितैः पदैः श्लोकादीनां व्याख्यानं कार्यम्। सूक्ष्मार्थानां व्याख्यानं बहुभिरुदाहरणैः कार्यम्। आसिकापि अवधाने कारणमिति पूर्वमुक्तम्। तस्मात् कक्ष्यायां बालानां सुखासनं कल्पनीयम्।

## अवधाननियमाः (Laws of attention)

बाह्याभ्यन्तरत्वेन अवधानकारणानि द्वेधा वर्णयन्ति। यानि वस्तुगतानि तानि बाह्यानि भवन्ति। यानि च व्यक्तिगतानि तेषामाभ्यन्तरत्वेन गणनं भवति।

### 1. परिवर्तनम् (Change)

व्याधः कश्चित् यावन्निश्चलो भवति तावदेव मृगान् ग्रहीतुं शक्नुयात्। तदीयमीषच्चलनमपि मृगाणामवधानमाकर्षेत्। चलवस्तुनि अवधानं जायते। अतः

---

1. लेखनप्रकारः—

(१) औ ओ ऐ ए ऌ ॠ ऋ ऊ उ ई इ आ अ

(2) 1 3 5 7 9 11 13 15 17 19 21 23 25

(3) औ 1 ओ 3 ऐ 5 ए 7 ऌ 9 ॠ 11 ऋ 13 ऊ 15 उ 17 ई 19 इ 21 आ 23 अ 25

2. दन्तिनि दारुविकारे दारु तिरोभवति, सोऽपि तत्रैव।
जगति तथा परमात्मा परमात्मन्यपि जगत्तिरोधत्ते॥
स्वात्मनिरूपण, श्लोक 94.

एव निर्वाप्य निर्वाप्य प्रज्वालिते वैद्युतदीपे अवधानं भवति; होरायन्त्रीय टिक्शब्द-विरामः अवधानमाकर्षति ; एकस्वरतायामवधानं न भवति । ततः उपाध्यायैः स्वस्वरस्य मन्दामन्दत्वरूपेण रसानुगुण्येन च विपरिणामः कार्यः ।

## 2. **प्राबल्यं तीव्रत्वं च** (Strength and Intensity)

प्रबलः तीव्रश्च धर्मः वस्तुगतः अवधानं जनयति । मन्दः स्वरः, दूरे दृश्यमानः लघुः प्रकाशश्चावधानं न जनयेत् । तीव्रः शब्दः, प्रबलः प्रकाशश्चावधानं उत्पादयति । एवं शरीरे जाता महती व्यथा अवधानमाकर्षति ; न तु लघ्वी । अतिशब्दे स्थलेऽपि सुहृत्कृतः मन्दः स्वरः अवधानं गृह्णाति । प्रकाशवर्णश्च निदानमवधाने । अन्तरिक्षात् प्रज्वलत् पतत् नक्षत्रमीक्ष्यते सहसा ।

## 3. **आकारः** (Size)

समानेष्वपि वस्तुषु यत् बृहदाकारकं तत् वस्तु अवधानं जनयति । अत एव सूचनाकर्तारः (Advertisers) वणिजः बृहत्फलकं (Big board), वार्तापत्रिकासु अधिकमवकाशं चोपयुञ्जते ।

## 4. **आवृत्तिः** (Repetition)

आवृत्तिरवधानं जनयति । लघ्वपि प्रेरकं (Stimulus) यदि वारं वारं आयाति तर्हि अवधानं लभते । होरायन्त्रस्य प्रथमं घण्टावादनमस्माभिर्नावधीयेत । परं प्रथमं वादनमपि कमपि संस्कारं अस्मासु जनयत्येव । एवं द्वितीयवादनमपि न ज्ञायेत । तृतीयादिवादनं तु ज्ञायते । अत एव द्वादशवादनकाले एकादश अथवा दशवादनान्येव गण्यन्ते । मित्रेण सकृत्कृतोऽपराधो नावधीयेत । पुनः पुनः क्रियमाणस्तु अवधानं प्राप्नोति । प्रचारः सर्वोऽपि इमं धर्ममाश्रित्य प्रवर्तते । आवृत्तिः यदि अतितरां भवेत् तर्हि सा स्वकार्यं कर्तुं न प्रभवति । अतिपरिचयात् आवृत्तौ औदासीन्यं जायते ; ततश्चानवहितिः ।

## 5. **नूतनत्वम्** (Novelty)

नूतनं वस्तु अवधानमाकर्षेत् । नूतनताशब्देन वस्तुगतः आगन्तुकः

स्वाभाविको वा अतिशयविशेषः सूच्यते। अत एव नूतनवस्त्राभरणादिमान् सुहृत् अस्माकमवधानमाकर्षति।

### 6. सान्निध्यम् ( Nearness )

यदस्माकं समीपे वर्तते तदस्माकमवधानं गृह्णाति। अत एव वणिजः रथ्यागामिजनावधानाकर्षणमुद्दिश्य आपणस्य पुरोभागे रथ्यापरिसरे आपणवातायने च पण्यं वस्तु प्रसारयन्ति। एवमुपाध्यायः कक्ष्यायां आत्मनः समीपे स्थितेषु बालेषु अवधानवान् भवति। बालाश्च परीक्षाकाले उपाध्यायस्य समीपे उपविशन्ति।

### 7. विषयस्य प्राधान्यम् ( Importance of problem )

पूज्ये कस्मिन्नप्यतिथौ विशिष्टमवधानं भवति। दुहितृविवाहमधिकृत्य चिन्ताग्रस्तानां गृहिणामवधानं सदा विवाहार्थोद्यमे एव स्यात्। परीक्षाप्राधान्यं मनसि विचिन्त्य परीक्षासमये बालाः कक्ष्यायां पूर्णं अवधानं दधते।

अत्र निर्दिष्टाः सर्वेऽपि बाह्याः हेतवो भवन्ति। अनेनेदं ज्ञायेत यत् परिवेषस्योचितस्य कल्पनेनोपाध्यायः छात्राणामवधानमाक्रष्टुं समर्थः स्यादिति। अध्यापनकाले स्वरविपरिणामेन, भिन्नवर्णसुधाखण्डोपयोगेन, स्थूलाक्षरलेखनेन, पुनः पुनः कथनेन, अध्यापने विषये च वैचित्र्योत्पादनेन, विषयस्य प्राधान्यप्रदर्शनेन च यथासम्भवं विद्यार्थिनामवधानं लब्धुं प्रयतेत। नैतावता मन्तव्यं बाह्यान्येव कारणानि अवधानग्रहणाय पर्याप्तानीति। बाह्यकारणेभ्योऽपि प्रधानतराणि (बलवत्तराणि) आभ्यन्तराणि कारणानि भवन्ति। तस्मादाभ्यन्तरकारणसम्पादनमपि उपाध्यायस्य मुख्यं कार्यं भवति।

## आभ्यन्तरहेतवः

### 1. स्वाभाविकेच्छा, प्रेरकं च (Native desire and urge)

जीवानां केषुचिद्वस्तुषु स्वतः इच्छा वर्तते। अण्डात् बहिरागतः कुक्कुटशावः सद्य एव भोजनेच्छया धान्यकणेषु अवधानं करोति। अत्र बुभुक्षा-

वृत्तिः प्रेरिका । आपदो रक्षणाय पलायने अवधानम् । सूचनाकर्त्तारः मानवानां नैसर्गिकेच्छां अवगत्य बलदायि रसायनं, सौन्दर्यापादकं वस्तुजातं च वार्तापत्रिकासु विपुलं वर्णयन्तः पठितॄणामवधानमाकर्षन्ति ।

### 2. अर्जितमनोभावाः भावग्रन्थयश्च (Sentiments & complexes)

अर्जितमनोभावाः भावग्रन्थयश्चावधानं जनयन्ति । देशभक्तिः देशाभिवृद्धिकार्येषु अवधानं जनयति । हीनभावना च परगतान् दोषानेव द्रष्टुं नरं प्रेरयति । केषु केषु वस्तुषु कोऽपि नरोऽवधत्ते इति ज्ञात्वा तस्य स्वभावः ज्ञातुं शक्यते । वातायनात् बहिरसकृत् पश्यन्तम्, पुनः पुनः केशप्रसाधनम् कुर्वन्तम्, कक्ष्याकोष्ठे पश्चाद्भागे सुखासिकया उपविशन्तम्, अर्धनिमीलिताक्षम्, होरायन्त्रमसकृत् पश्यन्तम्, अपृष्टमुत्तरं ददतम्, हास्यव्याजेनानुचितम् भाषमाणं च विद्यार्थिनो दृष्ट्वा उपाध्यायः बालानामुत्तरपत्रेभ्योऽप्यनवगमनीयान् बालानां स्वभावान् ज्ञातुं शक्नोति । एवमेव विद्यार्थिनः उपाध्यायाध्यापितविषयापेक्षया तद्गतगुणदोषानधिकं जानीयुः ।

### 3. भावदशा (Mood)

यस्य यादृशी भावदशा वर्तते सः तादृशभावसंबद्धे विषये एवावधानं कुर्यात् । विषण्णः विषादकरे अवधत्ते । तुष्टास्तु तोषकरेषु । परीक्षायां प्राप्तजया बालाः मधुरवस्तुभोजनाय छायाचित्रदर्शनाय वा गच्छन्ति । पराजितास्तु समानशीलान् प्राप्य रुदन्ति । विषदनशीलाः केचन वर्तन्ते । सन्तोषकालेऽपि ते वास्तविकं काल्पनिकं वा कमपि विषयमधिकृत्य सर्वदा विषण्णा एव भवन्ति ।

### 4. अभिवृत्तिः (Attitude)

एकैकस्यापि मानवस्य केषुचिद्विषयेषु कश्चन स्थिरः मनोभावो वर्तते, तस्यैवाभिवृत्तिरिति नाम । अभिवृत्त्यनुगुणेषु विषयेषु अवधानं जायते । 'संस्कृतवाणी अत्युत्तमा' इति येषां अभिवृत्तिः वर्तते ते तदध्ययनेऽवधानं कुर्वन्ति । मिष्टान्नभोजनसमये परिविष्टस्य पायसस्य स्वादिमा औष्ण्यं च भोक्तॄणामभिवृत्त्यनु-

गुणमेव भासेयाताम्। येषां भोजने अभिवृत्तिरेव न भवति ते पूर्वस्मिन् दिने किं भुक्तमित्यपि न स्मरेयुः।

### 5. विद्या पूर्वशिक्षणं च (Education and training)

चर्मकारः गच्छतां नराणामुपानहं, नापितः केशं, सूचीकारः कञ्चुकं च पश्येयुः। ग्रामीणः कश्चित् प्राचीनवस्तुसंग्रहालये सर्वं वस्तु क्षणेन दृष्ट्वा प्रतिनिवर्तेत। इतिहासाध्यायी विद्यार्थी तु चिरं स्थित्वा सम्यगवेक्षेत। चित्रलेखन-गान-भैषज्यादिषु कुशलानां अवधानं सूक्ष्मग्राहि स्यात्। पामरास्तु तेष्वेव विषयेषु स्थूलदृष्टयो भवन्ति।

### 6. अभिरुचिः (Interest)

एतेभ्यः चतुर्भ्योऽपि मुख्यतमं कारणं तु अभिरुचिः। का नाम अभिरुचिः? आंग्लेयीभाषायां स्थितं एतदर्थकं इन्टेरेस्ट् (Ineterest) इति पदम्, 'अयं लाभकरः, अयं अस्मत्संबद्धः' इत्यर्थकात् इन्टेरेस्ट् इति लातिनभाषापदात् निष्पन्नमित्यभिप्रयन्ति। तथा च यत् स्वतः अस्माकं लाभं जनयति यच्चास्माभिरात्मीयत्वेन चिन्त्यते तत्रास्माकमभिरुचिरथवा इच्छा जायते। यद्वस्तु सुन्दरं तत्र चाभिरुचिरिति सामान्यतः अभिरुचिः लक्षयितुं शक्यते। यत्राभिरुचिः तत्रावधानं यत्रावधानं तत्राभिरुचिरिति अनयोरभेदं केचित् वाञ्छन्ति। अभिरुचिश्च भावविशेषः, अवधानात् पूर्वभाविनी चेति मन्यन्ते केचन। "अभिरुचिः अनभिव्यक्तमवधानं भवति, अवधानं च अभिव्यक्ता क्रियाकारिणी अभिरुचि"रिति मक्डूगल्[1] कथयति। अभिरुचिरेवास्माकमवधानं कुत्र कर्तव्यमिति निश्चिनोति। अभिरुच्यवधानयोरभेदे ज्ञाते बालानां स्वाभाविकेच्छया, मनोभावेन, भावदशया, अभिवृत्त्या च (सह) अध्याप्यविषयान् संबद्धान् कृत्वा उपाध्याया यद्यध्यापयन्ति तदाध्यापनं अभिरुचिपूर्णं कर्तुं शक्ता भवेयुः। जिज्ञासावृत्त्युद्बोधनमपि अभिरुचिं जनयति। अभ्यासोऽपि (Habit) नियतेषु विषयेषु अभिरुचिं जनयेत्।

---

1. Interest is latent attention and attention is interest in action.

## अवधानप्रभेदाः (Types of attention)

प्रयत्नकृतं[1] स्वाभाविकं[2] चेति अवधानं द्विविधम्। मूलवृत्त्या प्रेरितानां जीवानां केषुचिद्विषयेषु स्वत एवावधानं भवति। बालानां विचित्रवस्तुनि स्वत एवावधानं जायते। एतत्सर्वं स्वाभाविकावधानस्योदाहरणम्। ग्रन्थपठने स्वतोऽवधानं न भवति। भविष्यत्फलमुद्दिश्यावधानं पठने प्रयत्नेनोत्पाद्यते। न केवलमवधानोत्पादने किन्तु तदनुवर्तने च प्रयत्नः अपेक्ष्यते। प्रयत्नकृतावधानस्येदमुदाहरणं भवति। प्रयत्नकृतमवधानं पुनः अभिव्यक्तानभिव्यक्तत्वेन द्विविधं भवति। कस्यापि ग्रन्थस्य पठनाय प्रथमं प्रयत्नकृतमवधानं संपाद्यते। ग्रन्थे प्रतिपादितं वस्तु रुचिपूर्णं यदि भवति तर्हि तत्रावधानं स्वाभाविकं जायते। अस्यावधानस्य 'अनभिव्यक्तप्रयत्नकृतमवधान'मिति[3] नाम। यत्रावधानं न केवलमुत्पत्तौ किन्तु अनुवर्तनेऽपि आन्तं पुरुषप्रयत्नमपेक्षते तस्य 'अभिव्यक्तप्रयत्नकृतमवधान'मिति [4]नाम।

अभ्यासेनापि अवधानं संपादयितुं शक्यत इति अभ्यासकृतमवधानमपि (Habitual attention) केचन निर्दिशन्ति। पूर्वोक्तमुभयविधमप्यवधानं अभ्यासकृतावधानात्मना परिणमयितुं प्रयत्नः कार्यः। बहुवारं प्रशिक्षणेन अभ्यासकृतमवधानं जायते। अत्रापि उपाध्यायैः बालेभ्यः प्रशिक्षणं दातव्यम्। पाठे अभिरुच्युत्पादनेनैवेदं कर्तुं शक्यम्। अध्ययने सद्यः प्राप्तं फलं किमपि प्रदर्श्यते चेत् तत्र बालाः अवधानं प्रयत्नं च कुर्युः। विप्रकृष्टफललाभाय प्रयतमानेभ्यः बालेभ्यः नान्तरीयकतया मध्ये मध्ये प्राप्तव्यानि फलान्यपि यद्याचार्यो निर्दिशेत् तर्हि तत्राप्यवधानं सुदृढं भवेदिति विज्ञानिनः निर्दिशन्ति। अत एव कालान्तरभाविफलमध्ये "सद्यः परनिर्वृतये" इति सद्यो जायमानं किमपि फलं काव्याध्ययनस्य प्रतिपाद्यते आलङ्कारिकैः।

---

1. Voluntary or volitional attention
2. Involuntary or non-volitional attention
3. Implicit volitional attention
4. Explicit volitional attention

## अनवधानम्

अनवधानपदेन अवधानात्यन्ताभावः नाभिप्रेयते । किन्तु यत्रावधानमपेक्ष्यते तत्र तत् न भवति, किन्तु अन्यस्मिन् विषये वर्तत इति मन्तव्यम् । जाग्रद्दशायां सर्वदास्माकमवधानं यस्मिन् कस्मिन्नपि विषये स्यादेव । कक्ष्यायामपि यो बालः अनवधानवानिति मन्यते सोऽपि अन्यत्रावधानवानेव स्यात् । तस्मादभिमतविषये ऽवधानासत्तामेवात्र अनवधानपदं सूचयति ।

पूर्वकाले अवधानकरणं विद्यार्थिनः कार्यमिति मत्वा आचार्याः अनवहितान् बालानदण्डयन् । इदानीं तु अवधानमनवधानं च शिक्षाप्रक्रियासम्बद्धं मन्यते । अवधानसंपादने यथा विद्यार्थिनां उत्तरदायित्वमेवमाचार्यस्यापि तद्वर्तते इति शिक्षासिद्धान्तविदः अभिप्रयन्ति । अभिरुचिमनुत्पाद्य निर्बन्धेन संपादितमवधानं केवलाभिनयरूपं स्यात् । अनवधाने कानिचन कारणानि वर्तन्ते । केषाञ्चित् बालानां केषुचिदध्येयविषयेषु अभिरुचिरेव न भवति । उपाध्यायः ऐन्द्रजालिक-वत् अभिरुच्युत्पादनाय प्रयतमानोऽपि अत्र पराजयमेव प्राप्नोति । ततश्चानवधा-नता । अध्येयविषयकाठिन्येन, केषांचिद्बालानां अनशनादिभिश्च, शरीरश्रान्तिः मनःश्रान्तिश्च भवेत् । कक्ष्यायां उचितस्य प्रकाशस्य वातस्य चाभावे श्रान्ति-र्भवेत् । शिक्षाप्रणाल्यननुगुणमध्यापयन्तः उपाध्याया अपि जामितां (Boredom) जनयन्ति । ततश्चानवधानता जायते । क्वचिदवधानविरोधिनः अंशाः सन्निहिता भूत्वा बालानां अवधानं विकर्षेयुः । बाह्यपरिवेषे जायमानाः सुखकरा असुख-कराश्च केचन विकर्षणे (Distraction) हेतवो भवन्ति । रथ्यायां जातं तूर्य-वादित्रादिगानं प्रथमस्योदाहरणम् । तीव्रः शब्दोऽपि अवधानं नाशयेत् । बहुषु नगरेषु पाठशालाः बहुजनसंमर्दवतो मार्गस्य समीपे कल्पिता वर्तन्ते । ततो रथ्यायां गच्छतां जनानां शकटादीनां च शब्देनावधानस्य नाशो भवति । केचनो-पाध्यायाः अपेक्षितादधिकेनोच्चतरेण स्वरेण भाषमाणाः श्रोतॄणां बालानां शिरःशूलं जनयन्ति । ये विकर्षकाः (Distractions) अपनेतुं शक्याः ते अपनेयाः । विकर्षकस्थानादन्यत्र गमनं वरं चेत् तदपि कर्तुं शक्यते ।

अवधानविघ्ने स्थिरे सति, तत्र परिचिताः अवधानं कर्तुं शक्ता भवन्ति। अत एवौद्योगिकशालासु सत्यपि महति शब्दे कर्मकराः सावधानं स्वकार्यमनुतिष्ठन्ति। बाष्पशकटमार्गसमीपगृहवासिनां शकटशब्देन नैव निद्राभङ्गो जायते। विकर्षकात्यन्ताभाववती काचन परिस्थितिः न कदापि कुत्रापि लभ्यते। तस्मात् सन्तमपि अवधानविरोधिनं अविगणय्य यथा बालाः अवधानं कृत्वा अधीयीरन् तथावधानकरणे तेषां प्रशिक्षणं देयम्। ततश्चावधानं अभ्यासरूपं (Habit) भवेत्। यदि अभिरुचिरुत्पादिता भवति तर्हि विघ्नं नैव गणयन्ति बालाः।

केचनोपाया बाह्याः पूर्वं निर्दिष्टा अपि पुनर्निर्दिश्यन्ते। कक्ष्यायां स्थितैः सर्वैरपि बालैः विना आयासं उपाध्यायस्य भाषणं यथा श्रुतं भवेत् तथा भाषितव्यं स्पष्टस्वरेणोपाध्यायेन। स्वरस्य यावदुच्चैस्त्वमपेक्ष्यते तावदेव तत्र भवेत्। न ततोऽधिकम्। प्रधानांशाः पुनरुक्तिं सहन्ते। पुनरुक्तिशीलत्वमेवोपाध्यायस्य प्रधानं चिह्नम्। तस्मादवश्यावधेयानां विषयाणां पुनः कथनं कर्तव्यम्। रामायणकथा भारतकथा च सर्वेषां विदितैव। अथापि पौराणिकाः कवयश्च प्रतिपादनशैल्यां किमपि नूतनत्वं अथवा वैचित्र्यमापाद्य कथाया रुचिमत्त्वमापादयन्ति। एवमेवोपाध्यायोऽपि विषयप्रतिपादने वैचित्र्यमापादयेत्। अत्र मनसः आवर्जकानां उदाहरणानां कथनं साहाय्यं कुर्यात्। निम्नकक्ष्याध्यापनकाले श्यामपट्टिकायां विभिन्नवर्णसुधाखण्डैः लेखनमपि बालानां अवधानं जनयेत्। यथा अध्ययने जामिता न भवेत् तथा विषये प्रतिपादनशैल्यां च उचितं परिवर्तनं (Change) कृत्वा अध्यापनीयम्। रीतेः काव्यात्मत्वं कथयन् **वामनः** विषयप्रतिपादने शैलीवैचित्र्यस्य प्राधान्यं स्वाभिमतं सुस्पष्टमभिधत्ते। बालानां जिज्ञासावृत्तिश्च अवश्यमुपाध्यायस्य साहाय्यं कुर्यात्। कौतूहलं संवर्ध्य क्रियमाणे अध्यापने बालाः अवधानं कुर्युः। बालानां वयः, पूर्वज्ञानं चाश्रित्य कौतूहलवृत्तिरुद्बोधनीया स्यात्। पाठ्यसहगामिक्रियाकलापः अभिरुचिं वर्धयेत्। अन्ततः इदं परमं प्रधानं निर्देष्टव्यं भवति यद् आचार्यस्योत्साहः। यद्याचार्यः उत्साहवान् भवति

तर्हि तदीयोत्साहः विद्यार्थिषु सङ्क्रान्तो भवति । तस्मादवधानमनवधानं चाचार्याधीनमेव वर्तते इत्यवगन्तव्यम् ।

## चिन्तनं कल्पना च[1]

मनःकार्यस्य सर्वस्यापि साधारणं नाम चिन्तनमिति । चिन्तनं सर्वजीवसाधारणम् । परं चिन्तने कौशलं मनुजस्यैवाधिकं वर्तते । अत एव सः हैतुकः, हेतुपूर्वकं चिन्तयिता इति व्यपदिश्यते । कुतः कुतः इति कारणमन्विष्यन् सः कौतस्कुतो भवति । हेतुपूर्वकचिन्तनसद्भावादेव मनुजः सर्वेभ्यः प्राणिजातेभ्यः अधिकाधिकां पुरोवृत्तिं प्राप्तवान् वर्तते । वर्षातपवात्यादिभ्यः आत्मनो रक्षणाय गृहाणि, वृषभशकटादारभ्य विमानपर्यन्तानि गमनसाधनानि, रोगेभ्यो रक्षणाय वीर्यवन्ति भेषजानि, शत्रुनाशनसमर्थानि विविधान्यायुधानि, मानसोल्लाससाधनानि कलाप्रभृतीनि च तदीयचिन्तनशक्तेः फलभूतानि भवन्ति । जीवसोपानेषु सर्वोन्नते सोपाने वर्तमानः मानवः इतोऽप्यधिकतरां प्रगतिं प्राप्नुयादित्यत्र नैवास्ति संशयः । दुष्प्रापं चन्द्रमण्डलमपि गन्तुं मानवं तदीयचिन्तनाशक्तिरेव शाकयति स्मेति सुविदितमिदमिदानीम् । अनेन ज्ञायते नरस्य प्रगतिः सर्वापि चिन्तनाशक्तिमेवाश्रयते इति, शिक्षणप्रक्रियायां चिन्तनस्य महत् प्राधान्यं वर्तत इति च ।

चिन्तनं बहुविधं भवति । मनोविलास-दिवास्वप्न-स्वप्न-भावचिन्तन-कल्पना-तर्कण-स्मरणादयः सर्वेऽपि चिन्तनप्रभेदा एव । विश्रान्तिं प्राप्य स्थितस्य मानवस्य मनसि यदृच्छाप्राप्ताः आशयाः एकस्मात्परं अपर इति स्वयमेव शृङ्खलारूपेणायान्ति । अत्र चिन्तने आशयाः चिन्तयित्रा अस्मात्परमयमेवेति न नियम्यन्ते । अस्य चिन्तनस्य मनोविलासः ( Reverie ) इति नाम । एतस्य चिन्तनस्य प्रयोजनं किमपि न भवति । दिवास्वप्ने ( Day-dreaming ) चिन्तयिता मनोरथकल्पितानि फलानि विचिन्त्य, तत्प्राप्त्युपायानपि ध्यायन् अधिगतलाभ इव सन्तुष्यति । ब्रह्मचारी दरिद्रः कश्चित् श्राद्धे लब्धां दक्षिणां

---

1 Thinking and imagination.

उपयुज्य वाणिज्यं कृत्वा धनी भूत्वा प्रभोः दुहितरं परिणीय गृहस्थो भूत्वा बहुपुत्रो भविष्यामीति दिवास्वप्नानुभवं प्राप्तवान् इति कथा वर्तते। अत्र चिन्तने चिन्तयिता स्वचिन्तनकार्यं नियन्तुं शक्तो वर्तते। स्वप्नोऽपि चिन्तनप्रकार एव। अत्र द्रष्टा क्रियमाणं नियन्त्रणं न भवति। स्वप्नस्तु स्वप्नकाले सत्य इत्येव विज्ञानिनो[1]मन्यन्ते।

चिन्तनं तावत् सामान्यतः एवं लक्ष्यते। चिन्तनं सन्निहितेन असन्निहितेन वा प्रेरकेणोत्पादितः मानसः कार्यविशेषः (व्यवहारः) यः जीवस्य सन्निकृष्टां विप्रकृष्टां वापेक्षां पूरयतीति। चिन्तनस्य जीवापेक्षापूर्तेश्च दृढतरः सम्बन्धो वर्तते इति आधुनिका विज्ञानिनो मन्यन्ते। अन्धकारे जाते दीपः प्रज्वाल्यते। शैत्येन पीडायां जातायां कंबलेनात्मा आव्रियते। शकटे आगच्छति रथ्यापरिसरे गम्यते। सन्दर्भानुगुणं सामञ्जस्यं संपाद्यते। एतच्च सर्वं चिन्तनस्य सद्यो जायमानस्य फलस्य च मध्ये स्थितं संबन्धं सूचयति। कवाटमुज्जिघाटयिषुः मार्जारः प्रयत्नपराजयप्रणालीमाद्रियते। मनुजस्तु एतादृशे अवसरे कार्यकारणयोः सम्बन्धं स्वयमवगत्य भविष्यत् फलं विचिन्त्य कार्यं करोति।

## कल्पना

कल्पनापि चिन्तनप्रभेद एव। कल्पना मनसः स्वभावविशेषः। बालस्य कल्पनाशक्तिं दृष्ट्वा तदीयबुद्धिविकासस्तरः ज्ञातुं शक्यते। अस्मिन् प्रसङ्गे कल्पना-बिम्बन-बिम्बशब्दानामर्थः विविच्य ज्ञातव्यो भवति। वृत्तस्यानुभवस्य पुनः मनोमुकुरे प्रतिष्ठापने यः स्वभावः मनसो वर्तते तस्य कल्पना (Imagination) इति नाम। अयं स्वभावः यं व्यापारं करोति तस्य बिंबनम् (Imagery) इति नाम। अस्य व्यापारस्य फलत्वेन यत् मनोमुकुरे प्रतिफलितं भवति तस्य बिम्बः (Image) इति नाम। मनोविज्ञानिनः असकृत् प्रथमं पदद्वयं

---

1. विशिष्टाद्वैतसिद्धान्तप्रतिष्ठापकाः श्रीभगवद्रामानुजाचार्या अपि स्वप्नस्य सत्यतां ऊरीकुर्वन्ति।

समानार्थकं उपयुञ्जते। एतत्त्रयमपि समुच्चित्य कल्पनाशब्देन व्यवहरन्ति। तस्मादेषां पदानां यथासम्भवमर्थो ज्ञातव्यः। पदानामर्थः उदाहरणैः स्पष्टो भविष्यति। वस्तु दृष्टवतो मानवस्य यज्ज्ञानं जायते 'अयं घटः' इति तस्य प्रत्यक्षमिति नाम। यदा तस्यैव पुरतः घटो न भवति तदा तमधिकृत्य चिन्तने यः स्वभावः मनसो वर्तते तस्य कल्पनेति नाम। अनेन स्वभावेन व्यापारितं मनः क्रियाशीलं सत् घटस्य रूपं मनोमुकुरेऽवस्थापयितुं प्रयतत इत्यस्य बिम्बनं (Imagery) इति नाम। अनेन व्यापारेण कम्बुग्रीवादिमान् पृथुबुध्नाकारः योऽयं घटः मनश्चक्षुषा (Brain's eye) विलोक्यते तस्य साक्षात्कृतस्य घटरूपस्य बिम्बः (Image) इति नाम। इदानीं घटबिम्बः मनसि वर्तते। इदं प्रत्यक्षादीषदेव न्यूनमिति मनोविज्ञानिनः। एवं प्रातः दृष्टस्य कस्यापि सुहृदः मुख-स्मरणं मनोमुकुरे सुहृन्मुखमाविर्भावयेत्। कक्ष्यायां स्थिताः बालाः प्रातर्भुक्तस्य भोजनस्य, श्रुतस्य गीतस्य, घ्रातस्य गन्धस्य च बिंबनं कर्तुं समर्था भवेयुः। "अद्यापि ताम्" इति पञ्चाशता श्लोकैः राजकुमारीं वर्णयन् बिल्हणः चाक्षुषं बिम्बं आत्मना कृतं वर्णयति[1]। एवं चारुदत्तः, रेभिलगानश्रवणानन्तरं गृहं गच्छन् तत् स्मरन् 'गच्छामि शृण्वन्निव' इति श्रवणबिम्बं वर्णयति[2]। वस्तुनः निरन्तर-ध्यानात् किमपि मानसप्रत्यक्षं बिम्बरूपं (दर्शनसमानाकारं) जायत इति दर्शन-कारा अपि कथयन्ति। बाह्यं प्रेरकं विना (वस्तु विना) बाह्येन्द्रियकार्यं च विना, साक्षात् मनः केवलं उपयुज्य वस्तुनः बिम्बं मनसि सन्निधाप्य या अवगतिः प्राप्यते तस्य बिंबावगतिरिति नाम। वस्तुनः असान्निध्येऽपि तदधिकृत्य ज्ञाने बिंबनमेव साहाय्यमाचरति। पिपीलिकोपसृतगात्राः पिपीलिकाभावेऽपि पिपी-लिकोपसर्पणं बिम्बावगत्यैवानुभवन्ति।

बिंबानि वस्तुवद् अनुभवानुत्पादयितुं शक्नुवन्ति। अथापि वस्तुकृत-साक्षात्कारस्य बिम्बकृतसाक्षात्कारस्य च भेदो वर्तते। प्रत्यक्षं तु इन्द्रियार्थसन्नि-

---

1. बिल्हणकृता चौरपञ्चाशिका विलोकनीया।
2. मृच्छकटिके, 3.5;

कर्षेण जायते। बिम्बनं तु इन्द्रियार्थसन्निकर्षं नापेक्षते। प्रत्यक्षे, यद्वस्तु दृश्यते तत्, तत्सम्बद्धमन्यच्च किमपि भासेत। घटप्रत्यक्षे तदाधारस्यापि प्रत्यक्षं स्यात्। बिम्बने तु घटः केवलं भासेत। परिवेषज्ञानं न भवेत्। वस्तुदर्शनेन जातं प्रत्यक्षं विशदं भवति। बिम्बनेन जातं प्रत्यक्षं न तथा विशदं स्यात्। वस्तुगत-सूक्ष्मांशानामपि भानं प्रत्यक्षे स्यात्, बिम्बने सूक्ष्मांशानां भानं न भवेत्। प्रत्यक्षं तु यावत्पदार्थसत्त्वं स्यात्। बिंबनं परिवर्तेत। अथवा तिरोहितं भवेत्। प्रयत्नपूर्वमेव बिंबनस्य चिरावस्थितिः भवेत्। प्रत्यक्षे पूर्वमदृष्टाः अंशा अपि विवेचनेन ज्ञाता भवेयुः। बिंबने तु एवं नूतनांशज्ञानस्यावकाशो न भवति। अथापि प्रत्यक्षस्य कल्पनायाश्च दृढतरः संबन्धो वर्तते। कदाप्यदृष्टः नैव कल्पनागोचरो भवति। अभूतोपमायामपि अन्यत्र दृष्टस्य अन्यत्रानयनं क्रियते। "उभौ यदि व्योम्नि" इति माघश्लोके[1] अन्यत्र दृष्टः गङ्गाप्रवाहः द्विधाभूतः व्योम्नि पृथक् पतेत् चेदित्युच्यते। गंगाप्रवाह-तत्पतन-व्योमादयः पूर्वं दृष्टा एव नूतनं किमपि विलक्षणं संयोजनं प्राप्नुवन्ति। पञ्चभिरिन्द्रियैः जातेषु प्रत्यक्षेषु चाक्षुषप्रत्यक्षस्यैव बिम्बोत्पादने अधिका शक्तिर्वर्तते।

कल्पनाकरणे बालानां प्रवयसां च भेदो वर्तते। बालाः साक्षात् आत्मना कृतं दर्शनमेव बिम्बने चिन्तने चोपयुञ्जीरन्। गौः इत्युक्ते आत्मना दृष्टामेव गां मनोमुकुरे आविर्भावयेयुः। प्रवयसस्तु गोपदश्रवणेन व्यक्तिस्मरणं विना गां गोधर्मांश्चाधिकृत्य स्मर्तुं समर्था भवन्ति। वस्तुद्वारा बिम्बोत्पादनापेक्षया-पदद्वारा बिम्बोत्पादने लाघवं वर्तते। फलं चाधिकम्। वस्तुदर्शनेनानवगम्यमानाः बहवः अंशाः पदैरवगमिता भवन्ति। ततश्च पदात् बिम्बग्रहणे बालानां प्रशिक्षणं देयम्। एवं प्रशिक्षिता एव कालक्रमेण पदैः प्रतिपाद्यमानान् अमूर्ता-नपि (Abstract ideas) सत्यधर्मादीन् भावान् अवगन्तुं शक्ता भवेयुः। शब्दैः बिम्बोत्पादने ज्ञातार्थानां पदानां प्रयोगः कार्यः; न तु कठिनपदानाम्। निरर्थक-

---

1. उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगंगापयसः पतेताम्।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः॥ माघः 3-8.

पदगुम्फनमपि वर्जनीयम् । अर्थज्ञानं विना क्रियमाणं श्लोकानां कण्ठस्थीकरणमपि सर्वथा परिहार्यमित्यभिप्रयन्ति । अर्थज्ञानरहितकण्ठस्थीकरणस्य निन्दा कालिदासेनापि 'वेदाभ्यासजड[1]' इति कथयता कृता । वस्तुदर्शनादेवावगतिरिति इयं परिस्थितिः कक्ष्यायां यदि स्यात् तर्हि बालानां कल्पनाशक्तिः कुण्ठिता स्यात् । वस्तूनां प्रदर्शने आदरं प्रदर्शयन्त्यां साक्षात्प्रणाल्यामयं दोषः उद्घाटयते कैश्चित् । भाषाज्ञानं च भाषाश्रवणेन भाषणेन च भवतीति भाषाध्यापकैः भाषा वर्जयितुं न शक्यते । परं स्पष्टार्थैः पदैरनाकुलं भाषणं तु‌ाध्यापस्य मुख्यं कार्यं भवति ।

केचित् बालाः प्रत्यक्षस्य कल्पितस्य भेदमगृह्णन्तः 'पिशाचो दृष्टः' इति कथयेयुः । विवेचने अशक्ताः बालिशाः स्त्रियश्च पिशाचदर्शनस्य सत्यतां मन्यन्ते । केचन बालाः बिम्बग्रहणे अशक्ताः । केषांचित्तु अतिविशदं बिम्बमुत्पादयितुं शक्तिर्वर्तते । गृहे प्रतिबिम्बिते तद्गतवातायनादि सर्वमपि बिम्बयितुं केचन समर्थाः । अस्याः कल्पनायाः अतिविशदकल्पना (Eidetic image) इति नाम । बालस्य द्वादशवर्षात्परं इयं शक्तिः न्यूना भवतीत्यपि अभिप्रयन्ति विज्ञानिनः ।

## कल्पनाप्रयोजनानि

कल्पना चास्माकं दैनंदिनकार्येषु बहुशः उपयुज्यते । कल्पनाशक्त्यैव मानवः चिन्तनं सर्वं कर्तुं पारयति । किं कार्यं कर्तुं शक्यम् किमशक्यमिति कल्पनाशक्तिमुपयुज्यैव जानाति । भविष्यत्कालोपयोगि सर्वं निश्चेतुं शक्नोति । विशिष्टभवनसेत्वादीनां निर्मातारः वास्तुकलाकुशलाः निर्माणात् पूर्वं भवनादीनां रूपं मनसि संकल्पयन्तः तन्निर्माणाय कियद्धनमपेक्षितं स्यादित्यपि कल्पनयैव निर्धारयन्ति । सर्वकाराणां पञ्चवर्षी योजनापि कल्पनाशक्तिमूलैव । विज्ञानिनः वेदान्तिनः भिषजः यान्त्रिकाः अन्ये च भविष्यन्तमर्थं कल्पनाशक्तिसाहाय्येनैव विदन्ति । काव्यनाटकादीनां रसास्वादोऽपि कल्पनाशक्त्या कविसहृदयीभूतानामेव

---

1. विक्रमोर्वशीयम् 1-15

सुलभः। संगीतचित्रकलाशिल्पादीनां अनुभवोऽपि कल्पनाशक्तिमतामेव साध्यः। कल्पनाशक्तिरेव मनुजं परकीयं दुःखं ज्ञातुं दुःखिनि दयां प्रदर्शयितुं च शक्तं कुर्यात्। हृतराज्यस्य नष्टभार्यस्य सुग्रीवस्य दुःखं, तत्समानावस्थः रामः "आत्मानुमानात् पश्यामि"[1] इति कथयन् आत्मना ज्ञातं निवेदयति। "आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यता[2]" मिति सीतायाः वचनं रावणं प्रति। "आत्मौपम्येन सर्वत्रेति[3]" भगवान् गीतायाम्। कल्पनाशक्तिः जीवनं सुखं वर्तयितुं नरं शाकयति। अस्मदिच्छाः सर्वा अपि भविष्यत्काले पूर्णा भविष्यन्तीति विचिन्त्य तुष्टिरनुभूयते। कल्पनाशक्तिरेव भविष्यं प्रति शुभां प्रत्याशामुत्पाद्य तात्कालिकीं मानसीं व्यथां न्यूनयति। "एति जीवन्तमानन्दः नरं वर्षशतादपि"[4]इति इयं बुद्धिः कल्पनाशक्त्या वर्ध्यते। "आशाबन्धः कुसुमसदृशः प्रायशो ह्यङ्गनानां, सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि[5]" इति कालिदासः। कल्पनाशक्तिमन्तः यथा परकीयकाव्यनाटकादीनि अनुभवन्ति तथा स्वयमपि काव्यनाटकादिरचनेन सद्यः परां निर्वृतिं प्राप्नुवन्ति। कल्पनाशक्तिः सच्चारित्रमपि वर्धयति। रामहरिश्चन्द्रादीनां चरितमवगत्य तद्वत् वर्तितव्यमिति संकल्प्यते। अस्य नाम अनुकरणकल्पना (Imitative imagination) इति। येषां कल्पनाशक्तिर्न भवति ते जीवनं सरसं कुर्वत् वस्तुजातं काव्यगीतकलादिकं अनुभवितुं नैव शक्ता भवेयुः। कल्पनाशक्तिमन्तः एव बालाः पञ्चतन्त्रादिकथां काव्येषु प्रतिपादितं सौन्दर्यादिकं च रसयितुं शक्ता भवेयुः। तस्माद् बालानां कल्पनाशक्तिर्वर्धनीया।

## कल्पनाशक्तिवर्धनोपायाः

क्रीडा, तत्रापि भावनाक्रीडा बालानां कल्पनाशक्तिं वर्धयेत्। बालः दण्डमंसे निधायात्मानं योधं मन्यते। स एव दण्डः अश्वो भूत्वा बालमश्वसादिनं मानयति। पूर्वदण्डेनापरं दण्डं तिर्यक संयोज्यात्मानं धानुष्कं मन्यते। 'स्तम्भं

---

१. वाल्मीकिरामायणे किष्किन्धाकाण्डे; २. सुन्दरकाण्डे; ३. गीतायाम्; ४. सुन्दरकाण्डे; ५. मेघसन्देशे;

प्रहरन् उपाध्यायो भवति'। कन्या चात्मानं मातरं विभाव्य प्रतिमां कांचित् स्नापयति, परिधापयति, आशयति स्वापयति च। पाठ्यविषयाः सर्वेऽपि कल्पनाशक्तिवर्धनायोपयोक्तुं शक्यन्ते। प्रारम्भदशायां मृद्भिः प्रतिमाकरणं कागसपत्रैः वस्तुकरणम्, चित्रलेखनं, लिखितस्य चित्रस्य वर्णार्पणं च कल्पनां वर्धयेत्। बाललिखितचित्रादिषु दोषोद्घाटनापेक्षया स्थितस्य गुणस्याभिनन्दनमेव कार्यम्। सहसा साक्षाच्च दोषोद्घाटने कृते बालाः भग्नोत्साहा भवेयुः। भाषाध्यापने विद्यार्थिभिरुपाध्यायैश्च क्रियमाणं कथावर्णनं कल्पनां वर्धयेत्। काश्चन कथाः अभिनेयार्हा भवेयुः। तासां अभिनयोऽपि कल्पनाशक्तिं वर्धयति। पाठ्यपुस्तकस्थसंभाषणादीनां अभिनयप्रयोगः कर्तुं शक्यते। सौन्दर्यानुभवोऽपि बालानां कल्पनाशक्त्यैव जायते। आधुनिकशिक्षासिद्धान्तश्च बालानां मनसि निष्पादनकल्पनाशक्तिं (Creative imagination) वर्धयितुं वाञ्छति। पाठशालापत्रिकाप्रकाशनं कल्पनाशक्तिं वर्धयेत्। विद्यार्थिनः चित्र-पद्य-कथा-लघुसमालापादिलेखनाय प्रेर्या भवन्ति। बालैः लिखितानां पाठशालापत्रिकायां प्रकाशनमपि कार्यम्। काव्याध्यापनं तथा कर्तव्यं यथा श्रुतः काव्यार्थः बालानां मनसि कल्पनां वर्धयेत्। अत्र श्रुतं काव्यार्थं बालाः चित्रेण विशदीकुर्युः। काव्याध्यापनं अपूर्णमेवाभविष्यत् यदि तत् बालान् किमपि स्रष्टुं न उद्योजयिष्यत्। सफलमध्यापनं बालान् श्लोकार्थस्य चित्रलेखनादिना प्रतिपादने अवश्यमुद्योजयेदेव। प्रदर्शनमपि (Exhibition) बालैः क्रियमाणं तेषां कल्पनाशक्तिं वर्धयेत्। कक्ष्यायाः अलङ्करणं, स्वच्छतासंपादनं, मानसोल्लासकार्यं, यात्रा, वादगोष्ठी, प्राचीनवस्तुसंग्रहालय (Museum)-गमनमिति बहवः उपाया वर्तन्त इदानीं कल्पनाशक्तिवर्धनाय।

**मान्टिस्सोरी** (Montissori)-महोदया, तु "देवताकथानां (Fairy tales) पठनं बालानां कल्पनाशक्तिं वर्धयति। एतान् बालान् वास्तविकलोकात् कल्पनालोकं नयति। कष्टकाले देवताः स्वयमागत्य साहाय्यं करिष्यन्तीति मत्वा अलसा भवन्ति। व्यावहारिकलोकज्ञानं च इयं कल्पनाशक्तिः नाशयति।

दिवास्वप्ने बालान् निमज्जयति । तस्मात् काल्पनिककथानां पठनमनुचितम् । कल्पनाशक्तिश्च तात्त्विकं अंशमाधारीकृत्यैव वर्धनीया" इत्यभिप्रैति । देवता कथापठने उक्ताः दोषाः दिवास्वप्नेऽपि अतिदिश्यन्ते कैश्चित् तस्मादत्रेयं समाहितिः ।

अत्रोद्घाटितो दोषः अभ्युपेयः स्यादपि । येषां मनः स्वस्थं न भवति ते कल्पनालोके निवसन्ति । दिवास्वप्ने (Day dreaming) च कश्चनात्मानं वीरमतिदुःखिनं वा मन्यते । कदाचित् किमपि दुःखं स्वयं कल्पयन् तत्र निमग्नः परकृतामनुकम्पां प्रतीक्षमाणो भवेत् । परं दिवास्वप्नः अत्यन्तं विफल इति दोषावह इति च न मन्तव्यम् । वास्तविके लोके लब्धुमशक्यान् भोगान् दिवास्वप्नेन प्राप्य केचन तुष्टिं प्राप्नुवन्ति । ततश्च भग्नाशता निरस्ता भवति । दुष्टाः केचन भावाश्च दिवास्वप्नकल्पनेन मनसो निस्सारिता भवन्ति । अत्र दिवास्वप्नः शोधनकारी (Cathartic) भवति । दिवास्वप्नः भविष्यज्जीवकल्पनेऽपि साहाय्यं कुर्यात् । दिवास्वप्नः अत्यन्तं निस्सारयितुं अशक्यः । परमतिमात्रः स्वप्नः अनर्थं कुर्यादिति तत्रावधानं देयं स्यात् । एवं देवताकथापठनमपि निवारणं नार्हति । कल्पनाजन्ये फले विचिन्त्यमाने, देवताकथाध्ययननिरासः अनुचित इत्येव भाति । बालाध्येया ग्रन्थाः बहवः कल्पनायुक्ताः वर्तन्ते । तेषां निरासः भाषाज्ञानवृद्धिं हन्यात् । उद्योगं चिन्तनाशक्तिं प्रायौगिकज्ञानं च कल्पनाशक्तिः यथा न नाशयेत् तथा सा वर्धनीया । तस्मात् कल्पना सर्वथानर्थकरीति न मन्तव्यम् । व्यावहारिकस्य काल्पनिकस्य च लोकस्य भेदावगतौ बालानां प्रशिक्षणं देयम् ।

अतिकल्पनायां केचन दोषा वर्तन्ते । ते त्ववश्यं परिहरणीयाः ।

केचित् कल्पनालोके एव वर्तमानाः ततो निवर्तितुमशक्ताः तत्रैव रमन्ते । जीवनोपयोगि किमपि कार्यं कर्तुं न प्रभवन्ति । साहित्ये चित्रकलायां संगीते चात्यासक्ताः एतादृशाः वर्तन्ते । केचित् शास्त्रादिषु प्रतिपादितमुन्नतं लक्ष्यं मनसि कल्पयन्तः भार्यापुत्रादिषु दृश्यमानमल्पमप्यपराधं न सहन्ते । तीव्रकोपाः तीव्रदण्डाश्च भवन्ति । "न कश्चिन्नापराध्यती[1]"ति बुद्धिरेषां न भवति ।

1. वाल्मीकिरामायणे युद्धकाण्डे.

ततश्च भार्यापुत्रादिभिः सामञ्जस्यं प्राप्य जीवनं सम्यग् वर्तयितुं न पारयन्ति । सदा परनिन्दका भवन्त्येते । उपाध्याया एतादृशा न भवेयुः । अतिकल्पनया केचित् सर्वदा आपदमेव चिन्तयन्ति । स्वसमानवयसं प्रसिद्धं कमपि पुरुषं मृतं वार्तापत्रिकासु निवेदितं ज्ञात्वा आत्मनोऽपि मृतिं केचनाशङ्कन्ते । अल्पोऽपि रोगः मारक एव स्यादिति कल्पयन्तः महान्तं भिषजमुपसर्पन्ति । केचन असन्तमपि रोगं सन्तं मन्यमानाः, किमपि कार्यं न कुर्वन्ति । काल्पनिकरोग एवालसानां कार्याकरणे अपदेशो भवति । काश्चन मातरः पाठशालातः प्रत्यागमने विलम्बमानानि स्वापत्यानि मार्गे शकटेन पातितानि शङ्कन्ते । अत एवोक्तं 'अतिस्नेहः पापशङ्की 'ति । केचन ईश्वरे अतिविश्वासेन जीविकार्थं किमपि न कुर्वन्ति । "यो मे गर्भगतस्यापि वृत्तिं कल्पितवान् प्रभुः । शेषवृत्तिविधानेऽपि किं सुप्तः सोऽथवा मृत" इति कथयन्तः आत्मानमपि वञ्चयन्ति । तस्मादतिकल्पनादोषादात्मानं रक्षन्तः उपाध्यायाः स्वविद्यार्थिष्वपि यथा ते दोषाः न प्रसरेयुः तथा जागरूका भवेयुः ।

## कल्पनाप्रभेदाः

बिम्बोत्पादनसमर्थस्य मनोव्यापारस्य अथवा तत्स्वभावस्य कल्पनेति नामेति पूर्वमुक्तम् । इयं कल्पना, पुनरुत्पादनकल्पना[1], उत्पादनकल्पनेति[2] द्वेधा भवति । पूर्वमिन्द्रियद्वारानुभूतस्य विषयस्य, इन्द्रियस्य विषयसन्निकर्षस्य च साहाय्यं विना विषये परिवर्तनादिकं चाकृत्वा यथावत् मनसि उद्भावनं पुनरुत्पादनकल्पनेत्युच्यते । अस्यापरं नाम स्मरणमिति । पूर्वानुभूतेषु मुख्यांशानादाय परिवर्तनादिकं च कृत्वा नव्यां कांचन कथां लिखति कश्चित् । अत्रोत्पादनकल्पना स्वकार्यं करोति । अविदितं किमपि चिन्तयितुं कल्पयितुं वा न शक्यम् । मनुजस्य कबन्धोपरि अजस्य (अन्यस्य वा कस्यापि प्राणिनः) मुखं

---

1. Reproductive imagination.

2. Productive imagination.

निधाय रूपं किमपि कल्प्येत । अयमजमुखो भवति । स्वर्णं ज्ञातम् । गोपुरकवाटादिकमपि ज्ञातमेव । कविः कश्चित् इदमुभयं संयोज्य स्वर्णकवाटं कल्पयेत् स्वकल्पनाशक्त्या । अत एवोक्तम् "नास्त्यचौरः कविः कश्चित्[1]" इति । अतिप्रतिभाशालिनोऽपि कवयः प्रकृतौ दृष्टान्येव वस्तूनि ईषत्परिवर्तनेन अतिशयोक्तिरागसमर्पणेन च पुष्पितया स्वकाव्यवाचा सशोभं वर्णयन्ति । चैत्रिक-गायक-कवि-कथारचयितारः एतादृशकल्पनावन्तः ।

उत्पादनकल्पनापि फलमूलककल्पना,[2] सौन्दर्यात्मककल्पना[3] इति द्वेधा । तत्र प्रथमा जीवनोपयोगि किमपि कल्पयितुं प्रवर्तते । विशालभवन-सेतुनिर्माणादिषु प्रवृत्ता इमां कल्पनाशक्तिमुपयुञ्जते । **सर् ऐसक् न्यूटन्**, बाष्पशकटद्रष्टा **जेम्स् वाट्सन्**, निस्तन्त्रिकासिद्धान्तस्य द्रष्टा **मार्कोनि**, भाषमाणछायाचित्रस्य द्रष्टा **एडिसन्**, विमानोद्भावकौ **रैट्भ्रातरौ**, अन्ये चैतादृशाः फलमूलककल्पनावन्तः । इयं कल्पना कांश्चन नियमान् सुदृढमाश्रित्यैव प्रवर्तते । अत्र युक्तिचिन्तनस्यातिमात्रमवकाशो भवति । एतादृशनियमकृतो बाह्यः निर्बन्धः रम्यवस्तूनां रचनायां रसनायां च न बहु वर्तते । सुन्दरवस्तु-रचना तदनुभवश्च सौन्दर्यात्मककल्पनया भवति । रम्यवस्त्वनुभवः प्रायशः चक्षुषा श्रोत्रेण च क्रियते । बालेषु रम्यवस्त्वनुभवाय सौन्दर्यात्मककल्पना वर्धनीया । काव्याध्यापनकाले उपाध्यायः निपुणनटवत् स्वयं काव्यरसानुभवं प्रदर्शयन् विद्यार्थिनां सहृदयत्वमापाद्य तानपि रसास्वादपरान् कुर्यात् । नैव वाचा निर्दिशेत् "अत्रायं रसो वर्तते" इति । उपाध्यायेन तदा तदा रसास्वादयोग्याः श्लोकाः अध्यापनीयाः । सौन्दर्यानुभवयोग्यां कल्पनामुद्बोध्य विद्यार्थिनां काव्यरसानुभव-शक्तिश्च वर्धनीया ।

---

1. नास्त्यचौरः कविः कश्चित् नास्त्यचौरो वणिग्जनः ।
स नन्दति विना वाच्यं यो जानाति निगूहितुम् ॥ **काव्यमीमांसा** ॥
2. Pragmatic imagination.
3. Aesthetic imagination.


चिन्तनम्
मनोविलासः
दिवास्वप्नः
कल्पना
भावग्रहणं
निश्चयः
तर्कणम्
स्मरणम्
पुनरुत्पादन-
उत्पादन-
अनुकरण-
निर्माणात्मक-
फलमूलक-
सौन्दर्यात्मक-

# षष्ठोऽध्यायः

## चिन्तनप्रभेदाः

### भावः (Concept)

भावोऽपि चिन्तनप्रकार एव। संकल्पनप्रत्ययपदे अपि अस्मिन्नर्थे केचनोपयुञ्जते। पूर्वं बिंबं बिंबनं कल्पनां चाधिकृत्योक्तम्। मनसि जायमानो बिंबः वस्तुविषयको भवति। घटं दृष्टवतः यत् घटज्ञानं जायते तत् वस्तुविषयकं वर्तते। कदाचित् वस्तुगतधर्मविषयकोऽपि स्यात्। घटत्वविषयकं ज्ञानमेतादृशम्। एतादृश (सामान्य) धर्मविषयकज्ञानस्यात्र भावः (Concept) इति निर्देशः क्रियते। भावश्च यथा वस्तुविषयकः यथा च वस्तुगतधर्मविषयकश्च भवति एवं वस्तूनां पारस्परिकधर्मतुलनविषयश्च (Relation) स्यात्। अत एव देवदत्तः यज्ञदत्तात् स्थूलतरः ; विष्णुदत्तात् उन्नततरः इत्यपि भावो जायते।

इदानीं, 'भावो (Concept) नाम कः? भावज्ञानं (Concept formation) च कथं जायत' इत्युच्यते। अस्मिन् प्रसंगे शक्तिग्रहविषये अस्माकं शास्त्रकाराणां मतं साहाय्यं कुर्यादिति तन्निर्देशः क्रियते। पदस्य कुत्र शक्तिरिति विचारे, जातौ शक्तिं वाञ्छन्ति केचन। गोपदेन गोत्वजातौ शक्तिग्रहणं जायते, लाघवात् ; व्यक्तौ शक्तिग्रहणे आनन्त्यादिति कथयन्ति। बालः गोपदनिर्देशपुरस्सरं द्वित्राणां गवां दर्शनानन्तरं चतुर्थीं गां दृष्ट्वा इयं गौरिति प्रत्येति। तत्र किं कारणमिति पर्यालोच्यते। द्वित्रासु गोषु स्थितं गोत्वरूपं धर्मं (भावं) दृष्ट्वा तादृशधर्मवति अन्यस्मिन् पिण्डेऽपि गां प्रत्यभिज्ञाय इयमपि गौरिति भावं गृह्णाति। यदि वस्तुतः व्यक्तौ शक्तिः स्यात् तर्हि यां यां व्यक्तिं दृष्टवान् बालः तां तामेव व्यक्तिं गोपदवाच्यां मन्येत। गोज्ञानं यदीष्यते, तर्हि जगति स्थितानां निखिलानां गवां दर्शनं बालस्य कारयितव्यं स्यात्। गतानां वर्तमानानां इतो भविष्यन्तीनां च गवां संख्यायाः निर्णयाभावात् (आनन्त्यात् अशक्यत्वाच्च) तादृशशक्तिग्रहणमशक्यमिति कथयन्ति। व्यक्तौ

शक्तिग्रहणमनुभवविरुद्धं च। अत एव "शक्तिर्जात्याकृतिविशिष्टव्यक्तौ विश्राम्यती"ति[1] कथयन्ति। एवं गोत्वादिधर्मग्रहणं जायते इति वदन्ति च। आधुनिका विज्ञानिनः भावग्रहणं एवं वर्णयन्ति। सामान्यधर्मवतां बहूनां पदार्थानां ज्ञानं पुरस्कृत्य कश्चन आशयः मनसि स्वयं जायते। तस्य आशयस्य 'भावः' इति नाम। बालः कश्चित् वृक्षशब्दश्रवणे स्वगृहनिष्कुटस्थं वृक्षमेव स्मरेत्। किन्तु इदं पदं जगति स्थितं सर्वमपि वृक्षजातं सूचयति। सर्ववृक्षगतान् साधारणधर्मान् व्यञ्जयति। ततश्च प्रवयाः कश्चित् वृक्षव्यक्तिस्मरणं विनापि वृक्षधर्मस्मरणपूर्वकं वृक्षत्वजातिं स्मर्तुं शक्तो भवति। कस्मात्? प्रवयास्तु धर्मं पृथक् कृत्वा ज्ञातुं शक्तो वर्तते। इयं च शक्तिः अनुभवात् जायते। वस्तुषु विद्यमानानां सामान्यधर्माणां ज्ञानम्, तेषां धर्माणां चिह्नभूतेन वाचकशब्देन संबन्धकरणम्, ततश्च तच्छब्दस्य अन्येषु तादृशवस्तुषु वाचकतया उपयोगः इति एतस्य सर्वस्यापि भावोत्पत्तिप्रक्रिया (Concept formation) इति नाम।

भावग्रहणे प्राधान्येनोपायद्वयमपेक्ष्यते। बह्वीषु व्यक्तिषु दृष्टानां धर्माणां विभज्यावगतिः (Abstraction) प्रथमोपायः। गोदर्शने सास्नादिमत्त्वस्य गोमात्रवर्तित्वेन अवगतिः प्रथमं भवति। तदनन्तरं एवमवगतस्य धर्मस्य सामान्यीकरणं (Generalisation) [2]द्वितीयोपायः। सर्वासां गवां सास्ना वर्तते इति ज्ञात्वा, सास्नादिमतां पिण्डानां गोजातौ अन्तर्भावनं अत्र सामान्यीकरणेनाभिप्रेयते। अन्यदुदाहरणम्। प्रथमं बालः कार्पासकृतसारमेयप्रतिमया क्रीडन् तत्र प्रयुक्तं सारमेयपदं शृणोति। ततः दारुमये शुनि, ततः श्वचित्रे च तदेव पदं प्रयुक्त-

---

1. मुक्तावली-शब्दखण्डे।

2. "The process of generalization is the process of extending the concept to include objects which possess a quality in common with other objects but which have not been experienced as any of the objects in the abstracting process" - *General Psychology*, Asher and others, p. 355.

माकर्णयति। अनन्तरं गृहमागतेन केनापि आनीतं वास्तविकं सारमेयं पश्यति। ततः चतुष्पात्त्वं ज्ञात्वा मार्जारमपि सारमेयं मन्येत। पश्चाच्च सारमेयमात्रगतान् कांश्चन साधारणधर्मान् पृथक्कृत्य जानाति। तेषां धर्माणां सूचकं पदं सारमेय इति चावगच्छति। ततः एषां धर्माणां पूर्वदृष्टश्वव्यक्तितः भिन्नासु श्वव्यक्तिषु दर्शनात् ता अपि सारमेयपदेन निर्दिशति। एवं भावग्रहणे क्रमेण जाते बालः व्यक्तिस्मरणं विनापि सारमेयपदार्थं मनसि चिन्तयितुं शक्तो भवति। इदं च भावग्रहणं क्रमशः अनुभवाज्जायते। भावश्च न केवलं वस्तुगतधर्मविषये किन्तु सत्य-अहिंसा-नीति-आर्जव-आरोग्यादिविषयेऽपि मनसो विकासात्परमेव(Maturity) जायेत।

पाठशालामागच्छतां बालानां केषांचित् भावग्रहणमेव न स्यात्। केषांचित्तु तत् अपूर्णं स्यात्। केषांचित् दोषयुक्तं च भवेत्। तस्मादुपाध्यायाः शोभनभावोत्पादने प्रयतेरन्। अत्र केचनोपाया वर्तन्ते।

श्लोकार्थस्य तात्पर्यस्य च सम्यक् विशदया भाषया वर्णने कृते एव भावः बालानां मनसि सुष्ठु उद्भावितो भवेत्। प्रश्नोत्तराभ्यां च भावग्रहणं कर्तुं शक्यते। अनेनोपायेन दुष्टमपूर्णं च भावग्रहणं शोध्यते। आगमनप्रणाली च भावं सम्यगाविर्भावयेत्। सत्यधर्मादिबोधने बहून्युदाहरणानि वक्तव्यानि। वस्तूनां सम्यगवेक्षणमपि भावग्रहणे उपकुर्यात्। तस्मात् सम्यगवेक्षणाय बालाः प्रेर्या भवन्ति। भाषा च भावग्रहणे प्रधानं साधनं भवति। मानवाः स्वाशयं भाषयैवाविष्कुर्वन्ति। स्पष्टार्थैः पदैः प्रतिपाद्यमानोऽर्थः सम्यक् गृह्येत। भावः, वक्तुः हृदये तदभिलापकशब्देन सहैवोत्पद्यते; भावस्य शब्दस्य चाविनाभावो वर्तते। शब्दं विनार्थः कदापि मनसि पृथगवस्थितिं न प्राप्नोति। अत एव कालिदासः "वागर्थाविव संपृक्तौ[1]" इति वागर्थयोः नियतसाहचर्यमभिधत्ते। "इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्। यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते"[2] इति दण्डिवाक्यमपि शब्द (भाषा) प्रभावं सूचयति। भाषण-

1. रघुवंशे। 2. काव्यादर्शे।

सामर्थ्यसत्त्वादेव मानवः मृगादिभ्यः विशिष्टो भवति । नागरिकतायां प्रगतिमांश्च। भाषयैव स्वाशयमाविष्करोति ; परेषामाशयं चावगच्छति । भाषैव चिन्तने प्रधानतमं साधनमिति विमृशन्तः उपाध्यायाः समुचितैः शब्दैः बालानां मनस्सु अमूर्तानपि विषयानधिकृत्य भावान् सुष्ठूत्पादयितुं प्रयतेरन् ।

## निश्चयः (Judgement)

तर्कणरूपचिन्तनमधिकृत्य क्रियमाणात् विचारात् पूर्वं निश्चयं निश्चयकरण-प्रक्रियां चाधिकृत्य किञ्चित् ज्ञातव्यमेव । भावाश्च मनसि पृथक् परस्परमसम्बद्धा न वर्तन्ते । यदा उभौ परस्परसम्बद्धौ भावौ परिशीलितौ, तयोश्च सादृश्यं वैसादृश्यं वा विचारितं, गुणाः दोषाश्चावगताः, तदास्माकं मनसि तावधिकृत्य कोऽपि विनिश्चयः स्वयमेवाविर्भवति । निश्चयस्य मूलं कारणं पदार्थयोः सम्बन्ध-ग्रहणमेव । अश्वो धावतीत्युक्ते अश्वस्य धावनस्य च सम्बन्धः अवगम्यते । 'धर्मो रक्षति रक्षितः' इत्युक्ते अमूर्तस्य धर्मस्य तद्गतरक्षितृत्वस्य च सम्बन्धोऽव-गम्यते । एकस्मिन्नपि विषये क्रियमाणा सुनिश्चितावगतिरपि अत्र निश्चयपदेन व्यवह्रियते । भावग्रहणेऽपि निश्चयस्य भागो वर्तते । प्रत्यक्षेणावगतानां अंशानां सन्तोलनं क्रियते । अत्रापि निश्चयकरणमुपकरोति । निश्चयः अस्माकं सर्वेष्वपि दैनंदिनकार्येषु वर्तते । बहवो निश्चयाः प्रतिदिनं प्रयत्नं विनापि क्रियन्ते। अस्वस्थं शिशुं दृष्ट्वा माता भिषजमपृष्ट्वापि सद्यो निश्चिनोति 'शिशुरस्वस्थः वर्तते' इति । अस्यान्तःप्रज्ञानिर्णयः (Intuitive judgement) इति नाम । केचन निश्चयास्तु विचारात् परमेव भवेयुः । प्रश्नदानात्परं निश्चित्योत्तरदानाया-वकाशो विद्यार्थिभ्यो देयः । केचनोपाध्यायाः विलम्बमसहमानाः स्वयमेवोत्तरं (निश्चयं) कथयन्ति । एवं संवर्धिताः विद्यार्थिनः निश्चितमुत्तरं दातुमसमर्थाः पर-मुखप्रतीक्षापरा जायन्ते । विद्यार्थिभ्यः एकरूपोत्तरलाभापेक्षया विद्यार्थिभिः क्रियमाणं बहुमुखं चिन्तनमेव उपाध्यायोद्देश्यं भवितुमर्हति प्रश्नकरणे । यथा विद्यार्थिनां चिन्तनं वर्धयेत्, निश्चयकरणे च तानुद्योजयेत् तथा प्रश्नाः देया भवन्ति उपाध्यायैः । यदि बालाः निश्चयकरणे प्रशिक्षिता भवेयुस्तर्हि संकटकालेऽपि

स्वयमेव विनिश्चित्य समुचितमुपायं स्वीकुर्युः, आत्मप्रत्ययवन्तश्च भवेयुः। अविचार्य सहसा केचिन्निश्चिन्वन्ति। निश्चयश्चाबद्धो भवति।

**अबद्धनिर्णये कारणानीमानि भवन्ति**। समस्यायाः पूर्णं रूपं केचन न सम्यगवेक्षन्ते। केचित् चिन्तनमकृत्वा सद्य एव निश्चये अवपतन्ति। केषांचित् केषुचिद्विषयेषु अहेतुकः प्रद्वेषः (Prejudice) वर्तते। केचन सर्वं विषयं स्वाशयानुरोधं पश्यन्ति; न तु मध्यस्थदृष्ट्या। केचित्तु परोक्तौ प्रत्ययवन्तः परकृतं निश्चयमेव शुकवत् कथयेयुः। 'मूढः परप्रत्ययनेयबुद्धि'[1]रिति कालिदासः।

निश्चयकरणेऽपि प्रशिक्षणं दातव्यमुपाध्यायैः। समस्यां कामपि दत्त्वा विद्यार्थिभ्यः स्वातन्त्र्येण चिन्तनाय पर्याप्तः अवकाशो देयः। समस्याविषये वादविवादगोष्ठी चोद्भावनीया। तत्राशयाविष्करणाय स्वातन्त्र्यमपि देयम्। उपाध्यायाः केचन स्वाशयमेव निर्बध्य विद्यार्थिनां बुद्धौ निवेशयन्ति। दैनन्दिनिकमुख्यविषयमधिकृत्य चर्चाकरणे प्रोत्साहनं कार्यम्। विज्ञानाध्ययने वस्तूनां तत्कार्याणां च प्रदर्शनेन फलावगत्यै विद्यार्थिनः प्रेरणीया भवन्ति। श्लोकतात्पर्यस्य व्यङ्ग्यार्थस्य चावगतौ साहाय्यं कार्यम्। इतिहासाध्ययने इतिहासनायकानां कार्यवर्णनेन तदुद्देश्यानुमाने प्रवर्तनं कर्तव्यम्। संगीतादिषु शुद्धस्याभासस्य च भेदज्ञानाय उपायाः कथनीयाः। सम्यगवेक्षणाय विद्यार्थिनः उपदेष्टव्याः। यद्विषयकनिश्चयः कर्तव्यो वर्तते तद्विषयकपूर्वज्ञानोत्पादनमपि उपाध्यायैः कर्तव्यम्। उपाध्यायात् भीताः बालाः शोभनं निश्चयं कर्तुं असमर्था भवन्ति। तस्मादुपाध्यायादभयमपेक्ष्यते। मुद्रितपुस्तकप्रतिपादितेषु विषयेषु केचन अतिश्रद्धां प्रदर्शयन्ति। तां श्रद्धामाधारीकृत्य क्रियमाणो निश्चयः अबद्धो भवेत्। पुस्तकोक्तमपि सम्यग्विचारणीयमिति वक्तव्या विद्यार्थिनः। 'द्यूतं **पुस्तकशुश्रूषा** नाटकासक्तिरेव च। स्त्रियः तन्द्री च निद्रा च विद्याविघ्नकराणि षट्'' इति स्मृतिचन्द्रिका पुस्तकशुश्रूषामपि विद्याविघ्नकारिणीं कथयति।

---

१. मालविकाग्निमित्रे।

## तर्कणम् - (Reasoning)

मनसो व्यापारस्य सामान्यं नाम चिन्तनमिति। तदपि बहुप्रकारं वर्तते इति विदितमेव। [1]भावचिन्तन-निर्माणपरचिन्तन-विवेचनात्मकचिन्तन - निगमनात्मकचिन्तन - कल्पनात्मकचिन्तन - आगमनात्मकचिन्तन-निर्दुष्टचिन्तनानि इति चिन्तनप्रकाराः निर्दिश्यन्ते। चिन्तनप्रकारेषु तर्कणमेव अत्युत्तमं भवति। इदमेव चिन्तनस्य पूर्णव्यापारात्मकं (Complete act of thinking) वर्तते इत्यभिधातुं शक्यते। पूर्वं जातान् बहून् अनुभवान् संकलय्य तेषां परस्परसम्बन्धग्रहणेन प्रत्यग्रसमस्याविषये समीचीनोत्तरकरणाय मनसा क्रियमाणं चिन्तनं तर्कणं भवति। यदा कापि समस्या जायते तदैव तर्कणमपि उद्भवति[2]। 'कस्यामपि कक्ष्यायां षष्टिः विद्यार्थिनो वर्तन्ते। तेषु द्वात्रिंशत् विद्यार्थिनो आन्ध्रीं गैर्वाणीं वा न पठन्ति। यदि विंशतिर्बालकाः आन्ध्रीं अष्टादश च संस्कृतवाणीं पठन्ति तर्हि कति बालाः उभयीमपि पठन्ति[3]?' संख्याज्ञानायात्र कापि समस्या वर्तते। प्रवयसस्तु 'भाषाद्वयाध्यायिनो विद्यार्थिनः दश' इति झटिति कथयेयुः। कथम्? आवापोद्वापाभ्यां संख्या ज्ञायते। तथा च यदा कापि समस्या स्वयमुपस्थिता भवति तदैव बुद्धिः तर्कणाय प्रयतते। पर्वते धूमं दृष्ट्वा वह्निसत्तामनुमिनोति, पर्वतो वह्निमान् धूमादिति। सर्वत्र तर्कणे किमपि उद्देश्यं सामान्यतो भवति। स्पष्टं ज्ञातेऽपि विषये तर्कः सन्तोषार्थं जायते। "प्रत्यक्षपरिकल्पितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः" इति तार्किकाः। प्रतिदिनमस्माकं जीवने बहवः समस्याः उद्भवन्ति। समस्योत्तरदर्शनेनैव अस्माभिः जीवनं समीचीनं वर्तयितुं शक्यम्। समस्योत्तरदर्शने बहून्युत्तराणि भायुः। उत्तरगतानामंशानां परस्परसम्बन्धस्य दर्शनम् (Eduction of relations),

---

1. Thinking–conceptual, creative, critical, deductive, imaginative, inductive, & sound;
2. The thinking or reasoning is a problem-solving activity.
3. रास्-महोदयेन दत्ता समस्या ईषत् परिवर्तिता। P. 212.

संबद्धानां च दर्शनम् (Eduction of correlations) इति इदमुभयं प्रधानमत्र। सर्वेषामपि तर्कणे शक्तिर्वर्तते। परं ये बुद्धिमन्तः तेषामियं शक्तिरधिका। केचित् कठिनतराः समस्याः द्रुततरं उत्तरयितुं समर्था वर्तन्ते। केचिन्न। केषांचिदिदं कौशलं स्वतो भवति। केषांचित् शिक्षणात्। केषांचिदुत्तरदर्शनमसाध्यम्। कासांचित् समस्यानामुत्तरदानं बुद्धिमतामपि असुकरम्। बीजाङ्कुरन्यायः इदं सूचयति।

अथ का नाम समस्या? मानवः कश्चन किमपि लक्ष्यमुद्दिश्य प्रवर्तते। तत्र यदि विघ्नो भवति तदा उद्देश्यप्राप्तेः पूर्वं या दशा वर्तते सैव समस्यारूपं प्राप्नोति। तर्कश्च विघ्नं परिहृत्य लक्ष्यप्राप्त्यै उपकरोति। समस्याया अभावे तर्कस्योत्थानमेवं न भवति। अकन्यापितुः दुहितृविवाहचिन्ता नैव जायते। समस्योत्तरदर्शने पञ्च सोपानानि वर्तन्त इति ड्यूयी (Dewey)–महाशयः अभिप्रैति।

1. **प्रथमं सोपानम्**—समस्यावगतिः (Cognizing the problem)। इदमेव समस्योत्तरदर्शने प्रथमं सोपानम्। 'इयं समस्या मदीया; मम जीवनेन संबद्धा; यदि उत्तरं न दृश्येत तर्हि मदीयं कार्यं विहतं भविष्यति' इति समस्याविषये स्पष्टं ज्ञानं स्वकीयत्वबुद्धिश्च अपेक्ष्यते। परकीयां समस्यामधिकृत्य न कोऽपि आत्मानं क्लेशयेत्। अत एवोक्तम्, 'न हि जानपदं दुःखमेकः शोचितुमर्हति' इति।

कथं जयः परीक्षायां प्राप्यः? जलप्रणाल्यां जलं कथमायाति? कुतः शिशुः रोदिति? दुहितृविवाहाय कथं धनं प्राप्तव्यम्? इत्येवं समस्याज्ञानं प्रथमं जायते।

2. **द्वितीयं सोपानम्** – समस्योत्तरदर्शनायापेक्षितानामंशानामन्वेषणम् संकलनं च (Collecting the relevant data)। उदरशूलं, शरीरपीडा, क्षुधा वा शिशुरोदने कारणं स्यादिति, दुहितुः विवाहाय मित्रेभ्यः ऋणादानम्, ऋणसमितेर्वा, क्षेत्रारामादिविक्रयेण वा धनप्राप्तिरित्येवं अंशानां संकलनम्।

3. **तृतीयं सोपानम्**–(Formulating hypothesis) शिशुः क्षुधया रुद्यात् । मित्रेभ्यो धनग्रहणमिति प्रथममुपायनिश्चयः ।

4. **चतुर्थं सोपानम्**—परीक्षणं सत्यापनं वा। यः उपायः स्वीकृतः तस्योपयोगः, तस्य फलसाधकत्वं वर्तते किमिति परीक्षाकरणम् । शिशवे क्षीर-दानम्, रोदनाविरामः, मित्रोपगमः, याचनं, धनाप्राप्तिः । अत्र स्वीकृतोपायस्य फलसाधकत्वं नास्तीत्यवगतिर्भवति । रोदने अन्यकारणाभावे उदरशूलमेव कारणमिति निश्चित्य भेषजदानम् । उदरशूलनिवृत्तिः, मित्राद्धनालाभे क्षेत्रविक्रयः एव साधनमिति निश्चयः, विक्रयेण धनप्राप्तिः । अत्रोपायस्योपायत्वनिर्धारणम् ।

5. **पञ्चमं सोपानम्**—सत्यापनेन दृष्टस्योपायस्य पुनरुपयोगः (Application of verified hypotheses) । उदरशूले शिशोः रोदनं एवं स्यादिति ज्ञात्वा पुनरपि रोदने भेषजदानमित्यादि यथासम्भवमूह्यम् । पञ्चमं सोपानं विज्ञानादिविषयेऽतितरामुपयुज्येत ।

एतान्येव सोपानानि ईषत् परिवर्तनेनापि वर्ण्यन्ते अन्यैः । (1) स्थूलतया समस्यावगतिः (2) तस्या एव निर्धार्यावगमः (3) उपायानां मनस्याविर्भावः (4) तेषां प्राबल्यदौर्बल्यपरीक्षणम् (5) परीक्षणेनोचितोपायनिश्चयः इति । सर्वत्र तृतीयपर्वणः प्राधान्यं वर्तते । अत्र सर्वे विषयाः बुद्धिमतामन्तःप्रज्ञया अवगता भवन्ति । मन्दास्तु अन्यानाश्रित्य उपदेशं गृह्णन्ति । समस्यायाः पूर्णावगत्या, निरन्तरध्यानेन, विमर्शेन, वैज्ञानिकमनसा च जायते उत्तरज्ञानम् । वाचिक-कायिक-मानसिकाख्येषु सर्वेष्वपि कार्येषु तर्कात्मकचिन्तनमेवातिश्रमसाध्य-मिति सर्वैरपि स्वस्वानुभवेन विदितमेवेदम् ।

सर्वत्र तर्के आगमनम् ( Induction ) निगमनम् (Deduction) इत्युपायद्वयमसदविदितमेव प्रवर्तते । यदा कोऽपि निश्चयः बहूनामुदाहरणानां दर्शनेनावगतो भवति तर्हि तत्र आगमनमुपायत्वेन गण्यते । उदाहरणेभ्यो नियमग्रहणमागमनम् । तप्ते अयःपिण्डे जले वाते च विशालतां जायमानां

दृष्टा एवं नियमः स्वीक्रियते यत् औष्ण्यं पदार्थान् विशालयतीति । अयमेव सिद्धान्तः; निगमनेनाप्यवगन्तुं शक्यः । औष्ण्यं पदार्थान् विशालयतीति प्रथमं नियमावगतिः, तदनन्तरं चास्य नियमस्य सत्यता घनद्रव्ये द्रवद्रव्ये वायौ च प्रयोगात् दृश्यते । तथा च नियमात् निदर्शनगमनं निगमनं भवति । पूर्वमागमनेनावगत्य निगमनेन पुनरवलोकनम्, प्रथमं निगमनेनावगत्य पश्चादागमनेन वैशद्यसम्पादनं च कर्तुं शक्यते । अनयोः प्रणाल्योरुपयोगः व्याकरण-गणित-विज्ञानाद्यध्ययनेषु वर्तते । बालेषु केचित् श्रमासहिष्णवो निगमनप्रिया भवन्ति; उपाध्यायाश्च । निगमने उक्तानां प्रायशो निराक्षेपांगीकारो वर्तते । पूर्वकाले च मानवाः शास्त्रोक्तं सर्वमप्याचारव्यवहारादिकमङ्गचकुर्वन् । इदानीं तु आक्षेपः क्रियते । नव्यविज्ञानरीत्या आचारादीनां समर्थनं कर्तुं उत्तरं दातुं च प्रयत्यते । व्याकरणं पूर्वं निगमनप्रणाल्याध्याप्यते स्म । इदानीमप्यध्याप्यमानं वर्तते । आगमनप्रणाली विलम्बं जनयति । निगमने तु लाघवं वर्तते । परं तर्कस्यात्र नास्त्यवकाशः । छान्दोग्योपनिषदि आगमनप्रणाल्या क्रियमाणस्य अध्यापनस्य किमपि शोभनमुदाहरणं वर्तते[1] । गुर्वी पाठ्यचर्या चाचार्यान् निगमनप्रणाल्याश्रयणे बलात् प्रेरयति । आगमनस्य निगमनस्य वा ऐकान्त्येनोपयोगः उपाध्यायमकुशलं सूचयेत् । आगमनं निगमनं च परस्परं विरुद्धे साधने इति न मन्तव्यम् । आगमननिगमनयोः परस्परसाहाय्यकारित्वं वर्तते । एकेनोपायेन साधितस्यान्येन पुष्टिः सम्पाद्यते । ततश्च समयानुगुणमागमनं निगमनं वा पर्यायेण द्वे वा उपयुञ्ज्यादाचार्यः ।

---

1. लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति । स ह तथा चकार । तँ होवाच यद् दोषा लवणमुदकेऽवाधाः, अङ्ग ! तदाहरेति । तद्धावमृश्य न विवेद ।

यथा विलीनमेवाङ्ग । अथास्याऽऽदावाचामेति; कथमिति । लवणमिति । मध्यादाचामेति; कथमिति लवणमिति । अन्तादाचामेति; कथमिति । लवणमिति । अभिप्रास्यैतत् अथ मोपसीदथा इति । तद्ध तथा चकार । तच्छश्वत् संवर्तते । तँ होवाच— अत्र वाव किल सत् सौम्य व निभालयसे अत्रैव किलेति ॥ छान्दोग्ये 6-13,

आधुनिकशिक्षायां केवलविषयाध्यापनेनोपाध्यायस्य कार्यमवसितं न गण्यते। बालानां तर्कणशक्तिवर्धनमपि उपाध्यायस्य मुख्यं कार्यम्। एवं प्रशिक्षिता एव विद्यार्थिनः दुरवगाहानामपि विषयाणामवगतौ स्वयमेव प्रयतेरन्, जीवने जायमानामपि समस्यामुत्तरयितुं समर्था भवेयुः। कक्ष्यायां क्रियमाणे अध्यापने बहवो विद्यार्थिनः श्रद्धां न प्रदर्शयन्ति। तत्र निदानमुपाध्यायैः कैश्चित् क्रियमाणमध्यापनमरुचिपूर्णं वर्तते। 'मम अभिलषितं फलमिदमध्यापनं साधयिष्यती'ति बुद्धिः बालानां नोत्पाद्यते। अध्यापनोपक्रमे एव प्रस्तावनादशायां कापि रुचिरा समस्या उत्थापनीया। यदा च समस्योपस्थाप्यते तदा तदुत्तरदर्शनाय बालाः कौतुकं प्रदर्शयेयुः। सद्यः समस्यायां अध्ययने च स्वकीयत्वबुद्धिर्जायेत। ततश्च सोत्साहमध्ययने प्रवर्तेरन्। डाल्टन्प्रणाली, स्वतःशोधप्रणाली (Heuristic method), समस्याप्रणाली (Problem method) च तर्कणशक्तिं वर्धयन्ति। उपाध्यायस्याध्यापनेन ऊर्जस्विना (Dynamic) भाव्यम्। तदा तदोपाध्यायः विषयमधिकृत्य आपत्तिमपि (Challenge) प्रदर्शयेत्।

बालानां तर्कणशक्तिवर्धनोपायाः केचन निर्दिश्यन्ते।

1. प्रथममुपाध्यायेनैव एतादृशशक्तिमता भाव्यम्। बहवः उपाध्यायाः चिन्तने स्थितं क्लेशमसहमानाः चिन्तनमथवा तर्कणं परिहरन्ति। तत्र श्रद्धामपि न प्रदर्शयन्ति।

2. रुचिराः समस्याः तदा तदा देयाः। काकदन्तपरीक्षारूपाः समस्याः आदौ न देयाः।

3. परिवेषे जगति जातस्य परिवर्तनस्य ज्ञानमप्युत्पादनीयम्। कालाननुगुणां समस्यामधिकृत्य विचारयन्तः छात्राः लोकानभिज्ञाः सन्तः कूपमण्डूकतुल्या भवेयुः।

4. समस्यादानात्परमुपाध्यायेनैव समाहितिर्नैव देया। सः समस्योत्तरदर्शनाय मार्गं प्रदर्शयेत्। केचनोपाध्यायाः श्लोकार्थं स्वयमेव विवृण्वन्ति।

श्लोकाध्यापने आकांक्षाप्रणाली (प्रश्नोत्तरप्रणाली) अनुसर्तव्या। यथा विद्यार्थिनः श्लोकार्थं स्वयमेवावगच्छेयुः तथोपाध्यायैः आकांक्षाप्रणाल्यपि उपयोक्तव्या। लघु-सूचितान् पूर्ववृत्तान्तान् उत्प्रेक्षाद्यलङ्कारांश्च छात्राः स्वयमवगन्तुं अशक्ता भवेयुः। तत्रोपाध्यायाः विस्तरेण व्याख्यां कुर्युः।

5. काव्याध्यापनेऽपि उच्चतरकक्ष्यासु समस्याप्रणाली उपयोक्तुं शक्यते। नैषधे दश श्लोकाः अवगन्तव्यत्वेन निर्दिश्यन्ते। व्याख्याकारैः कैश्चित् लिखितानि व्याख्यानानि चावलोकनार्थं दीयन्ते विद्यार्थिभ्यः; संस्कृतकोशग्रन्थाश्च। विद्यार्थिनः व्याख्यानानि कोशग्रन्थांश्चोपयुज्य श्लोकार्थं तद्गतान् व्याकरणांशांश्चावगच्छेयुः। टिप्पण्यादिकमपि स्वयं लिखेयुः। परेद्यवि कक्ष्यामागत्य विद्यार्थिनः स्वावगतमर्थमेकैकशो व्याख्यान्ति। अर्थावगतौ स्थितं क्लेशं अथवा दोषं उपाध्यायः अन्यच्छात्रद्वारा स्वयं वा निरस्येत्।

तर्कणविषये अनुकूलावस्थापि उत्पादनीयोपाध्यायैः।

1. चिन्तनं विना परोक्तस्य सर्वस्यापि स्वीकारः तर्कणं प्रतिबध्नीयात्। परेषु पूर्वं विश्वासं कृतवन्तः केचन पश्चात् तैरेव वञ्चिता भवन्ति। अतः चिन्तनात्परमेव पराशयस्वीकरणे परिचयो देयः।

2. केषुचिद्विषयेषु निर्निमित्तद्वेषः केषांचिद्वर्तते। अयं द्वेषोऽपि(Prejudice) तर्कणशक्तिं विहन्ति। ततः द्वेषपरित्यागायोपदेशः कार्यः। गुणं दोषं च विविच्य दर्शने शक्तिः संपादनीया। प्रियाप्रिये परित्यज्य, मनसः ताटस्थ्यं प्राप्य, वस्तुदर्शनाय मतिरुत्पादनीया।

3. केचन परोक्तं नैव शृण्वन्ति। सर्वं विषयमधिकृत्य पूर्वमेव कश्चनाशयः कल्पितः स्यात् कैश्चित्। इदमपि तर्कणाय अवकाशं न ददाति। परोक्तग्रहणाय मनःकवाटस्य सम्यगुद्घाटनं कर्तव्यम्। परोक्तमपि श्रोतव्यम्।

4. पूर्वसिद्धैः संप्रदायैः केचनात्मानं नियमयन्ति। सम्प्रदायविरुद्धं कमपि विषयमधिकृत्य चिन्तयितुं केचन नेच्छन्ति। ततश्च तादृशविषये तर्कणं न प्रवर्तेत।

5. अन्येषां जनानां, अन्यजनसम्प्रदायानां च परिचयोऽपि तर्कणमुत्पादयति। किमस्मत्सम्प्रदायः समीचीनः उतान्यदीय इति विचारो जायते।

6. कथं तर्कणं कर्तव्यमिति तर्कणापेक्षिता उपाया अपि निरूपणीयाः।

**स्मृतिः, विस्मरणं च** (Memory and forgetting)

प्राणिनामयं निसर्गादेव सिद्धो वर्तते, यत् अनुभूतानामंशानां मनसि सङ्कलय्य धारणम्। अस्याः शक्तेः स्मृतिरिति (Memory) नाम। स्मृतिशक्त्या पूर्वानुभूतस्यांशस्य (आशयस्य) पुनरपि अधुना चिन्तनम्, अधुना चिन्त्यमानस्य च पूर्वानुभूतत्वेन प्रतीतिः इति उभयमत्र स्मरणे प्रधानम्। स्मरणं तदैव यथार्थं स्यात् यदा स्मर्यमाणे विषये स्मर्यमाणत्वबुद्धिः अथवा प्रत्यभिज्ञायमानत्वं भवति। पूर्वानुभूतानाशयान् सम्यक् मनसि धृत्वा अधुना स्मरणकाले प्रत्यक्षतां आपाद्य, यदि विचिन्त्य कार्येषूपयुङ्क्ते मानवः तर्ह्येव स्मरणं यथार्थं स्यात्। एवं स्मरणप्रापणं च स्मृत्या स्मरणशक्त्या—( Memory ) क्रियते। 'पूर्वानुभूतस्य स्मरणं स्मृतिः'[1] इति सामान्यतः लक्षणं उक्तं वुड्वोर्त् (Woodworth)-नामकेन मनोविज्ञानिना। स्मृतिः स्मरणमिति अत्रोपयुज्यमानयोः पदयोः अर्थः विभज्य ज्ञातव्यः। स्मृतिर्नामांशचतुष्टयवती काचन शक्तिः (स्वभावो वा मनसः)।

आंग्लेय्यामस्य मेमोरि ( Memory ) इति व्यपदेशः। स्मरणं तु स्मृतेः कार्यं भवति। स्मृतिशक्तिरेव स्मर्यमाणं विषयं मनोयवनिकायां सन्निधापयति। स्मरणं तु 'रिमेम्बेरिङ्ग्' ( Remembering ) इति पदेन निर्दिश्यते। संस्कृतभाषायामुभयोः पर्यायत्वम्, 'स्मृतिस्मरणधीच्छासु शास्त्रे (हैमः)' इत्यनेन प्रतिपाद्यते।

---

1. "Memory consists in remembering what has previously been learned". P. 536.

Cf: स्मृतिर्व्यतीतविषया मतिरागामिगोचरा।
बुद्धिः तात्कालिकी ज्ञेया प्रज्ञा त्रैकाल्यगोचरा॥
(विद्याधरचक्रवर्तिनः संप्रदायप्रकाशिका)

यद्यपि स्मृतिः काचन शक्तिरूपा न भवतीति आधुनिका विज्ञानिनः अभिप्रयन्ति । तथापि सा कश्चन स्वभावविशेषः ( Disposition ) इति मन्यन्ते । जीवानां स्वानुभवस्य मनसि धारणे यो गुणः अथवा स्वभावो वर्तते तस्य स्मृतिरिति नाम । अस्य च गुणस्य नीमे ( Mneme ) इति नाम इति पेर्सिनन्न्[1] कथयति । व्यवहारवादिनस्तु एवं स्मृतिं वर्णयन्ति-"स्मृतेः शरीरधर्मत्वेन निरूपणं कर्तुं विज्ञानिनः तद्विषये पर्याप्तं ज्ञानं अद्यावधि यद्यपि न प्राप्तवन्तः ; अथापि, इदमेवेदानीं वक्तुं शक्यं – यत् स्मृतिः तन्त्रिकाकार्यात् परं मस्तिष्के



वुड्वोर्त्

जायमानः कोऽपि अवस्थाविशेषः अथवा विकारः (उदर्कः-after-effect ) भवति इति । एते उदर्काः सामान्यतः 'मस्तिष्करेखाः' ( Brain traces ) अथवा 'स्मृतिरेखाः' ( Memory traces ) इति ज्ञायन्ते । परमेतासां

---

1. "We shall speak of such phenomena as *mnemic* and shall give the name *mneme* to the character of living things which they exemplify." p. 28.

स्वरूपं स्वभावं चाधिकृत्य यदुच्यते तत्सर्वं केवलकल्पनासिद्धमेव। तस्मादेताः रेखाः तासां क्रियाश्च द्रष्टुं शक्यन्ते इति न मन्तव्यम्"[1] इति।

बालानां स्मरणशक्तिः प्रवयसां स्मरणशक्त्यपेक्षया न्यूना वर्तते; इयं शक्तिः बालानां क्रमशः वृद्धिं प्राप्नोति। पञ्चविंशे वयसि पूर्णतां लभते; चतुष्पञ्चाशद्वयःपर्यन्तं अन्यूना वर्तेत; ततः परं शनैः शनैः न्यूनीभवति इति मनोविज्ञानिनः अभिप्रयन्ति।

अस्माभिः सकृत् सम्यक् दृष्टस्य अनुभूतस्य सम्भवस्य च यत् स्मरणं भवति तत् दृष्टस्मरणं (Observational memory) इति कथ्यते। छायाचित्रं प्रकृति-सौन्दर्यं वा दृष्ट्वा तदधिकृत्य क्रियमाणं स्मरणम् अस्योदाहरणम्। इदं स्मरणं साक्ष्य-कथनकाले उपयुज्येत। परोक्तस्य श्रुतस्य अथवा अधीतस्य स्मरणं श्रुतस्मरणं (Rote memory) इति व्यपदिश्यते। अस्य प्राधान्यं पाठशालासु। क्वचित् केवलानां आशयानां अधिगमनं धारणं च भवति। कोऽपि विद्वान् अद्वैतमतमधिकृत्य किमपि वाङ्मुखं कर्तुमिच्छन्, तत्सम्बद्धान् सर्वानपि विषयान् प्रथममवगत्य धृत्वा प्रवचनकाले स्मरेत्। अस्य भावस्मरणम् [1](Ideational memory) इति नाम। अत्र स्मरणसाधनत्वेन कानिचन पदान्यपि उपयुज्यन्ते।

पदाधिक्यसाहाय्यं विनापि भावस्मरणं भवितुमर्हति; यथा भैरवीप्रभृतीनां रागाणाम्। यत्र आशयेन सह सर्वेषां पदानामपि ग्रहणं, धारणं, स्मरणं च तस्य रटितस्मरणं (कण्ठस्थीकृतस्मरणं) इति निर्देशः कर्तुं शक्यते। वेदस्य, रघुवंशादि-काव्यश्लोकानां, पाणिनिसूत्रादीनां च स्मरणमेवं स्यात्।

सर्वत्र स्मरणं अंशचतुष्टयात्मकं वर्तते। यद् अस्माभिः ज्ञातं अधीतं तस्यैव स्मरणं साध्यमिति, **ज्ञानम्** ( Learning or Registration ) प्रथमोऽशः।

---

1. Rex and Margaret Knight p. 160.

2. Ibid p. 158.

अधीतमपि यदि न धार्यते यावत्कालापेक्षं तर्हि स्मरणं न भवतीति **धारणं** (Retention) अपेक्ष्यते । अयं द्वितीयोऽंशः । धारणशक्तेः मेधा इति नाम । 'धीर्धारणावती मेधा' इत्यमरकारः ।

अयं मेधायाः प्रभावः पूर्वतनैरधिगतः । अत एव वटुः समिदाधानकाले 'मेधावी भूयासम्' इति अग्निं प्रार्थयते । उपनीतस्य वटोः चतुर्थे दिने मेधाजननं नाम कोऽपि संस्कारः क्रियते । आयुर्वेदीयाश्च वचाख्यस्य द्रव्यस्य दानं शिशोर्मेधावृद्धिकरं मन्यन्ते[1] ।

एवं ज्ञातस्य मनसि धृतस्य च समये मनोयवनिकायां **प्रत्याह्वानं** (Recall) स्मरणं भवति । इदं च स्मरणं केवलप्रत्याह्वानरूपं वा स्यात्, प्रत्यभिज्ञानरूपं वा (Recognition) भवेत् । प्रत्यभिज्ञाने तु स्मरणं प्रत्यक्षसहकृतं भवति । वाराणस्यां दृष्टस्य देवदत्तस्य पुनरपि तिरुपतौ दर्शने 'सोऽयं देवदत्त' इति **प्रत्यभिज्ञानं** भवति । इदमपि स्मरणविशेषः इति अस्यापि स्मरणे अन्तर्भावः क्रियते मनोविज्ञानिभिः । एवं स्मरणमंशचतुष्टयात्मकमिति **वुड्वोर्त्**प्रभृतयः । तत्र प्रथममंशद्वयं स्मरणकारणम् । उत्तरं द्वयं फलमिति विवेकः । स्मरणविघातकाश्च एकं द्वौ बहून् वा अंशान् बाधेरन् । वृद्धानां वार्धकात् ग्रहणशक्तिः नश्यति । विपदा मस्तिष्काभिघातेन धारणं तिरोभवेत् । कोपभीत्यादयः संवेगाः प्रत्याह्वानं प्रत्यभिज्ञानं वा नाशयन्ति ।

केचिदतिश्रमेण कण्ठस्थीकुर्वन्तोऽपि सद्य एव विस्मरन्ति । केचित्तु सकृत् श्रुतधारिणः, केचित् ग्रहणे मन्दाः धारणेऽतिसमर्थाः । केषांचित् नामसंख्यादिषु स्मरणशक्तिरन्यादृशी । केचित् सकृत् दृष्टं परमुखं नैव विस्मरन्ति । केचित् अतिप्रतिभावन्तः अनुभूतं सर्वं स्मरन्ति । एतेन ज्ञायेत यत् सर्वेषां स्मरणशक्तिः समाना न भवतीति ।

---

1. "अद्भिर्वा पयसाज्येन मासमेकं तु सेविता । वचा कुर्यान्नरं प्राज्ञं श्रुतधारणसंयुतम् ॥" **सालग्रामनिघण्टुः** ।

व्यवहारकाले अस्माभिरुच्यते "देवदत्तस्य स्मरणशक्तिः शोभना" इति। कीदृशं स्मरणं शोभनमिति व्यपदेशार्हमिति विचारः कृतः।

1. अनुभूतस्य स्मरणार्हं धारणं यत्र अल्पेनैव कालेन भवति तत् शोभनं स्मरणं भवति।

2. दीर्घात् कालात् परमपि कस्यापि विषयस्य स्मरणं यस्य नरस्य भवति सोऽपि शोभनस्मरणो वर्तते। दीर्घस्य कालस्यातिपातेन विस्मरणं भवेत्। अत्र स्मरणे कालः विघ्नमाचरेत्।

3. अधीतस्य विषयस्य अपेक्षानुगुणं स्मरणं यदि सद्य एव भवति तर्हि तत् शोभनं स्मरणं भवति। धृतो विषयः सद्य एव मनोमुकुरे प्रतिफलत्यत्र। केषांचित् स्मरणं एवं न भवति; 'जिह्वाग्रे वर्तते, हृदये वर्तते' इति कथयन्तः केचन स्मर्तुमशक्ता भवन्ति।

4. अनुभूतस्य सर्वैरंशैरपि यदि स्मरणं भवेत् तदपि शोभनं स्मरणं भवेत्। इदं स्मरणं यथार्थं स्यात्। अनुभूतविषये न्यूनता अधिकता वा न भवेत्। बहूनामेतादृशं स्मरणं न भवति। विद्यार्थिनो बहवः परीक्षासमये कण्ठस्थीकृतं कृत्स्नं स्मर्तुं न प्रभवन्ति; प्रवक्तारश्च धृतं सर्वं स्मर्तुं न पारयन्ति। यस्य स्मरणशक्तिः पूर्णा स एव सर्वत्र वादगोष्ठ्यादिषु जीवने च विजयी भवतीति अस्त्येव प्राधान्यं स्मरणस्य।

स्मरणमधिकृत्य बहवः प्रयोगाः (Experiments) कृताः। प्रयोगकारिषु प्रथमं स्थानं **एब्बिङ्गौस्**-(1850-1909)—नामकः जर्मनिदेशीयः विज्ञानी स्वीकरोति। अयं स्मरणविषयप्रयोगकाले उपयुज्यमानानां बालानां श्रमः समो भवतु इति बुद्ध्या निरर्थकाक्षरसमुदायं (Nonsense syllables)[1] एव उपयुङ्क्ते स्म। क्वचित् प्रयोगेषु अर्थवन्ति पदानि चोपयुज्यन्ते स्म। **बार्ट्लेटट्**

---

1. SUT, CIV, BAF, SEK, LIF, POX इत्यादीनि अक्षरजातानि; लपे, मोतु, तिष्म, टिभ, नीटि, डह्रु, डाग-प्रभृतीनि च उदाहरणानि भवितुमर्हन्ति।

(Bartlett)-नामको विज्ञानी चात्र प्रयोगान् बहूनकरोत्। स्मरणांशचतुष्टयविषये कृतैः प्रयोगैः केचन नियमाः दृष्टाः आसन्।

### अधिगमविधिः (Method of learning)

कमपि विषयं ज्ञातुं मनसि धर्तुं च पञ्चाशद्वारं पठनं प्रथमं अपेक्ष्यते। किञ्चित्कालानन्तरं धृते विषये कश्चन भागः विस्मृतो भवेत्। पुनरपि तस्यैव कृत्स्नस्य भागस्य कण्ठस्थीकरणाय पञ्चत्रिंशद्वारं पठनं अपेक्ष्यते चेत् तर्हि द्वितीयवारपठने, प्रयत्ने लाघवं वर्तत इति ज्ञायते। शिक्षणेन प्राप्तं इदं लाघवं एवं प्रतिशतरूपेण वर्ण्यते, यत् प्रयत्नानां शते, त्रिंशतः प्रयत्नानां (30%) लाघवं द्वितीयपठने वर्तते इति। कियति कियान् भागः विस्मर्यते इत्यपि अनेन ज्ञातुं शक्यम्।

### धारणविधिः (Law of retention)

विंशतिं श्लोकान् त्रुटिं विना मनसि धर्तुं विंशतिवारं पठति कश्चित्। षण्मासानन्तरं स एव तान् श्लोकान् वक्तुमादिष्टः पञ्चदश श्लोकान् कथयति। एवं चेत् तस्य धारणशक्तिः शते पञ्चसप्ततिका (75%) वर्तते इति वक्तुं शक्यते। इदं एवमपि वक्तुं शक्यम्। तस्य विस्मरणं शते पञ्चविंशतिकं वर्तत इति।

### अत्यधिगमः (Overlearning)

विंशतिवारमधीत्य कोऽपि विंशतिं श्लोकान् धरति। यदि सुदृढं धारणमिच्छति तर्हि ततोऽपि दशवारमधिकतया पठनमावश्यकमिति इदमपि प्रयोगात् ज्ञातमासीत्। कोऽपि विषयः विंशतिवाराध्ययने मनसि धृतः भवति। स एव चत्वारिंशद्वारमधीतः केनापि। तर्हि अधीते कियान् मनसि धार्यते इति अधोवर्तमाना सारणी प्रदर्शयति।

| अध्यायी | चतुर्भ्यः दिनेभ्यः परं स्मृतः। (शते प्रतिशतरूपेण) | सप्ताहचतुष्टयात्परं स्मृतः। (शते प्रतिशतरूपेण) |
|---|---|---|
| विंशतिवाराध्यायी | 25% | 1% |
| चत्वारिंशद्वाराध्यायी | 47% | 5% |

## प्रणोदनविधिः (Prompting method)

कोऽपि कण्ठस्थीकरणाय कमपि भागं द्विवारं त्रिवारं वा प्रथमं पठति। तदनन्तरं तं भागमपश्यन् कथनाय प्रयतते। मध्ये यदि विषयः स्मृतिपथं नायाति तर्हि पुस्तकमवलोकयति। एवं चतुर्थपठने पञ्चवारं पुस्तकं दृष्टवतः तदनन्तरपठनेषु पुस्तकदर्शनसंख्या न्यूनीभवतीति स्पष्टं ज्ञायते। अन्ते प्रणोदनमेव नापेक्ष्यते। अनेन किं विदितं भवतीति चेत् धार्यमाणभागेषु कः कठिनः कश्च ललित इति, अपेक्षितस्य कालस्य परिमाणः कियानिति च ज्ञायते।

## स्मृतिविस्तारः (Memory span)

स्मृतिविस्तारः, तात्कालिकस्मृतिविस्तारः (Immediate memory), दीर्घस्मृतिः (Prolonged memory) इति द्वेधा वर्तते। तत्र तात्कालिकस्मृतिविस्तारः संख्या-निरर्थकाक्षरराशि-अर्थवत्पदैश्च एवं मीयते। संख्यामुपयुज्य क्रियमाणं एवं भवति। दृढतरे पत्रे त्र्यंक (three digits)-चतुरङ्क-पञ्चाङ्कादयः संख्याः पृथक् लिख्यन्ते[1]। एताः संख्याः क्रमशः एकं क्षणं टाचिस्टोस्कोप् (Tachistoscope)-उपकरणद्वारा प्रदर्श्यन्ते—परीक्ष्यश्च संख्यां, विना त्रुटिं, कथयेत्। यः यावतः अङ्कान् (Digits) कथयितुं शक्नोति तस्य तत्सङ्ख्याक एव स्मृतिविस्तारो वर्तते इति ज्ञातव्यम्। यदि कोऽपि सप्ताङ्कान् कथयति तर्हि तस्य स्मरणविस्तारः सप्ताङ्कः इत्युच्यते; मद्रनगर्यां* कृतेन प्रयोगेण पञ्चवर्ष-षट्वर्ष-नववर्षबालानां स्मरण-संख्या क्रमशः चत्वारि-पञ्च-षडिति उपलब्धा। द्व्यक्षरत्र्यक्षरादीनि अर्थवन्ति पदानि[2], केवलाक्षराणि[3] च उपयुज्यापि स्मृतिविस्तारः द्रष्टुं शक्यते। पट्टिका

---

*. मद्रपुरीविश्वविद्यालये मनोविज्ञानविभागाध्यक्षस्य **श्रीषण्मुखस्य** निर्देशनेन कृतानां प्रयोगाणां फलं अत्र सूच्यते।

| 1 | 2 | 3 |
|---|---|---|
| 2 3 5 | शय | य अ |
| 7 4 2 4 | शरभ | त अ क |
| 7 0 3 7 1 | रूपाजीवा | ट ण च व |
| 9 2 4 7 2 3 | लोचमस्तक | प ज्ञ ह र ल |
| 6 5 2 4 4 2 1 | रेवतीरमण | त क घ व ज ळ |
| 8 4 1 2 3 4 2 3 | दशरथकुमार | सु ग र इ ऋ ल क्ष |

दृश्यताम् । संख्यास्मृतिविस्तारापेक्षया पद-अक्षरविषयकः स्मृतिविस्तारः भिन्न एवासीत् ।

स्मृतिं परीक्षितुं अन्योऽपि कश्चनोपायः उपयुज्यते। अस्य युगलसहचारिविधिः (Method of paired associates) इति नाम। अत्र युग्मानि पदजातानि प्रथमं परीक्ष्यस्य प्रदर्श्यन्ते । ततः युग्मगतैकपदप्रदर्शने तद्गतमपरं पदं स्मृत्वा तेन वक्तव्यं स्यात्। युग्मगतानां पदानां च परस्परं अर्थतः शब्दतो वा सम्बन्धो न स्यात्। यदि संबन्धः स्यात् तर्हि एकसम्बन्धिस्मरणेनापरसम्बन्धिज्ञानमिति प्रक्रियया स्मरणं अनायासं भवेदिति तादृशः सम्बन्धः परिह्रियते। संख्याविषयासमीचीनसमीकरणेनापि ( Method of wrong equation ) स्मृतिः परीक्ष्येत ।

अधोदीयमाना पट्टिका दृश्यताम्। सभा इत्युक्ते नदी[1] इति वक्तव्यम्। [2]एवं 4×3 इत्युक्ते पञ्चदशेति परीक्ष्यः कथयेत्। अनेनोपायेनेदं ज्ञायते यत् पदविषये स्मृतिशक्तिरधिका वर्तत इति ।

दीर्घस्मृतिविषये श्लोकानां कण्ठस्थीकृतानां, सप्तभ्यः दिनेभ्यः, एकस्मात् मासात्, मासद्वयाच्च परस्तात् परीक्षणेन कियानंशः स्मृतो भवतीति ज्ञातुं शक्यम्।

एभिः प्रयोगैः अधिगतानि तत्त्वानि उपाध्यायैः मनसि धर्तव्यानि यदा ते विद्यार्थिनः कण्ठस्थीकरणाय प्रेरयन्ति। स्मृतिसम्पादनमपि शिक्षायाः प्रकारविशेष एव। स्मृतिविषये अभ्यासोऽपि देयः ।

---

| 1. सभा–नदी | 2. 4 × 3 = 15 |
|---|---|
| बदरी–प्रासादः | 7 × 8 = 60 |
| दर्वीकरः–लोकालोकः | 8 × 9 = 108 |
| रसातलम्–सेनामुखम् | 4 × 5 = 25 |
| शुनकः–रोहिणी | 5 × 6 = 92 |
| भारवाही–मकरध्वजः | 2 × 7 = 16 |

शोभनस्मृतिसम्पादने इमानि मुख्यानि कारणानि । स्मृतौ प्रथमं शरीरारोग्यं साधनं भवति । परीक्षासमये केचन विद्यार्थिनः आरोग्यमुपेक्ष्यातिपरिश्रम्य च पठन्ति । तत्तु न युक्तम् । द्वितीयं साधनमवधानम् । इदमेव स्मरणस्य मातृतुल्यं भवति । यद्यवधानमध्येये न भवति तर्हि न किमपि ज्ञातं धृतं वा स्यात् । अध्येये विषये अभिरुचिः तृतीयं साधनम् । इयं अवधानस्यापि कारणमिति स्मृतेर्मातामही स्यात् । शिक्षणसमये उत्पादितस्य संस्कारस्य विशदत्वं चतुर्थं कारणं भवति । एकेन्द्रियद्वारा ज्ञानप्राप्त्यपेक्षया बह्विन्द्रियसाहाय्येन प्राप्तं ज्ञानं स्थायि स्यात् । केवलश्रुतापेक्षया यत् श्रुतं दृष्टं स्पृष्टम् आघ्रातं च तद्विषयकस्मरणं स्थायि भवेत् ।

एतेभ्यः परमं प्रधानं साधनमावृत्तिरथवा अभ्यासः । आवृत्तिकरणेऽपि बहवः प्रयोगाः कृता वर्तन्ते । एको गद्यभागः विंशतिवारं पठनेन मनसि धृतः स्यात् । इदं च विंशतिवारपठनं एकस्मिन्नेव दिने विना विरामं कर्तुं शक्यम् । एतादृशपठनस्य निरवकाशावर्तनम् (Unspaced Repetition) इति नाम । प्रतिदिनं पञ्चवारमावर्तनमिति चतुर्षु दिनेष्वपि कर्तुं शक्यम् । अस्य सावकाशम् ( सान्तरम् ) आवर्तनम् (Spaced repetition) इति नाम । अनयोः कतरत् श्रेयः इति विचारे सान्तरावर्तनमेव प्रशस्तं फलं ददातीति **स्टार्च्** (Starch)—नामकेन विज्ञानिना सप्रमाणं निरूपितम् । शीघ्रं ज्ञातं शीघ्रमेव विस्मृतं भवति ; चिरं न तिष्ठतीति प्रथमोपाये दोषः । प्रथमोपाये आयासोऽपि वर्तते । सान्तरावर्तने आवर्तनानामन्तराले स्थिते काले आवर्तितस्य मनसि संघटनं दाढर्यं वा (Consolidation) अविदितमेव जायते । आवर्तनयोर्मध्ये स्थितमन्तरालं च नाधिकं भवेत् । दीर्घं स्याच्चेदावर्तनफलमेव न स्यात् । प्रहरे प्रहरे उच्चरितात् शब्दात् यथा शाब्दबोधः न भवतीति नैयायिकाः कथयन्ति तथा अतिमात्रान्तरेण कृतमावर्तनं नैव फलं दद्यादिति मनोविज्ञानिनः ।

एवं कस्यापि भागस्यावर्तने किं कृत्स्नोऽपि भागः प्रतिवारमावर्तनीयः उत खण्डशः कृतस्य भागशः आवर्तनमुचितमिति विचारः कृतः । तत्र कृत्स्नभागाव-

र्तनस्य पूर्णाधिगमप्रणाली ( Whole or Global learning ) इति नाम। खण्डावर्तनस्य खण्डाधिगमप्रणाली (Part or piece learning) इति नाम। कृत्स्नभागावर्तनमेव वरमिति वैज्ञानिका अभिप्रयन्ति। कृत्स्नाध्ययने अर्थज्ञानं भागानां परस्परसम्बन्धज्ञानं च धारणे उपकुर्यादिति अत्र कारणं निर्दिश्यते। अयं नियमः सर्वदा अनुसरणीय इति नास्ति निर्बन्धः। अतिदीर्घस्य भागस्य आवर्तने बालाः भीता भवन्ति। आत्मप्रत्ययोऽपि एषां नष्टः स्यात्। अध्येयभागस्यापि काठिन्यं वा लालित्यं वा समं न भवेत्। ततश्च यथासौकर्यं कृत्स्नं भागं वा आवर्तयितुं बालाः प्रेर्या भवन्ति।

पूर्वोक्तयोरपि प्रणाल्योः संयोजनेन अन्यापि काचन प्रणाली इदानीं मनोविज्ञानिभिरादृता वर्तते। अस्याः 'क्रमशः भागावर्तनप्रणाली' (Progressive part method) इति नाम। अस्यां प्रणाल्यां प्रथमं कृत्स्नो भागः संपूर्णार्थावगमाय पठ्यते। तदनन्तरं कृत्स्नः चतुर्धा विभज्यते। प्रथमं प्रथमो भागः कण्ठस्थीक्रियते। ततश्च प्रथमद्वितीयौ भागौ; ततश्च प्रथमद्वितीयतृतीयभागाः ततः कृत्स्न इति।

यद्यपि विंशतिवारावर्तनेन गृहीतो भागः कण्ठस्थः स्यात्। अथापि दाढर्घाय पुनरपि दशकृत्वः (पञ्चाशत्प्रतिशतवारं 50%) आवर्तनं कर्तव्यमिति वैज्ञानिकः **क्रूगरः** (Kruger) अभिप्रैति। कण्ठस्थीकरणायापेक्षितावृत्तिसंख्याया ५०%अधिकं पठनीयमिति, ततोऽप्यधिकावृत्त्या न किमपि प्रयोजनमिति च तस्य मतम्।

अनवगतार्थस्य भागस्यापेक्षया अवगतार्थस्य भागस्य धारणं सुकरम्; तस्मादुपाध्यायाः धारणार्हस्य भागस्य अर्थं सम्यगवबोधयेयुः। सन्तुष्टे परिवेषे धारणं सुकरम्; विस्मरणमपि न भवति। तस्मात् सन्तोषकरः परिवेषः कक्ष्यायां वर्तनीयः। केषांचित् भावानां धारणाय स्मरणोपकारकाणां (Nemonics) कल्पनमपि उचितं स्यात्। "उपेन्द्रवज्रा जतजास्ततो गौ" इत्यत्र गणस्मरणाय

गणानामाद्याक्षराणि संकलय्य लक्षणं दीयते । भेषजेन स्मरणशक्तिः वर्धयितुं न शक्येति पाश्चात्याः । शक्येति अस्मदीया आयुर्वेदीयाः[1] ।

## धारणम् (Retention)

अस्माभिः शिक्षितं सर्वमपि ( मनसि ) मस्तिष्के संस्कारान् (Engrams चिह्नानि) जनयत्येव । शिक्षणानन्तरं क्रियमाणः विरामः संस्कारान्तराजननेन धारणे उपकरोति । पूर्वसंस्कारमुत्तरसंस्कारः अपमार्ष्टि । ततः विरामः धारणे उपकरोति । बाल्येऽपि नाधिकाः संस्काराः पूर्वमेवोत्पादिता इति बाल्येऽधीतं सम्यग् धार्यते । अत एव **रस्क्** ( Rusk ) “ बाल्ये अधीष्व—सुष्ठु अधीष्व[2]” इति कथयति । शिक्षणानन्तरं क्रियमाणा निद्रापि, संस्कारान्तरोत्पादनस्यावकाशा-दानेन पूर्वोत्पन्नं संस्कारं संरक्ष्य धारणं वर्धयतीति प्रयोगान् कृत्वा **डालेन्बाक्**-( Dallenbach )-नामकः विज्ञानी निरूपितवान् । निद्रातो जातस्य विस्मृत-भागस्य परिमाणं जाग्रदवस्थाजातस्य विस्मृतभागस्य परिमाणात् न्यूनो वर्तत इति अस्य मतम् । अनपेक्षितविस्मरणमपि अपेक्षितस्य धारणे साहाय्यं कुर्यात् ।

## प्रत्याह्वानं ( स्मरणम् ), प्रत्यभिज्ञानं च

द्विविधं स्मरणम् प्रत्याह्वानं प्रत्यभिज्ञानमिति । शिक्षितस्य मनसि धृतस्य पुनरपि मनोमुकुरे प्रतिबिम्बनं प्रत्याह्वानं (स्मरणं) भवति । प्रत्यभिज्ञानं विनापि प्रत्याह्वानं वर्तते । अन्यदीयमाशयं तदीयोऽयमिति, प्रत्यभिज्ञानं विना स्वग्रन्थे निबध्नन् लेखकः चोर इति अपप्रथां प्राप्नोति । प्रत्याह्वानं कदाचित् प्रयत्नं विनापि भवेत् । भोजनानन्तरं विश्रामवेलायां बहवो विषयाः एकैकशः स्वयमेव स्मृतिपथमायान्ति । परीक्षाकाले प्रयत्नेन प्रश्नरूपप्रणोदनेन उत्तरस्य स्मरणं जायते ।

अधोनिर्दिश्यमानाः अंशाः स्मरणे साहाय्यं आचरेयुः ।

---

1. “ वचायुष्या वातकफतृष्णाघ्नी स्मृतिवर्धिनी ।” —राजवल्लभः ।
2. “ Learn young, learn fair”—Rusk.

1. स्मर्तुरात्मप्रत्ययः स्मरणं जनयेत्। नाहं विस्मरणशील इति बुद्धिरेवात्मप्रत्ययं जनयेत्।
2. विषयाणां सम्यगवेक्षणं स्मरणं जनयेत्।
3. अचिराद्वृत्तस्य स्मरणमवश्यं भवति।
4. असकृद् वृत्तमपि सम्यक् स्मर्येत।
5. तीव्रानुभवः स्मरणे साहाय्यं कुर्यात्।
6. सुखकाले क्रियमाणः अनुभवः स्मृतिमायाति।
7. सदृशेन सदृशस्य विसदृशस्य वा स्मरणं भवति। सारमेयदर्शने जम्बुकस्य, सर्पदर्शने नकुलस्य च स्मरणं भवेत्।
8. प्रधानभूतं सर्वं स्मर्येत।
9. देशतः सम्बद्धस्य स्मरणं भवति। तमिल्नाडु इत्युक्ते आन्ध्रदेशस्यापि स्मरणं भवति।

10. शिक्षणकाले विशदीक्रियमाणानां भावानां संयोजनमपि (Association of ideas) स्मरणं जनयेत्। सदृशयोः भावयोः युगपत् प्रदर्शनम् अधीयमानस्य विषयस्य वैशद्यमापादयेत्। सूक्ष्मबुद्धिमत्त्वस्य इदं लक्षणं यत् सदृशभावयोः संयोजनम्। बुद्धिमान् नरः भावं कञ्चित् तत्सदृशेन संयोज्य चिन्तयेत् प्रतिपादयेच्च। सदृशो भावः कदाचित् उपमानात्मना वर्तते। सदृशभावप्रतिपादनकौशलवत्त्वादेव कालिदासः 'उपमा कालिदासस्य' इति प्रशस्यते। सदृशं भावमनिवेश्य न कदापि किमपि कथयत्ययं कविः। कदाचित् एकेन सदृशभावेन (उपमानेन) असन्तुष्टः बहून् भावान् ददाति। "सरसिजमनुविद्धम्", "तां हंसमालाः" इत्यादयः श्लोकाः अत्र स्मर्तव्याः।

11. यदा यं कमपि विषयमधिकृत्य प्रयत्यापि स्मरणं न प्राप्यते तर्हि तत्परित्यागः उचितः। ततः तत्स्मरणं स्वयमेवायाति।

## प्रत्यभिज्ञानम्

पुरतः स्थितस्य साक्षात्कारानन्तरं जायमानस्य तद्विषयकस्मरणस्य प्रत्यभिज्ञानस्मरणमिति नाम। प्रत्यभिज्ञानं प्रायशः स्पष्टं स्यात्। देवदत्तदर्शने 'अयं देवदत्तः' इति ज्ञानं भवति। क्वचित् अस्पष्टं भवति। देवदत्तः इदानीं दृष्टः ; प्रत्यभिज्ञायते अयं देवदत्त इति ; परं कदा कस्मिन् सन्दर्भे अयं दृष्टः ? अस्यौद्योगिकं कर्म किम् ? इत्यादि न स्फुरेत्। इदं प्रत्यभिज्ञानमस्पष्टं भवति। तथा च स्मरणं विनापि प्रत्यभिज्ञानं भवेदेव। यदि प्रत्यभिज्ञानं स्पष्टमिष्यते तर्हि विशदप्रत्यभिज्ञानाय कानिचन प्रत्यभिज्ञापकानि चिह्नानि ( Clues ) अपेक्षितानि भवन्ति। कदाचित् स्मरणं प्रत्यभिज्ञानेनोपकृतं भवति। कस्यचित् परिचितस्य नाम स्मर्तुं प्रयत्यते। देवदत्तः यज्ञदत्तः विष्णुमित्रः इति बहूनि नामानि स्मृतिपथमायान्ति। नेदं नेदमिति परित्यज्यते। अन्ते 'शम्भुशर्मा' इति नामायाति। सद्यः प्रत्यभिज्ञानमपि जायते। ततः इदमेव तन्नामेति निश्चितं स्मरणं भवति। तस्मात् प्रत्याह्वान-प्रत्यभिज्ञानयोः परस्परोपकार्योपकारकत्वं वर्तते। आधुनिकपाठशालापरीक्षासु केचन प्रश्नाः सरलस्मरणपरीक्षाः ( Simple recall test ) वर्तन्ते ये छात्राणां केवलं स्मरणं परीक्षन्ते। अत्र एकैकस्यापि प्रश्नस्य एकमेवोत्तरं भवति। तदेव स्मृत्वा लेखनीयम्। बहुविकल्पोत्तरप्रश्नाः ( Multiple choice test ) सुयोजनप्रश्नाश्च (Matching tests ) उत्तरग्रहणे बालानां प्रत्यभिज्ञाने शक्तिं परीक्षन्ते।

## विस्मरणम् ( Forgetting)

पाठशालायामन्यत्र च अस्माभिः बालकैश्च बहवो विषया ज्ञाता भवन्ति। परं काले गच्छति ज्ञातेषु बहवो विषया विस्मृता जायन्ते। प्रयत्नेनापि ते स्मर्तुं न शक्यन्ते। तथा च ज्ञातस्य विषयस्य उत्तेजकं विना मनोमुकुरे पुनरप्युपस्थापने व्यक्तेः या अशक्तिः भवति सा विस्मृतिरित्युच्यते। ज्ञातं तावत् वीर्यहीनं सत् यत् तिरोभवति, तस्य तिरोधानस्य विस्मरणमिति संज्ञा इत्यपि केचन विस्मरणं लक्षयन्ति। अध्ययनेन मस्तिष्कतन्त्रिकाकोशेषु जाताः स्मृत्यंकाः ( Memory traces )

पुनःस्मरणाद्यकरणेन चिरमनुपयोगे पुराणचित्रछायेव म्लानतां ( Fading ) प्राप्य स्वयमेव तिरोभवन्ति। ततश्च विस्मृतिः। सिकतिलप्रदेशे कृता रेखा तथैव चिरं न तिष्ठेत्। वातानीताभिः सिकताभिः पूर्णा सती रेखा तिरोभवेत्। उत्पादितः संस्कारः काले जातेन मस्तिष्ककोशिकापरिवर्तनेन एवमेव तिरोभवेदिति कथयन्ति। अत्र स्मृत्यंकानां अनुपयोगः (Disuse ) एव विस्मरण-कारणम्। सम्यगधीतमपि शास्त्रं प्रवचनादिष्वनुपयोगात् विस्मर्यत इति अनु-भवविदितमिदम्। कदाचित् एकमध्ययनं अपरस्याध्ययनस्य प्रतिरोधं (blocking) कुर्यात्।

पश्चादधीतं पूर्वाधीतं विस्मारयेत्। अस्य प्रतिसक्रियान्तर्बाधा (Retroactive inhibition ) इति नाम। रघुवंशे पूर्वं दश श्लोकाः अधीताः। पश्चादधीताः दशश्लोकाः पूर्वश्लोकानां विस्मरणं जनयेयुः। कदाचित् पूर्वाधीताः विषयाः पश्चादधीयमानेषु विघ्नमुत्पाद्य विस्मरणं जनयन्ति। अस्य अभिसक्रियान्तर्बाधा (Proactive inhibition) इति नाम। भीतिकोपप्रभृतयः संवेगाः विस्मरण-मुत्पादयन्ति। अनवधानम्, अश्रद्धा, अनभिरुचिश्च विस्मरणमधीते जनयेयुः। मस्तिष्कोपघातोऽपि विस्मरणं करोति। कमपि विषयमधिकृत्य क्रियमाणं अध्ययनं यदि पूर्णं भवति तर्हि सः विषयः विस्मृतो भवति। अपूर्णं अध्ययनं सर्वदा अस्मन्मनसि वर्तमानं सत् अपूर्णताबुद्धिं स्मारयति। अनशनेनापि विस्मरणं जायते।

नैवैतावता मन्तव्यं विस्मरणं सर्वदा अनर्थावहमिति। अनपेक्षितानां विस्मरणमेव वरम् भवति। अन्यथा अनपेक्षिताः भारभूताः अपेक्षितस्मरणे विघ्न-माचरेयुः। ये स्मर्तुमशक्या वर्तन्ते ते भावाः अस्मन्मनसोऽत्यन्तं निर्गता इति न गणनीयम्। तेऽपि अवचेतने मनसि निलीना वर्तेरन्। स्वप्ने उन्मादावास्थायां मनोविश्लेषणकाले चाविर्भवेयुः।

विस्मरणमपि झटिति जायते इति न। विस्मरणपरिमाणं च कालानुगुणं न्यूनीभवति। एवं क्रमशो विस्मरणं जायते इतीदं विस्मरणरेखाचित्रेण

ज्ञायेत । शिक्षिते अर्धं प्रथमार्धहोरायामेव विस्मृतं भवति । अष्टहोरातः परं २/३ भागौ विस्मृतौ । मासानन्तरं ४/५ भागाः विस्मृताः । तस्मात् पाठशालायां अधीतभागस्य सद्य एव द्विवारं त्रिवारं वा कृतं चिन्तनं अधीतं भागं मनसि धर्तुं उपकुर्यात् । प्राचीनकाले पाठशालासु श्लोकस्याध्ययनात् परं सद्यः विद्यार्थिनः तमेव श्लोकं पुनः पठन्ति स्म । पुनरपि रात्रौ द्वितीयं वारम् । परेद्यवि उषसि तृतीयं वारम् । पूर्वाह्णे चतुर्थं वारम् । पुनरपि उपाध्यायसविधे अध्ययनाय गमनात् पूर्वं पञ्चमं वारमिति संप्रदायः । अत एवोक्तम्—'अथवा पञ्चचिन्तनम्' इति ।




*29. **स्मृतौ स्थितस्य परिमाणम् (प्रतिशतरूपेण)**
**अधोविद्यमाना संख्या होरा-कालं सूचयति**

उपाध्यायाः अपि अध्यापितं सर्वं सिंहावलोकनन्यायेन अन्तरान्ते संगृह्य कथयन्ति चेत् तर्हि विद्यार्थिनां स्मरणं वीर्यवत् भवेत् । पुनरावृत्ति-प्रश्ना अपि एतदर्था एव । पश्चात् स्मरणाय अधीतविषयस्य लघ्वी काचन टिप्पणी अपि छात्रैः सम्पादनीया । कृकलासमतयोऽपि विद्यार्थिनः यथा स्मर्तुं पारयेयुः तथा रुचियुक्तमध्यापनं कर्तव्यमुपाध्यायैः ।

---

*श्रीसन्तानार्यस्य कोशात् ।

## स्मृतिसंपादने प्रशिक्षणम्

न केवलं विद्यार्थिनामध्यापकानां च, किन्तु सर्वेषामपि स्मृतिशक्तिरपेक्ष्यते। जीवने स्मृत्यभावः बहून् अनर्थान् करोति। ततः सर्वेऽपि स्मृतिप्रशिक्षणप्राप्तौ श्रद्धां प्रदर्शयन्ति। केषांचित् विषयाणां कण्ठस्थीकरणेन स्मृतिशक्तिरधिका भवेदिति न मन्तव्यम्। शोभनस्मरणस्येदमेव मुख्यं लक्षणं यद् ज्ञातस्य चिरं मनसि धारणम्; अपेक्षितकाले द्रुतं मनोयवनिकायामुपस्थापनं च। शोभनं स्मरणमिष्यते चेत् तर्हि अध्येयं सर्वं सम्यगवगन्तव्यम्। सम्यगध्ययनस्यापेक्षितः परिवेषः उपाध्यायैरेव कल्पनीयः। नूतनाः भावाः पूर्वाधिगतैः भावैः स्पष्टं संयोजनीयाः। कण्ठस्थीकरणाय ये उपायाः पूर्वमुक्ताः तानुपायानाश्रित्य अधीतविषयस्य धारणमपि कार्यम्। धृतमपि यथा न विस्मृतं भवेत् तथा असकृत् मननमपि कर्तव्यम्। केवलकण्ठस्थीकरणं विचारशक्तिं नाशयेदिति बहूनां मतम्। अथापि शिक्षायां कण्ठस्थीकरणं अवश्यापेक्षितम्। सुभाषितानां, पाणिनिसूत्राणां, लक्षणवाक्यानां, मुख्यानां शास्त्रपङ्क्तीनां च कण्ठस्थीकरणं महते फलाय स्यात्। भाषाज्ञानाय बहुपदपरिचयोऽपेक्ष्यते। पदपरिचयश्च काव्यनाटकादीनां स्मरणेनैव भवतीति अस्ति संस्कृताध्ययने कण्ठस्थीकरणस्य प्राधान्यम्। स्मृतेरंशचतुष्टये ग्रहणे धारणे च क्रियमाणः प्रयत्नः फलं दद्यात्। प्रत्याह्वाने प्रत्यभिज्ञाने अस्माभिः कर्तव्यं बहु न विद्यते।

## श्रान्तिः [Fatigue]

चिन्तनादिभिः श्रान्तिर्जायत इति श्रान्तिमधिकृत्य विचारः क्रियते। शिक्षणे प्राप्तव्यस्य पूर्णस्य फलस्य लाभः कदाचिन्न भवति। तत्र मुख्यं निदानं श्रान्तिरेव। विना विश्रामं सन्ततं कार्यस्य करणे शक्तिर्हीयते। यत्किमपि कार्यं मानवः परिमितकालमेव कर्तुं प्रभवेत्। ततः परमपि कार्यकरणे नरस्य श्रद्धा, उत्साहश्च तिरोभवतः, श्रान्तिं च प्राप्नोति सः। या कार्यकरणे अशक्तिः सा श्रान्तेः फलं भवति। श्रान्तेः परमपि यदि कार्यं क्रियेत तर्हि शिरोवेदना अवयवेषु व्यथा च जायेयाताम्। अतिमात्रं यदि श्रान्तिर्भवति तर्हि मनसि

शरीरे चात्यन्ताशक्तिः जायते। ततः नरः किमपि कर्तुं न शक्नोति। शरीर-श्रान्तिवत् जामिताऽपि ( Boredom ) कार्यकरणशक्तिं बाधेत। श्रान्तिः शरीराशक्त्या कार्यकरणशक्तिं विहन्ति। जामिता तु कार्यकरणे अनिच्छां जनयति। शरीरबलह्रासः जामितायां न स्यात्। जामितायाः निदानं कार्यस्यैकरूपता। कठिनं कार्यमपि जामितां जनयेत्। कक्ष्यायां विद्यार्थिनः जामिताहेतोः किमप्य-कुर्वाणा वर्तेरन्। कक्ष्यायां एतादृशाः केचन सर्वदा वर्तन्ते। मन्दबुद्धयः प्रायशः जामितामप्राप्य कार्यं कुर्युः। कोऽपि पाठः जामितां किं जनयेत् उत नेति विद्यार्थिदृष्ट्या अवगच्छेत् आचार्यः; न तु स्वाशयानुरोधेन।

शिक्षायाः पूर्णं फलं प्राप्तुमेते उपकुर्वन्ति। स्वच्छस्य अपेक्षितस्य वायोः सञ्चारः कक्ष्यायामपेक्ष्यते। एवं उचितः प्रकाशोऽपि। विद्यार्थिनां आरोग्य-मपि अत्र कारणम्। अनारोग्यवन्तः क्षुधापीडिताश्च बालाः निश्चयेनाध्यानं कर्तुमशक्ता भवेयुः। अध्ययनस्य मुख्यमुद्देश्यं च सम्यक् प्रदर्शनीयम्। तीव्रा-भिरुचिश्च श्रद्धां जनयति। एष्वेकस्याप्यभावे पाठे रुचिः न स्यात्; श्रान्तिश्च जायेत। श्रान्तेः जामितायाश्च भेदोऽवगन्तव्यः। श्रान्तिः शरीरगता। जामिता च मनोगता। जामितायां शरीरश्रान्तिः न भवेत्। चिरं एकरूपं कार्यं कुर्वतः मनसि जामिता जायते, न तु श्रान्तिः। स एव छायाचित्रदर्शनाय सोत्साहः स्यात्। छायाचित्रदर्शने मनसो व्यापारो वर्तते एव। तस्मात् मनसः श्रान्तिर्न भवतीति केषांचिन्मतम्।

केचनोपाध्यायाः पितरश्च मन्यन्ते यत् बालानां श्रान्तिरेव न भवति यतस्ते सर्वदा क्रीडितुमुत्साहवन्तो भवन्तीति। किन्तु बाला अपि श्रान्तिं प्राप्नुवन्तीति ज्ञातव्यम्।

श्रान्तिश्च पेशीश्रान्तिः ( Muscular fatigue ), इन्द्रियश्रान्तिः, मस्ति-ष्कश्रान्तिः अथवा मनःश्रान्तिरिति त्रेधा भवति। चिरं क्रियमाणेन शारीर-व्यापारेण शरीरश्रान्तिर्जायते। इन्द्रियाण्यपि चक्षुरादीनि चिरं कृतेन स्वव्या-

पारेण श्रान्तिं प्राप्नुवन्ति। मनसोऽपि सन्ततं क्रियमाणेन चिन्तनादिव्यापारेण श्रान्तिरनुभूयते। तत्र पेशीश्रान्तिरेव सर्वैः सुखं विदिता। पेशीश्रान्तेः मापनमपि एर्गोग्राफ्-(Ergograph)-नामकोपकरणेन कृतं वर्तते। कोऽपि मानवः अङ्गुल्या भारयुक्तं किमपि अयः-खण्डमसकृदुद्धर्तुं प्रयतमानः क्रमशः अङ्गुल्यां श्रान्तिं प्राप्य तदुद्धर्तुमशक्तो जायते। अत्रोद्धरणकाले अङ्गुलिपेश्यां जातं संकोचं विकासं चेदमुपकरणं रेखया प्रदर्शयति। श्रान्तौ पेश्याः सङ्कोचनविकासशक्तिः न्यूना भवति। विश्रान्त्या पेशी पुनरपि कर्म कर्तुं शक्नोति।




*30. कार्यरेखाचित्रम्

अ-प्रगत्यारंभः। आ तीव्रा प्रगतिः।

इ-समा प्रगतिः। ई-प्रगतिह्रासः।

चित्रं दृश्यताम्। इदं चित्रं कर्मकरणकाले जायमानां श्रान्तिं सूचयति। कार्यरेखाख्यं (Work-curve) इदं चित्रं कार्यकरणकाले कार्यस्य परिमाणं चोपादाय सम्पाद्यते। कार्यारम्भे प्रगतिरल्पा भवति। तदनन्तरं तीव्रा अभिवृद्धिः जायते। तदनन्तरं कार्यं समवेगं भवति कञ्चित् कालम्। पश्चाच्च कार्यपरिमाणं न्यूनीभवति। यदि कार्यं समाप्तिदशायां स्यात् तर्हि पुनरपि वेगो जायेत।

---

*श्रीसन्तानार्यस्य कोशात्

कस्यामपि दशायां कार्यमत्यन्तं विरतमपि भवेत्। विश्रामानन्तरमेव कार्य-करणाय शक्तिर्लभ्यते।

## श्रान्तेः मूलकारणानि।

आहारादिभिः शरीरस्य ऊतकेषु (Tissues) संचिता शक्तिः कार्यकरणेन व्ययिता भवति। ततश्च श्रान्तिर्जायते। कार्यकरणकाले शरीरे केचन विषांशाः (Toxins) अपि जायन्ते। एषां आधिक्ये श्रान्तिरपि अधिका भवति। प्राणवायोः ह्रासोऽपि श्रान्तिमुत्पादयेत्। कार्यकरणकाले तन्त्रिकासु जायमानः कश्चन धर्मोऽपि श्रान्तिं जनयतीति मन्यन्ते। मनसः श्रान्तौ शरीरं कर्म कर्तुं न प्रभवति। एवं शरीरश्रान्तौ मनो नेच्छति कर्म कर्तुम्। अत एव केचन कायिकमानसश्रान्त्योः अभिन्नतां वाञ्छन्ति।

## श्रान्तिहरोपायाः

सम्यक् विश्रान्त्या सुष्ठु स्वापेन च श्रान्तिः, अपनीता भवेत्। तदानीं विषांशाः शरीरात् निर्गच्छन्ति। बलाधायकांशाश्च शरीरे विश्रान्तिकाले जायन्ते। मधुपानेन श्रान्तिः अपनीयेत; परमिदमसमीचीनं यतः मधुपानव्यसनं अनेन जायेत। काफ़ीपानमपि श्रान्तिं अपनयति। कार्यस्य परिवर्तनमपि (Change of work) श्रान्तिं हरति। क्रीडया च श्रान्तिरपनीयते। अधीयमाने विषये अभिरुचिरपि श्रान्तिं नोपजनयेत्। अत एव विद्यार्थिनः परीक्षाकाले श्रान्तिं नैव विभावयन्ति। पुष्टिकरस्याहारस्य मध्ये मध्ये अल्पोपयोगः श्रान्तिमपहरेत्। शर्करायुक्तं पानं चात्रोपकुर्यात्। विलम्ब्य कार्यकरणं विहाय द्रुतं कार्यकरणं श्रान्तिं न जनयति। अत एव जनाः साधा-रणशकटं (Passenger train) विहाय द्रुतगामिशकटेन (Express train) गन्तुमिच्छन्ति। एतेन न मन्तव्यं सर्वं त्वरितमेव कर्तव्यमिति। केषांचित् कार्यकरणाभ्यासो न विद्यते; क्वचिदपि होरामेकां स्थातुं कर्म कर्तुं च कृताभ्यासा न भवन्ति। 'अवतप्ते नकुल' इव क्वचिदपि न तिष्ठन्ति। ततश्च

श्रान्तिः जायते। अनुस्यूतं कार्यकरणे अभ्याससम्पादनं श्रान्त्युत्पत्तिमेव निरुन्ध्यात्।

## उपाध्यायैरत्र कर्तव्यानि

यथा श्रान्तिर्न भवेत् बालानां तथाध्यापनं कार्यम्। अभिरुचिरध्याप्ये संपादनीया। अन्तराणि च (Periods) न दीर्घाणि भवेयुः। प्रारम्भपाठशालासु एकैकमप्यन्तरं त्रिंशन्निमेषात्मकं स्यात्। उपरितनकक्ष्यासु पञ्चचत्वारिंशन्निमेषात्मकं भवितुमर्हति। अन्तरद्वयात्परं दशनिमेषावधिकः विश्रामः देयः। मानसव्यापारात् कायिकं, कायिकव्यापाराच्च मानसं व्यापारं प्रति च गमनं अन्तरादन्तरे कर्तव्यं भवति। विद्यार्थिभिरध्येयेषु विषयेषु केचन कठिनाः ; केचन ललिताः।

| 1 | 2 | 3 | 4 | अ | 5 | 6 | 7 |
|---|---|---|---|---|---|---|---|
| | | | | | | | |

31. अन्तर (Period)–सूचकं चित्रम्, संख्याः अन्तराणि सूचयन्ति। 'अ' इति इदं पूर्वाह्णमध्याह्नयोरन्तरे स्थितं अवकाशं सूचयति।

गणित-मातृभाषेतरभाषाव्याकरणादयः विद्यार्थिषु श्रान्तिं शीघ्रं जनयन्ति। मातृभाषा-समाजशास्त्रप्रभृतयः विषयाः न तथा श्रान्तिकारिणः। समयसारिणीसम्पादनकाले कठिनविषयाध्यापनाय पूर्वाह्णे द्वितीयं तृतीयं चान्तरं देयम्। अपराह्णे द्वितीयमन्तरं बालानां श्रमादायि भवति। तदापि कठिनविषयाध्यापनमुचितम्। अस्माकं पाठशालासु प्रातरन्तरचतुष्टयं मध्याह्ने अन्तरत्रयं च भवति। तत्रान्तरत्रयं, पूर्वोक्त-

क्रमानुसारेण फलदायि भवेत्। कठिनानां विषयाणां प्रातरध्यापनं, ललितानां मध्याह्ने इति वा व्यवस्था कार्या। मध्ये मध्ये शिल्पकलादिषु प्रवृत्तिः श्रान्तिं परिहरेत्। श्रान्तिश्च सर्वेषां बालानां समकाले एव जायत इति न मन्तव्यम्। तत्रापि वैयक्तिको भेदो वर्तते। केचन शीघ्रं श्रान्तिं प्राप्नुवन्ति, केचित् विलम्बेन। अनुस्यूतं यदि कार्यं कर्तव्यं स्यात् तर्हि यथाशक्त्येव कर्तव्यम्। "अयथाबलमारम्भः निदानं क्षयसम्पदः" इति माघः। 'अपि स्वशक्त्या तपसि प्रवर्तसे' इति च कालिदासः। उपाध्यायात् भीतिश्च श्रान्तिं जनयेत्। ततोऽभयमुपाध्यायादपेक्ष्यते। वस्तुतः श्रान्त्यनुत्पादनं उपाध्यायस्य प्रथममुद्देश्यं भवितुमर्हति। कुशलः उत्साही हास्यरसज्ञश्चाचार्यः उचितैरुपायैः यथा विद्यार्थिनः श्रान्तिं न प्राप्नुयुः तथाध्यापयितुं शक्तः स्यात्। तादृशाध्यापकस्य कक्ष्याया-मन्तरं दीर्घमपि सरसादध्यापनात् क्षण इव भायात्। अन्यस्य तु तदेवान्तरं कालरात्रिरिव दीर्घीभवति।

1. शिशुपालवधे-2-74  2. कुमारसंभवे-5-33.

# सप्तमोऽध्यायः

## बुद्धिः (Intelligence)

उपाध्यायाः सर्वेऽपि जानन्ति यत् स्वस्वकक्ष्यासु विद्यार्थिनः अध्ययनविषये विभिन्नशक्तयो वर्तन्त इति। केचन बुद्धिमन्तः, केचन मन्दाः, केचन सन्दर्भानुगुणं व्यवहर्तुं शक्ताः, केचित्तु अशक्ताः। केचन सर्वमपि द्रुतं कर्तुं पारयन्ति, केचन दीर्घसूत्रिणः, केचन नातिप्रयत्नमवगच्छन्ति, अन्येषां महता प्रयासेनापि विद्या न भवति। केचन समस्याः सहसोत्तरयितुं शक्ताः वर्तन्ते; अन्ये तु महान्तं क्लेशमनुभवन्ति इति। अनुभववानुपाध्यायः यद्यपि सममेव सर्वान् अध्यापयति। फले तु भेदो दृश्यते। तत्र निदानं व्यक्तिषु स्थितः बुद्धेः (Intelligence) तरतमभाव एव।

मानवाः बुद्धिशक्त्यैव मृगेभ्यः उत्कृष्टाः भवन्ति। 'यस्य बुद्धिः बलं तस्य निर्बुद्धेस्तु कुतो बलम्' इति विष्णुशर्मा कथयति। पूर्वकाले बहुविषयकज्ञान ( Knowledge )–संपादनमेव शिक्षणस्य परमोद्देश्यमासीत्। शास्त्रेषु प्रतिपादितानां सर्वेषां विषयाणां बुद्धौ आरोपणमेव शिक्षणमिति प्रत्ययः पूर्वकाले। एवं ज्ञानवन्तोऽपि बहवः प्रज्ञानवन्तः ( Wise ) नासन्। लब्धस्य ज्ञानस्योपयोगे यत् कौशलं वर्तते तस्य प्रज्ञानमिति नाम। अधीतशास्त्रा अपि केचित् अक्रियाशीलाः अलोकज्ञाश्चावर्तन्त। 'वनौकसोऽपि सन्तो लोकज्ञा वय'मिति सश्लाघमात्मानं वर्णयति महर्षिः कण्वः। ज्ञानं ज्ञानार्थमिति अयं सिद्धान्तः नाङ्गीक्रियतेऽधुना। लौकिकज्ञानस्य स्वयं पुरुषार्थत्वं न भवति। ज्ञानेनापि प्राप्तव्यमन्यद्वर्तते। ज्ञानं च कार्ये प्रयोगार्हं यदि न भवति तर्हि तादृशज्ञानेन किमपि प्रयोजनं न सेत्स्यति। अत एवोच्यते 'शास्त्राण्यधीत्यापि भवन्ति मूर्खाः यस्तु क्रियावान् पुरुषः स विद्वा'निति। ज्ञानादपि प्रज्ञानं ( Wisdom ) सर्वदा प्रशस्यते।

बुद्धिः का ? तस्याः स्वरूपं किम् ? स्वभावश्च कः इति तन्निरूपणाय प्रवृत्ताः सर्वेऽपि भग्नप्रयत्ना एव जाताः । यावन्तो विज्ञानिनः तावन्ति लक्षणानि बुद्धेः वर्तन्ते ।

'बुद्धिर्नाम न किमपि मूर्तं वस्तु ; किन्तु क्रियात्मिका सा मानवस्य व्यवहार-विशेषः[1] । मानवव्यवहारगतः क्रियानिष्ठः कोऽपि धर्मविशेषो वा' इति **बुड्वोर्त्** कथयति । ' क्रियाद्वयात्मिका बुद्धिः भवति । एका विषयार्जनं करोति । घटपटा-दीन् बहून् विषयान् जानाति । अस्याः क्रियायाः बुद्धिव्यापारः (Intellectual activity) इति नाम दातुं शक्यम् । द्वितीया च कापि क्रिया वर्तते । तस्याः सूक्ष्मबुद्धिव्यापारः (Intelligent activity) इति नाम युक्तं स्यात् । इयमेव बुद्धिः लब्धं ज्ञानं कार्येषु प्रयुङ्क्ते । या प्रयोगे समर्था सा विशिष्टा भवति ।

अत्र किमपि उदाहरणम् । कोऽपि मानवः दारुकर्मण्युपयुज्यमानानि सर्वाण्युपकरणानि धत्ते । परं दारुकर्म कर्तुं न प्रभवति । अन्यस्याल्पान्येव उपकरणानि वर्तन्ते, परं तान्येवोपयुज्य दारुकर्म सम्यक् कर्तुं पारयति । अनयोः उपयोक्तैव प्रशंसार्हो भवति । एवं लब्धं ज्ञानमुपयोक्तुं मानवस्य या कुशलता तस्याः बुद्धिरिति नामेति **बुड्वोर्त्** अभिप्रैति । अन्येऽपि केचन बुद्धिं लक्षितवन्तः । व्यवसायः, शोभन-चिन्ता, स्वतो विचिन्त्य कार्यकरणम्, प्रारब्धस्यान्तगमनम्, स्वदोषज्ञानम्, नूतन-निर्माणकौशलमिति एतत्सर्वं बुद्धेरंशाः इति **बिने-सैमन्**-लक्षणम् । नूतनसन्दर्भानु-गुणं भावस्य ज्ञानपूर्वं समञ्जन (Adjustment) संपादने या सामान्या शक्तिः सा बुद्धिरिति **स्टेर्न्** (Stern) कथयति । अमूर्तविषयचिन्तने या शक्तिः सा बुद्धिः इति **टेर्मेन्** (Terman) । अस्मदीयास्तु 'बुद्धिस्तात्कालिकी मता' इति लक्षितवन्तः । तथा च तत्कालानुगुणं व्यवहरणे मनुजस्य या कुशलता वर्तते सा बुद्धिरिति लक्ष्यते । शिक्षणे सामर्थ्यं, लब्धस्य ज्ञानस्य प्रयोगे नैपुण्यम्, वस्तूनां परस्परसम्बन्धावगाहनक्षमत्वं, तर्कणे सामर्थ्यमित्येतेषां समुदायस्य बुद्धिरिति

---

1. Intelligence is not a thing of which you have more or less, but it is a way of acting. p. 32.

नाम इत्यायातम्। एवं बुद्धिः कार्यमुखेनैव ज्ञातव्या भवति। एकस्याः तालिकायाः उद्घाटनाय दत्ते कुञ्चिकापुञ्जे उचितायाः कुञ्चिकायाः ग्रहणं ग्रहीतुः बुद्धिमत्तां सूचयेत्। मन्दमतिस्तु उचितामनुचितां च कुञ्चिकां तालिकायां निवेश्य निवेश्य परीक्षेत। बुद्धेरसाधारणधर्माः केचन वर्ण्यन्ते।

1. **जाग्रत्ता अथवा जूर्तिः** ( Alertness )—बुद्धिमान् नरः सदा परितः स्थितं सर्वं विषयं जानीयात्। बाह्यं प्रेरकं प्रति सर्वदा जागरूकः स्यात्। इन्द्रियाणि तस्य अप्रतिहतानि वर्तेरन्। येषां जाग्रत्ता न वर्तते ते परैः सकृदुक्तं नावगच्छन्ति ; पुनरपि तदेव कथितं वाञ्छन्ति।

2. **धारणम् आत्मीयताकरणं च** (Retention and assimilation)-बुद्धिमान् नरः स्पष्टेनापि संस्कारेण परं मनसि अधृतेन आत्मीयतामप्रापितेन अनुभवजन्यं ज्ञानं न प्राप्नुयात्। धारणमपि बुद्धिकार्यमेव। धारणशक्त्यैव बुद्धिमन्तः सर्वत्र जयं विन्दन्ति। यथा भुक्तं अन्नं जीर्णं सत् शरीरं पोषयति बलं चोत्पादयति एवमेव लब्धं ज्ञानमपि यदि मानवेन स्वकीयत्वमापाद्यते तर्ह्येव तत् फलदायि भवेत्। स्वकीयत्वबुद्धिरेवात्मप्रत्ययं जनयति।

3. **भावानां प्रयोगः** ( Manipulation of ideas )—सङ्कटकाले चतुरया कल्पनाशक्त्या त्वरिततरं भावान् उपयुज्य कार्यकरणमपि बुद्धिधर्मः। केचित् अतर्कितोपनतायां आपदि, समुद्रे निमग्ना इव शोचन्ति। बुद्धिमान् नैव शोचेत्। बहून् परिहारोपायान् मनसि सन्तोल्योचितमुपायं सद्यो गृह्णीयात्। प्रतिदिनं क्रियमाणेष्वपि कार्येषु किं लघुः कश्चन मार्गो वर्तत इति विचिन्तयेत्। पाकादिष्वपि नूतनप्रक्रियाः बुद्धिमन्तः एव पश्यन्ति। चिरं अनादिसिद्धया एकयैव प्रक्रियया कृते कृषिकर्मणि इदानीं नूतनपद्धतिरनुस्रियते।

4. **अन्तर्दृष्टिः** (Insight)—बुद्धिमान् नरः उपायचिन्तनाय बहु कालं न व्ययीकुर्यात्। अनुचितमुपायमनुष्ठाय क्लेशमपि न प्राप्नुयात्। अस्य कार्यस्य अयमेवोपायः इति सन्दर्भानुगुणं सहसा विचिन्त्य अन्तःप्रज्ञया जानीयात्।

5. **स्वकार्यतोलनम्** (Self-criticism)—बुद्धिमान् स्वकृतकार्यस्य गुणं दोषं वा स्वयमेव जानीयात्। मन्दमतिस्तु स्वकार्येणाल्पेनापि तुष्येत्। पराङ्गीकाराय परमुखं ईक्षेत। परैः दोषोद्घाटने कृते विषीदेत्, कुप्येद्वा। बुद्धिमानेवं न स्यात्। अत एव रामः, 'स्वदोषपरदोषवित्' इति स्तूयते वाल्मीकिना। 'विद्वान् विपश्चित् दोषज्ञः' इति अमरकारेण आत्मदोषज्ञत्वं पण्डितलक्षणमुक्तम्।

6. **आत्मप्रत्ययः** (Self-confidence) बुद्धिमान् निराबाधं आत्मना तदा तदा कृतानि कर्माणि दृष्ट्वा आत्मनि प्रत्ययं कुर्यात्। केचन मन्दमतयः किमप्यकृतवन्तोऽपि आत्मप्रत्ययं वहन्ति। केषांचित् सर्वदा आत्मप्रत्ययः नैव भवति। एते सदा परकृतं साहाय्यमपेक्षन्ते। युक्तः आत्मप्रत्ययः बुद्धेः असाधारणो धर्मो भवति।

7. **स्थिरमुद्देश्यम्** (Strong motivation) बुद्धिमान् नरः जीवने यत् यत् स्वप्राप्यं चिन्तयति तत्र स्थिरां बुद्धिं कुर्यात्। पतङ्गग्रहणाय प्रवृत्ताः बालाः यथा पूर्वानुद्रुतं पतङ्गं विहाय अन्यमन्यमनुधावन्ति एवं मन्दमतयः स्वोद्देश्यं प्रतिदिनं परिवर्तयन्ति। बुद्धिमांस्तु स्थिरं किमपि विचिन्त्य तत्प्राप्त्यै प्रयतेत। आफलोदयकर्मा स्यात्। कार्येषु स्थिराभिरुचिः भवेत्।

8. **संवेगानुपहतिः** (Not being affected by emotion) यो बुद्धिमान् सः संवेगवशंवदो न भवेत्। तस्य बुद्धिरचञ्चला स्यात्। "ननु प्रवातेऽप्यप्रकम्प्याः गिरयः" इति वदन् कालिदासः शोकानुपहतत्वं प्रशंसति। **गिल्फोर्ड्**-नामकेन मनोविज्ञानिना बुद्धिव्यापाराः, ज्ञानं, धारणं, समस्यायाः बहूत्तरदर्शनाय विपुलं चिन्तनम्, ततः समीचीनोत्तरदर्शनाय एकाग्रदर्शनम्, उचितस्योत्तरस्य निर्धारणमिति पञ्चधा विभज्यन्ते। "शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा। ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः" इति बुद्धिव्यापारः अष्टधा वर्णितः। सत्त्वरजस्तमांसि यथा तत्तत्कार्यैरेवावगम्यन्ते एवं बुद्धिः तदीयव्यापारैरेव

अवगम्यते । अत एवाधुनिकमनोविज्ञानी बुद्धिं लक्षयितुं प्रयतमानः अन्ते विहस्तः सन्, "बुद्धिपरीक्षा यां मिनोति सा एव बुद्धिः [1]" इति लक्षणमुक्तवान् ।

## बुद्धेः स्वरूपं स्वभावश्च

बुद्धेः लक्षणमधिकृत्य यथा नैकमतित्वं एवं तत्स्वरूपं तत्स्वभावं चाधिकृत्यापि एका मतिर्न भवति विज्ञानिनाम् ।

'बुद्धिः नाम सामान्यकुशलता (Unitary ability) भवति । इयमेकैव बुद्धिकार्याणां बहूनामपि मूलभूता । इयं सर्वकार्यव्यापिनी । येषामियं कुशलता ते सर्वमपि कार्यं सम्यक् कुर्वन्ति' इति मन्यन्ते विज्ञानिनः केचन । यथा सम्राट् एकः कृत्स्नं राज्यं स्वयमेक एव पालयति एवमियमेकैव कुशलता सर्वकार्यक्षमा वर्तते । इयमेव अन्या अपि कुशलताः प्रेरयति । । एवं बुद्धिस्वरूपं वर्णयतः अस्य सिद्धान्तस्यापरं नाम (बुद्धिसम्बन्धी) सम्राजीयसिद्धान्तः (Monarchical Theory of Intelligence) इति । अत्रायं दोषः आपाद्यते । वस्तुतः यदि बुद्धिरेकैव तर्हि सा सर्वत्र विषयेषु प्रसरेत् । गणिते समर्थः बालः अन्येष्वपि गानादि-विषयेषु समर्थः स्यात् । वस्तुतः एवं बाला न दृश्यन्ते । प्रवयसः बुद्धि-मन्तोऽपि केचित् केषुचिदन्येषु कार्येषु असमर्था एव भवन्ति । तस्मात् **तर्स्टन्**-(Thurstone) **तार्ण्डैक्**- (Thorndike) **गिल्फोर्ड्**-(Guilford)-प्रभृतयः "बुद्धिर्नाम नैका कुशलता, किन्तु बह्वीनां विशिष्टानां कुशलतानां सामान्यं नाम बुद्धिः । बहुविशेषशक्तिसमुदायरूपा (Number of specific abilities) सा" इति कथयन्ति । सत्यपि समानधर्मे एताः शक्तयः परस्परं विभिन्ना एव । अत एव व्याकरणे कुशलः कश्चित् न्यायशास्त्रेऽपि कुशलो भवेदिति वक्तुं न शक्यते । कुशलता(शक्ति)समुदायत्वेन बुद्धिं वर्णयतः अस्य सिद्धान्तस्य नाम बुद्धिसम्बन्धी परिमिततन्त्रसिद्धान्तः (Oligarchy) इति । **बिने**-(Binet)-महोदयः बुद्धेः व्यापारत्रयमुक्तवान् । निष्कृष्टस्य

1. Intelligence is what intelligence tests measure.

उद्देश्यस्य कस्यापि निर्धारणे शक्तिः, लक्ष्यप्राप्त्यर्थं आत्मनः समञ्जनवत्व- ( Adjustment ) शक्तिसंपादनम्, आत्मगतगुणदोषविचारशक्तिः इति बुद्धेः व्यापारत्रयमुक्तवान्। तार्ण्डैक्महोदयस्तु बुद्धिरिति एकवचनापेक्षया बुद्धयः इति बहुवचनेन निर्देशः वरं इत्यभिप्रैति। (1) अमूर्तबुद्धिः (Abstract intelligence), (2) यान्त्रिकबुद्धिः ( Mechanical intelligence ), (3) सामाजिकबुद्धिः ( Social intelligence ) इति बुद्धित्रयं वर्तते। भावान् तत्सूचकचिह्नानि (Symbols) चाधिगत्य कार्यकारिणी प्रथमा। परीक्षाविजये गणिताद्यध्ययनादिषु इयमुपयुज्यते। यन्त्रस्वरूपं ज्ञात्वा कार्यकारिणी द्वितीया। परेषां चित्तं विज्ञाय जनमध्ये भव्यं जीवनं वर्तयितुमुपयुक्ता भवति तृतीया। इदं त्रयमपि परस्परमनभिव्याप्तमिति ज्ञायेत। शास्त्रवेत्तापि जनैः सह वर्तितुमकुशलः स्यात्। स्वगृहजनैः प्रियं भाषितुमपि अज्ञो भवेत्। ततः बुद्धिस्त्रिदला न तु सामान्यशक्तिरूपा इति। मानवस्य बुद्धौ त्रयोदश अंशाः परस्परं असंपृक्ताः वर्तन्ते इति **तर्स्टन्** (Thurstone) मन्यते। एषु सप्त मूलभूताः (Primary mental abilities) वर्तन्ते। ते चेमे।

*1. आंकिककुशलता।
2. स्मृतिकुशलता।
3. शाब्दकुशलता।
4. दैशिककुशलता।
5. त्वरितशब्दकुशलता।
6. प्रत्यक्षज्ञानकुशलता।
7. तर्कणकुशलता।

---

*1. Numeral ability (N)
2. Memory ability (M)
3. Verbal ability (V)
4. Spacial ability (S)
5. Fluency in word (W)
6. Perceptual ability (P)
7. Reasoning ability(R)

## कारणद्वयसिद्धान्तः (Two Factor Theory)

**स्पियरमन्**-(Spearman)-नामकः विज्ञानी बुद्धेः स्वरूपं एवं वर्णयति स्म। बुद्धिः कारणद्वयात्मिका वर्तते। शिक्षया बुद्धेः सामान्यशक्तिः विशेषशक्तिश्च वर्ध्यते। अनयोः प्रथमा (General) 'G' (सा-सामान्या) इत्यक्षरेण सूच्यते। सामान्यशक्तिं विना न कोऽपि मनोव्यापारो भवेत्। इयं सामान्ययोग्यता सर्वेष्वपि जीवेषु समानुपाता न वर्तते। अत्र भेदसत्त्वादेव व्यक्तयो भिन्ना भवन्ति। द्वितीया च शक्तिः विशिष्टा भवति (Special)



*स्पियरमन् (1863–1945)

या S अक्षरेण (वि-विशिष्टा) सूच्यते। मानवे विशिष्टाः शक्तयः बह्व्यः भवेयुः। विशिष्टा शक्तिः विशिष्टे कार्ये उपयुज्यते। तथा चैकैकमपि कार्यं सामान्यशक्त्या तत्तत्कार्यापेक्षितविशेषशक्त्या च निर्वर्त्यते। अनयोः सम्बन्धः एवं सूचयितुं शक्यः—

---

* Charles Edward Spearman-1863-1945; Photo kindly lent by British Psychological Society, London,

G + S. 1 = Activity 1; G + S. 2 = Activity 2.
सा + वि. 1 = प्रथमं कार्यम्; सा + वि. 2 = द्वितीयं कार्यम् इत्यादि। सामान्य-विशेषयोः सम्बन्धं कोऽपि एवमपि निरूपयति। सर्वत्र वैद्युतशक्तिरेकैव। रेडियोयन्त्रसंबद्धा गायति भाषते च। व्यजनसम्बद्धा वातं सञ्चालयति। दीपेन युक्ता प्रकाशं जनयति। प्रायशः बुद्धिरिति सामान्या शक्तिरुच्यते। क्वचित् सामान्यशक्तेरधिकोपयोगः यथा गणिते। चित्रकलायां सामान्यविशेषयोः; तत्रापि विशेषशक्तेरधिकोपयोगः। **सिरिल् बर्ट्**-नामकः (Cyril Burt) - विज्ञानी बालेषु सामान्यशक्तित्वेन विराजमानेयं पश्चाद्विशेषशक्त्यात्मना परिणमते इत्याह। केचित् ज्ञानपुञ्जस्य बुद्धेश्चाभिन्नतां मन्यन्ते। यथा भुक्तः आहारः शरीरधात्वात्मना परिणमते तथा ज्ञातः विषयः शक्त्यात्मना (बुद्ध्यात्मना) परिणमते[1] इति **आदंस्** (Adams) - नामको विज्ञानी कथयति।



*सिरिल् बर्ट्

---

*Sir Cyril Burt, Photo by Walter Stoneman: kindly lent by Godfrey Argent, London.

1. Fact becomes faculty.

एवं बुद्धिमधिकृत्य चत्वारः सिद्धान्ताः उक्ता वर्तन्ते ।

*1. एकशक्तिरूपसिद्धान्तः ।

2. द्विकारणकसिद्धान्तः ।

3. त्रिकारणकसिद्धान्तः ।

4. बहुकारणकसिद्धान्तः ।

एते सिद्धान्ताः तत्त्वतो बुद्धेः स्वरूपं सुनिश्चितं निरूपितवन्त इति नैव मन्तव्यम् । एकैकोऽपि सिद्धान्तः यथाशक्ति बुद्धेः स्वरूपं निरूपयितुं प्रयतते । एवं बुद्धिमधिकृत्य स्थितानां सिद्धान्तानां विभिन्नतया तत्स्वरूपावगमाय प्रयुक्तं परीक्षणमपि विभिन्नं वर्तते ।

बुद्धिशक्तिः किं परिवेषफलभूता उत वंशपरपराधर्मप्राप्तेत्यत्र चर्चा बहोः कालाद्वर्तते । न केवलं बुद्धिविषये किन्तु अभिरुचौ, व्यक्तित्वे, स्वभावे, शरीरबन्धे च व्यक्तीनां भेदो वर्तते । बुद्धेस्तरतमभावमवगत्य तदनुगुणमध्यापनं कर्तव्यमिति सारः ।

## बुद्धिपरीक्षा (Intelligence Test)

बुद्धिस्थपरीक्षा पूर्वकालेऽप्यासीत् । कोऽपि वेदमधीत्य कृत्स्नं वेदं बुद्धौ धरति । वेदे परीक्षा क्रियते, वेदः बुद्धिस्थो वर्तते किं, अथवा अधीतं वेदं सर्वं स्मरति किम् इति । इयं बुद्धिस्थस्य परीक्षा भवति, न तु बुद्धेः । ग्रहणधारण-साधनीभूता बुद्धिरपि परीक्षणीयेति केषांचिन्मतिः जाता । बुद्धेरपि मापनं कृत्वा, तस्याः परिमितिः संख्यया निर्देष्टव्या इति । देवदत्तः उच्छ्रायवानिति सामान्य-कथनापेक्षया सार्धपञ्चपदोच्छ्रायवानिति कथने उच्छ्रायतामधिकृत्य ज्ञानं स्पष्टं

---

*1. Unit-Factor Theory (Binet, Terman, Stern)

2. Two Factor Theory (Spearman)

3. Three Factor Theory (Thorndike)

4. Multiple Factor Theory (Thurstone)

जायते। एवमेव रामस्य एतावती बुद्धिः वर्तते इति कथनापेक्षया बुद्धेः परिमाणस्य संख्यया निर्देशः युक्तः।

बुद्धिपरीक्षायाः आवश्यकता प्रथमं एवं विभाविताभूत्।

फ्रान्स्देशे विद्याधिकारिणः विद्यार्थिषु विद्याफलं (प्रगतिं) तारतम्येन वर्तमानं दृष्ट्वा तत्र निमित्तं किमुपाध्यायानामालस्यम्? अध्यापनप्रणालीदोषः, उतान्यत् किमपि इति विचारयितुं प्रवृत्ताः। कुशलैरुपाध्यायैः शोभनप्रणाल्या कृतेऽध्यापनेऽपि प्रगतिभेदो दृष्टः। अयं प्रगतिन्यूनता(अथवा मान्द्यम्) (Backwardness) बालानां बुद्धिमान्द्यकृता, अनुचितपरिवेषकृता वा इति विचार्य निर्धारयितुं

**आल्फ्रेड् बिने**

(Alfred Binet 1856-1911)-नामकं मनोविज्ञानिनं सर्वकारीयाः अधिकारिणः नियुक्तवन्तः। बिने प्रथमं कमपि सिद्धान्तं (Hypothesis) एवं कल्पितवान्। एकैकोऽपि बालः, अप्राप्तशिक्षणोऽपि, जीवनं वर्तयितुं पर्याप्तां स्वभावसिद्धां बुद्धिं तदीयाभिवृद्धिकाले (Formative years) धत्ते एव। इयं बुद्धिः प्रतिवर्षं क्रमशः विकासं प्राप्नुवन्त्येव वर्तेत। बाह्यो-

* **बिने-महोदयः**—(1856–1911)

---

*Photo : kindly lent by the French Embassy, Delhi.

पस्कारं विना एवं स्वतो जायमानस्य बुद्धिविकासस्य 'परिपाकः' (Maturation) इति नाम दत्तं मनोविज्ञानिभिः। बालाः कस्यामपि दशायां आत्मनः अक्षिश्रोत्रादिसत्तां जानन्ति ; अपरस्यां दशायां वासरनामानि तेषां क्रमिकत्वं च विदन्ति। कस्यामपि दशायां ईषज्जाटिल्ययुक्तं आदेशं कर्तुं जानन्ति। अपरस्यां दशायां कस्या अपि समस्याया उत्तरं ज्ञातुं च शक्नुवन्ति। अधिकवयसो बालाः न्यूनवयोभ्यो बालकेभ्यः बुद्धिमत्तरा वर्तन्ते। चतुर्हायनात् पञ्चहायनो बालः बुद्धिमत्तरः, षड्वर्षीयस्तु बुद्धिमत्तमः। बुद्धेः कुशलतारूपत्वात् अधीतविषये परीक्षणं केवलं विषयस्मरणं सूचयेत् , न तु शक्तिमिति अधीतविषये परीक्षां न कृतवानयं बिने-महोदयः। पाठशालामनागतवन्तोऽपि बालाः निर्दिष्टे कस्मिंश्चिद्वयसि किं किं जानन्ति, किं किं कुर्वन्ति इति, पारिस्नगरीयाणां बालकानां शतद्वयस्य प्रश्नोत्तरग्रहणेन साधारणं किमपि मानं निश्चिकाय। ततश्च वयसोऽनुगुणं कानिचन प्रश्नजातानि सज्जीचकार। एतानि च वयःक्रममनुसृत्य क्रमिकतां प्रापितानि (Graded) आसन्। अस्मिन् कार्ये अस्य साहाय्यकारी बिने शिष्यः **तियोफैल् सैमन्** (Theophile Simon)-नामकः उपाध्यायः आसीत्। ततश्चास्य परीक्षणस्य **बिने-सैमन्**-मानमिति नाम जातम्। एवं संपादिता प्रश्नावल्येव मनोवयसः मापनम् अजायत। इयं प्रश्नावलिः प्रथमं 1905-तमे वर्षे उद्भाविता, 1908-तमे वर्षे, 1911-तमे वर्षे च पुनरपि संशोध्य प्रकाशिता। तृतीयवर्षादारभ्य चतुर्दशवर्षपर्यन्तं बालकानां बुद्धिपरीक्षणाय अत्र प्रश्नाः कृताः।

बिने-महोदयस्य इमां प्रश्नावलीं अन्यदेशीया विज्ञानिनः स्वदेशबालानां बुद्धिपरीक्षणायांग्यकुर्वन्। तत्र स्वदेशपरिवेषानुगुणं प्रश्नेषु परिवर्तनमप्यकुर्वन्। अमेरिकादेशे **गोडार्ड्** (Goddard) - नामकेन-विज्ञानिना, **टेर्मन्** - नामकेन (Terman) विज्ञानिना च इयं प्रश्नावली प्राकाश्यं प्रापिता। अनयोरुत्तरेण **मेर्रिल्** ( Merril ) - नामकेनापरेण च प्रश्नावल्यां परिवर्तनं कृतम्। अस्याः **स्टान्फोर्ड्-बिने-मानम्** (Stanford Binet Test) इत्यपि नाम। अङ्गलदेशे **सिरिल् बर्ट्**-नामको विज्ञानी इमां प्रश्नावलिमुपयुक्तवान्।

डेविड् वेक्स्लेर् (David Wechsler)-नामको विज्ञानी अमेरिका-देशीयः स्वनाम्ना किमपि मानं 1944-तमे वर्षे कल्पितवान्। अनेन मानेन षष्ट्यब्दपूर्तिं प्राप्तवतामपि बुद्धेः परीक्षणं कर्तुं शक्यमित्यभिप्रयन्ति।

बिने-महोदयस्य प्रश्नाः केचन दीयन्ते।

(a) **वर्षत्रयवतो बालस्य दीयमानाः प्रश्नाः**

1. चक्षुःश्रोत्रनासिकादीनां निर्देशे तेषां प्रदर्शनम्।
2. उक्तायाः द्व्यङ्कसंख्यायाः पुनः कथनम्।
3. चित्रे दृष्टानां वस्तूनां निर्देशः।
4. अद्य वृष्टिः वर्तते। अहं चित्रं पश्यामि इत्यादिलघुवाक्यस्य परोक्तस्य पुनः कथनम्।

(b) **पञ्चहायनस्य दीयमानाः प्रश्नाः।**

1. भारद्वयस्य तोलनम्।
2. दत्तं चतुरश्रादिचित्रं विलोक्य लेखनम्।
3. दशपदघटितस्य वाक्यस्योक्तस्य कथनम्।
4. नाणकानां चतुष्टयस्य गणनम्।

(c) **अष्टहायनस्य दीयमानाः प्रश्नाः।**

1. चित्रे परित्यक्तांशस्य कथनम्।
2. विंशतेरारभ्य एकपर्यन्तं प्रातिलोम्येन संख्यानां निर्देशः।
3, पञ्चांककसंख्याया उक्तायाः कथनम्।
4. तारिकायाः वारस्य मासस्य वर्षस्य च निर्देशः।

(d) **द्वादशहायनस्य दीयमानाः प्रश्नाः—**

1. दत्तानि त्रीणि पदानि उपयुज्यैकस्य वाक्यस्य रचनम्।
2. निमेषत्रये पदानां षष्ट्याः यथास्मरणं कथनम्।

3. वाक्ये पदानां स्थानविनिमयं कृत्वा उक्तस्य वाक्यस्य अर्थावगमनम् इत्यादि ।

उपरि निर्दिष्टानां प्रश्नानां दर्शने इदं भायात्, यत् बुद्धिपरीक्षणाय बहवः प्रश्नाः दीयन्त इति, ते च वयोवृद्ध्यनुगुणं कठिनाः कल्पिता इति च ।

कथं बुद्धेः परीक्षा मानं च भवतीति विचार्यते । जन्मना अष्टहायनो बालः स्वार्थं कल्पितेषु प्रश्नेषु, प्रायशः त्रिपादान् (75%) यदि सम्यगुत्तरयति तर्हि तस्य मनोवयः अपि अष्टौ एव ; जन्मवयश्चाष्टौ ।

'बिने-महोदयः वयसोऽनुगुणं प्रश्नानां वर्गीकरणं कथं कृतवान्, अस्य वयसः एते एव प्रश्नाः देयाः इति कथं निश्चितवानि'ति जिज्ञासा भवेत् । जन्मना समानवयसः बालकाः अनक्षरज्ञा अपि किं किं जानन्ति ? किं किं कार्यं कर्तुं शक्ता भवन्तीति बालान् पृष्ट्वा तेषां कार्यमपि दृष्ट्वा ज्ञातवान् । ततश्च तानेव विषयान् अधिकृत्य प्रश्नान् समकल्पयत् । ततश्च सप्तहायनेषु यदि पञ्च सप्ततिशतांशाः बालाः (75%) तान् प्रश्नान् अवगत्य उत्तरयन्ति, तर्हि ते एव प्रश्नाः सप्तहायनानां बालानां बुद्धिमापनाय अर्हाः इति निश्चिकाय ।

1. मनोवयः **म. व.** इत्यनेन निर्दिश्यते । आङ्ग्लेय्यां M. A (Mental age) इति निर्देशः । जन्मवयः कालवयो वा **का. व** इति निर्दिश्यते । आंग्लेय्यां C.A. (Chronological age) इति निर्देशः क्रियते । स्वमानेन बालानां बुद्धिपरीक्षणात् पूर्वं बिने-महोदयः स्वकीयं मापनमेव बालैः शोधयामास किमिदं मापनं समीचीनमिति । बहुवारं एषां प्रश्नानां बालेषूपयोगेन स्तरो निश्चितोऽभूत् । एतेन मानेन बालस्य मनोवयसो विशदज्ञानाय, संख्यात्मना तन्निर्देशे भिन्नांश-(Fraction) - परिवर्जनाय, सुलभनिर्देशाय च काचन प्रणाली अनुस्रियते । मनोवयसः संख्या शतेन गुण्यते । कालवयसा च विभज्यते, या संख्या प्राप्यते सैव मनोवयसः वर्षात्मना द्योतनी भवति । बुद्धेश्च मानं कृतं भवति । अस्य च बुद्धिलब्धिः (**बु. ल.**) [Intelligence Quotient ; IQ. ] इति निर्देशः क्रियते ।

इयं पद्धतिश्च स्टेर्न् (Stern 1871-1938)-नामकेन विज्ञानिना दृष्टा।

कोऽपि किं बुद्धिमान् उताबुद्धिमानिति, तस्य मनोवयसः कालवयसा सह तोलने कृत एव ज्ञायेत। यदि कालवयः मनोवयश्च तुल्यं स्यात्, बुद्धिलब्धि-संख्या च शतं भवति तर्हि सः बुद्धिमानित्युच्यते। यदि नवहायनो बालः नवहाय-नाय बालाय कल्पितान् प्रश्नान् उत्तरयति तर्हि तस्य बुद्धिसंख्या शतं स्यात्। निरूपणम्। म. व. 9 × 100 = 900 ÷ 9 = 100 बु. सं.।

यदि षड्वर्षः बालः नववर्षीयप्रश्नान् उत्तरयति तर्हि तस्य बुद्धिसंख्या 150 भवेत्।

म. व. 9 × 100 = 900 ÷ 6 = 150 बु. सं। अयं कालवयसः अधिकमनोवयोवान् वर्तते। प्रतिभावानित्युच्यते मनोविज्ञानिभिरयम्। यदि द्वादशवर्षीयो बालः नवहायनस्यैव प्रश्नानुत्तरयति तर्हि तस्य बुद्धिसंख्या 75 भवेत्। म. व. 9 × 100 = 900 ÷ 12 = 75 बु. सं। अयं दुर्बलबुद्धिरिति निर्दिश्यते।

## बुद्धिपरीक्षणेन ज्ञाताः केचन अंशाः

बुद्धिमापनप्रक्रियामुपयुज्य बहवो विज्ञानिनः तत्र तत्र बहूनां बालानां बुद्धिं परीक्ष्य कानिचन तत्त्वानि सर्वजनसाधारणानि दृष्टवन्तः।

(अ) बुद्धिः जनतामध्ये कियत्या मात्रया प्रसृता वर्तते इति इदानीं ज्ञायते। अस्य बुद्धिप्रसरः* इति नाम। अत्र बुद्धिसंख्यानुगुणं जनाः विभक्ता वर्तन्ते। अनन्तरं जनानां संख्याः प्रतिशतरूपेण निर्दिश्यन्ते।

---

1. $\frac{\text{M. A.}}{\text{C. A.}} 100 = \text{IQ}.$

*Distribution of intelligence.

| | | | |
|---|---|---|---|
| I. बुद्धिसंख्या- | 140 ततः उपरि वा यस्य सः | प्रतिभावान्[1] उच्यते। | |
| II. | ,, | 120 - 140 यस्य सः | अत्युत्कृष्टबुद्धिः[2] ,, |
| III. | ,, | 110 - 120 ,, | उत्कृष्टबुद्धिः[3] ,, |
| IV. | ,, | 90 - 110 ,, | सामान्यबुद्धिः[4] ,, |
| V. | ,, | 80 - 90 ,, | मन्दबुद्धिः[5] ,, |
| VI. | ,, | 70 - 80 ,, | दुर्बलबुद्धिः[6] ,, |
| VII. | ,, | 50 - 70 ,, | क्षीणबुद्धिः[7] ,, |
| VIII. | ,, | 25 - 50 ,, | मूढः[8] ,, |
| IX. | ,, | 0 - 25 ,, | जडः[9] ,, |

जनसमाजे प्रतिशतांशरूपेण बुद्धिमतामबुद्धिमतां च जनानां संख्या कथं वर्तत इत्युच्यते ।

| | |
|---|---|
| प्रतिभावन्तः | 1% |
| अत्युत्कृष्टबुद्धयः | 6% |
| उत्कृष्टबुद्धयः | 13% |
| सामान्यबुद्धयः | 60% |
| मन्दबुद्धयः | 13% |
| दुर्बुलबुद्धयः | 6% |
| क्षीणबुद्धिप्रभृतयः | 1% |

लोके प्रायशः सामान्यबुद्धयोऽधिका वर्तन्ते । प्रतिभावतां संख्या यावती तावत्येव क्षीणबुद्ध्यादीनां संख्या वर्तते । एवं अत्युत्कृष्ट-उत्कृष्टबुद्धीनां दुर्बल-मन्दबुद्धीनां च संख्यापि समैव ।

---

1. Genius.
2. Very superior intelligence.
3. Superior intelligence.
4. Average or normal intelligence.
5. Dull, Backward.
6. Dull, Feeble-minded
7. Moron.
8. Imbecile.
9. Idiot.

पूर्वकाले स्थितानां अतिबुद्धिमत्त्वेन प्रथितानामपि केषांचित् बुद्धिसंख्या तेषां ग्रन्थादीनां परीक्षणेन कृता वर्तते ।

| | | |
|---|---|---|
| गाल्टन् | (Galton) | 200 |
| पोप् | (Pope) | 160 |
| टेनिसन् | (Tennyson) | 155 |
| मिल्टन् | (Milton) | 145 |

टेर्मन्-महोदयः (Terman) तत्तद्वृत्तिषु ये उत्कर्षं प्राप्तवन्तः तेषां बुद्धिसंख्या कियती वर्तते स्म इत्यपि दृष्टवान् । तन्मतानुसारेण बुद्धिसंख्या दीयते ।

| | | |
|---|---|---|
| 1. | तत्त्वदर्शिनः | 170 |
| 2. | कवयः, कलाभिज्ञाः, नीतिनिपुणाश्च | 160 |
| 3. | विज्ञानिनः | 155 |
| 4. | सङ्गीतविद्वांसः | 145 |
| 5. | चैत्रिकाः | 140 |
| 6. | सेनापतयः | 125 |

अध्यापनवृत्तौ स्थितानां महामहोपाध्यायानां संख्या न निर्दिष्टेति द्रष्टव्यम् । एवं अस्मद्देशीयकविशास्त्रकाराणामपि बुद्धिसंख्या द्रष्टुं शक्यैव ।

जडाः (Idiots)—दुर्बलमतिषु ये अत्यन्तं बुद्धिहीनाः ते जडाः इति व्यपदिश्यन्ते । एते साधारणीं विपदमपि न जानीयुः । अग्नौ पाणिं निदध्युः । अगाधे जले अवतरेयुः । आधावतो मोटार्शकटस्य पुरतस्तिष्ठेयुः । भोक्तुमपि न जानीयुः । स्वशरीरं स्वच्छं रक्षितुमपि अशक्ता भवेयुः । पदस्थाने एकमक्षरं कथयेयुः ।

मूढाः ( Imbeciles)—येषां जडानामिव बुद्धिदौर्बल्यं नाधिकं ते मूढा इति व्यपदिश्यन्ते । एते साधारणीं विपदं परिहर्तुं जानन्ति । ईषत् भाषेरन् ।

पठनं लेखनं च कर्तुं न प्रभवेयुः । उपयुक्तं कर्म कर्तुमेषां ज्ञानं न स्यात् । एतेष्वपि केचन परेषां पर्यवेक्षणे किमपि कार्यं कर्तुं शक्ता वर्तेरन् । एष्वेव ईषदुत्कृष्टाः स्नानादिकमाचरितुं वस्त्रं धर्तुं च जानीयुः ।

**क्षीणबुद्धयः**—(Morons) मूढेभ्योऽपि ईषत् अधिकबुद्धिमन्तः क्षीणबुद्धयो भवन्ति । एते साधारणानि दैनंदिनिककार्याणि कर्तुं दीयमानं शिक्षणमवगच्छेयुः । लघूनि कार्याणि आचरितुं कुत्रापि गन्तुमागन्तुं च शक्ता वर्तेरन् । लब्धं अल्पमपि धनं वृथा व्ययीकुर्युः । एते बालाः तास्कर्यादिषु नियुक्ताः विना चिन्तनं प्रवर्तेरन् । असकृदभ्यस्तं कर्म कर्तुमेवैषां स्पृहा स्यान्न तु नूतनं कार्यम् कर्तुम् ।

(आ) बुद्धिः कति वर्षाणि वर्धते ? वर्धनं च सर्वेष्वपि समानं वर्तते किम् ? इति प्रश्नस्य एवं उत्तरं दीयते । बुद्धिः बालस्य पञ्चदशे षोडशे वा वर्षे पूर्णां वृद्धिं प्राप्नोति । अतिबुद्धिमतां बुद्धिः ततः परमपि द्वित्राणि वर्षाणि वर्धेत । मन्दबुद्धीनां तु दशमात् द्वादशाद्वा वर्षात्परं न वर्धते । षोडशवर्षस्य बालस्य चत्वारिंशद्वर्षस्य पुरुषस्य च बुद्धौ भेदः अधीतविषयज्ञानमूलो भवति । वृद्धिश्च पञ्चवर्षपर्यन्तं तीव्रा । ततः साधारणी भवति ।

(इ) सकृत् परीक्षणेन दृष्टा बुद्धिसंख्या सर्वदा अन्यूनानतिरेकं तथैव वर्तेत इति न मन्तव्यम् । कदाचित् बुद्धिसंख्या वर्धेत, कदाचित् हीयेत च । आरोग्यादिभिरधिका स्यात् । रोगादिभिः न्यूना भवेत् । सकृत् कदाचित् परीक्षणेन बुद्धिसंख्या न निश्चेतव्या । अनन्तरे वर्षेऽपि परीक्षा कर्तव्या । ततः परमेव संख्या निर्धारणीया भवति ।

(ई) लिङ्गभेदेन बुद्धिसंख्यायां भेदो न भवति । पूर्वं तु बालिकापेक्षया बाला बुद्धिमन्त इति प्रतीतिरासीत् । यूनामपेक्षया युवतीनां बुद्धिरधिका इति इदानीं केचिन्मन्यन्ते । विश्वविद्यालयपरीक्षासु यूनोऽतिक्रामन्त्यो दृश्यन्ते युवतयः । तत्र निदानं परिवेषः श्रद्धा च । एवमेव नीग्रोप्रभृतिमानववर्ग (Racial)-कृतोऽपि

बुद्धेः तरतमभावो न भवति। सर्वेष्वपि मानववर्गेषु बुद्धिमन्तः अबुद्धिमन्तश्च समं वर्तन्ते।

(उ) पितॄणां वृत्त्यनुरोधेन अपत्यानां बुद्धिसंख्या किं विभिन्ना भवेदित्यपि विचारः कृतः। नगरवासिनां धनिकानामुन्नतकार्यकारिणां चापत्यानि ग्रामवासिनां दरिद्राणां नीचकर्मकारिणां चापत्येभ्योऽधिकबुद्धिसंख्यावन्ति दृश्यन्ते। अत्रापि परिवेष एव कारणम्। येषां बालानामार्थिकं शैक्षणिकं च सौविध्यं वर्तते तेषां बुद्धिसंख्यापि अधिका दृश्यते।

(ऊ) अध्ययनस्य बुद्धिसंख्यायाश्च सम्बन्धो वर्तते। येषां बुद्धिसंख्या अधिका ते परीक्षादिष्वपि जयशीला वर्तन्ते। बुद्धिमतां परीक्षापराजयस्य अश्रद्धा अनुद्योगो वा कारणं स्यात्। अत्यात्मप्रत्ययोऽपि पराजयं जनयेत्। अमन्दाभियोगः श्रद्धा च बुद्ध्या सहापेक्ष्यते प्रगतिप्राप्त्यर्थम्। न्यूनबुद्धिसंख्याका विद्यार्थिनः अतिपरिश्रमे कृतेऽपि परिमितमेव जयं प्राप्नुवन्ति।

(ऋ) बुद्धिमन्तो बालाः जनसमाजे भव्यं जीवनं कर्तुं समर्था भवन्ति। केचन अतिबुद्धिमन्तः कांश्चन निहीनबुद्धीन् जनान् द्विषन्तः तैः सह वर्तितुं अशक्ता भवन्ति। बुद्धिमन्तः प्रायशः सच्चारित्रा वर्तेरन्। केचन तु कदाचित् दुर्गुणा भवेयुः। अत एव कालिदासः 'अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः' इत्याह। मानसिकास्वास्थ्यस्य मन्दबुद्धित्वं कारणमिति मनोविज्ञानिनः।

(ॠ) प्रायशो बालाः सामान्यबुद्धिमन्तः। मूढाः जडाश्च पाठशालाऽऽगमनपर्यन्तं न जीवन्ति। क्षीणबुद्धयः पाठशालामागतवन्तोऽपि शीघ्रमेव तां विजहति। तदिदमुपाध्यायानां महद्भागधेयम्।

(ऌ) बुद्धिमान्द्ये कारणानि।

वंशधर्मेणापि मान्द्यं जायते इति विदितम्। अपस्माररोगवतां बुद्धिमान्द्यं जायते। केनाप्यभिघातेन मस्तिष्कस्य जाता क्षतिः (Injury) बुद्धिमान्द्ये

कारणं भवति । प्रसूतिकाले उपयुज्यमानैः शस्त्रैरपि शिशोः मस्तिष्कक्षतिर्भवति । रोगादिभिरपि बुद्धिमान्द्यं जायते । बाल्ये संवेगादीनामुपरोधेन नैसर्गिकविकासः प्रतिरुद्धो भवेत् । अङ्गहीनानां नीचभावनावशादपि बुद्धिमान्द्यं जायते । अन्तिम-कारणद्वयेन जायमानस्य बुद्धिमान्द्यस्य चिकित्सा मनोविश्लेषणचतुरैः विज्ञानिभि-रीषत् कर्तुं शक्या वर्तते ।

## बुद्धिपरीक्षावैविध्यम्

बिनेमहोदयपरीक्षाप्रश्नः प्रायशः एकैकस्याः अपि व्यक्तेः पृथक् परीक्षण एव उपयुज्यते । अत्रोत्तरदातुः भाषाज्ञानमप्यपेक्षितम् । एकैकशः परीक्षणे कालव्ययश्च अधिको भवेत् । परीक्ष्यो बालः कदाचिदुत्तरदाने लज्जावान् भूत्वा उत्तरं नैव दद्यात् । अत एव गणपरीक्षणम् (Group tests), निष्पादनपरीक्षणम् (Performance Test) इति द्वयं कल्पितं वर्तते ।

प्रथमजगद्युद्धकाले गणपरीक्षणमिदंप्रथमतयोपयुक्तमासीत् । तदानीं अमे-रिकादेशे चाधिकसंख्याकानां योधानां अधिकारिणां च नियुक्तेरावश्यकता आसीत् । एवं संगृहीतेषु के के कस्मिन् कार्ये नियोगार्हा भवेयुः ? कीदृशं प्रशिक्षण-मेभ्यो देयम् ? कीदृशे कार्ये एषां स्वतोऽभिरुचिर्वर्तते ? इत्येवं परीक्षा कर्तव्या आसीत् । ततश्च मनोविज्ञानिनः, येर्कूस् (Yerkes)-नामकस्य विज्ञानिनः आध्यक्ष्ये गणपरीक्षणप्रक्रियां निरपादयन् । इदं द्विविधमासीत्; येषां योधानां आंग्लेयीज्ञानमासीत् तेषां कृते आर्मी-आल्फा - परीक्षणम् - इति एकं परीक्षणं, तदज्ञानवतां कृते आर्मी-बीटा-परीक्षणमिति चापरं परीक्षणं कल्पितम् । प्रथम-परीक्षणे बुद्धिपरीक्षाप्रश्नाः मुद्रिताः समकाले एव दीयन्ते । भाषाज्ञानवद्भिः प्रश्नानवगत्य तेषामुत्तरं परिमिते काले द्रुततरं देयम् । द्रुतं समीचीनं च यः उत्तरयति सः विलम्बेन अबद्धं च यः उत्तरं लिखति तस्यापेक्षया बुद्धिमत्तर एव स्यात् । बीटापरीक्षायां चित्राणि संख्याश्चोपयुज्यन्ते । अत्र प्रश्नपठनं नापेक्षितम् । परीक्षकाश्च किं कर्तव्यमिति परीक्ष्येभ्यः हस्तसंज्ञाभिः सूचयन्ति ; उत्तरं च पत्रे चिह्नकरणेन लेखनीयम् स्यात् ।

एतादृशसैनिकपरीक्षणपद्धतिमनुकृत्य बालानामपि गणशः परीक्षणार्थं गण-परीक्षणप्रश्नावल्यः कल्पिता वर्तन्ते । **टेर्मन्**-(Terman), **आटिस्** (Otis), **पिन्ट्नर्** (Pintner) - प्रभृतीनां प्रश्नावलिरुपयुज्यते पाश्चात्यदेशेषु । द्वितीय-जगद्युद्धकाले च, सैनिकसामान्यवर्गीकरणपरीक्षा (Army General Classification Test) इति कापि परीक्षा सैनिकविषये उपयुज्यते स्म ।

गणपरीक्षाप्रश्नेषु केचन दीयन्ते ।

1. पदज्ञानपरीक्षा — 'दृढम्' इत्यस्य समानार्थकं पदं अधोनिर्दिष्टेषु किं भवतीति रेखादानेन सूच्यताम् । पीवरम्, गुरु, बलवत्, गाढम् ।

2. व्यतिरेकिपदं लिख्यताम् ।

सुखम्, शीतम्, कठिनम्, दीर्घम् ।

3. रिक्ते स्थाने उचितं पदं निवेश्य वाक्यस्य पूरणं क्रियताम् । सूर्यः— उदेति । — अस्तमेति ।

ग्रीष्मे, प्रातः, प्राच्यां, आकाशे, प्रतीच्याम् ।

4. एकवर्गीयाः भिन्नवर्गीयाश्चाधो दत्ताः । यः दत्ते वर्गे नान्तर्भवति तस्य अधः रेखा दीयताम् ।

(अ) आम्रः, नालिकेरः, पनसः, दर्भः, सालः ।

(आ) तटाकः, पल्वलम्, नदी, कूपः ।

(इ) सीता, कमला, रामगोपालः, रुक्मिणी ।

5. अधोदत्तसंख्यानुगुणं संख्याद्वयं लिख्यताम् ।

1, 3, 5, 7, 9, 11 — —

2, 3, 6, 7, 10, 11 — —

6. साधारणबोधपरीक्षा-(Common sense test) उचितमुत्तरं दीयताम् । धनभस्त्रिका नष्टा चेत्, अन्या क्रेतव्या, नगररक्षकेभ्यो निवेदनीयम्, बन्धोः भस्त्रिका ग्राह्या । विषादः कार्यः ।

7. अबद्धार्थदर्शनपरीक्षा - अत्र अर्थे स्थितमसमीचीनत्वं प्रदर्शनीयम् ।

(1) अस्मिन् वर्षे विवाहं कृतवतां पुरुषाणां संख्यापेक्षया स्त्रीणां संख्या अधिका ।

(2) कक्ष्यां प्रविष्टः उपाध्यायः प्रथमं छात्राणां सान्निध्यांकनं कृतवान् । पश्चात् ये अत्र असन्निहिताः ते सर्वे उत्तिष्ठन्तु इति आदिष्टवान् ।

भाषितुं लेखितुञ्चाशक्तानां बालानां गणशः परीक्षाकरणाय क्रियाकरणपरीक्षापि वर्तते । लेखनपरीक्षादाने बालाः समर्थाश्चेत् लेखनपरीक्षैव देया ; न तु क्रियाकरणपरीक्षा ।

गणपरीक्षायां केचन दोषा वर्तन्ते । परीक्षाकाले परीक्ष्यस्य मनोभावः कथं वर्तते इति ज्ञातुं नास्त्यवकाशः । ततः स्थूलतया एव बुद्धिसंख्याज्ञानं स्यात् । इयमपि परीक्षा पाठशालापरीक्षासदृशी वर्तते । ततश्च पाठशालापरीक्षाविद्वेषिणो बालाः इमामपि परीक्षां द्विष्युः । उत्तरदाने शब्दज्ञानं अपेक्ष्यते । ततश्च शब्दज्ञानवतामेव इयं परीक्षा लघ्वी स्यात् । निष्पादनपरीक्षा अस्मद्देशे बाटिया (Batia)-महोदयेन सम्पादिता वर्तते । पाश्चात्यदेशे **नाकूस्** (Knox)-नामा विज्ञानी अन्ये च इमां परीक्षां कल्पितवन्तः । अत्र परीक्ष्यः बहुभिः दत्तैः दारुखण्डैः किमपि निर्दिष्टं संस्थानं संपादयेत् । फलके (Form board) स्थितेषु विभिन्नाकारेषु छिद्रेषु उचितानि खण्डानि निवेशयेत् । व्यूहे (Maze box) अन्धमार्गं परिहृत्य पारं गच्छेत् । चित्रे विमुक्तान् भागान् लिखेत् । एताः क्रियाः यः द्रुतं समीचीनं च करोति स बुद्धिमान् भवति ।

क्रियापरीक्षणेनापि बुद्धिसंख्या ज्ञातुं शक्येति नास्ति निश्चयः, यतो धनिककुमाराणां एतादृशवस्तुपरिचयः पूर्वमेव स्यात् । उपकरणानां मूल्यमपि अधिकम् ।

## शिक्षणे बुद्धिपरीक्षायाः प्रयोजनानि

बुद्धिपरीक्षया बहूपकारः क्रियते शिक्षाविषये । बालानां पाठशालाप्रवेशकालेऽपि इयं परीक्षोपयोक्तुं शक्यते । छात्रेषु बुद्धिमतां मन्दबुद्धीनां च

विभजने इयं प्रयोजनवती भवेत् । बुद्धिशक्त्यनुगुणं वर्गीकरणं मन्दमतीनां बालानां विषये विशिष्टशिक्षादाने साहाय्यं कुर्यात् । एवमपसामान्यानां गुणहीनानां च बालानां पृथगध्यापनं कार्यं भवति । मन्दमतीनां पृथक्करणं तेषां नीचभावनां जनयेदिति, बुद्धिमद्भिः संपर्काभावात् बुद्धेः विकासप्राप्त्यर्थावकाशः तेभ्यो न दीयते इति चात्र दोषः उद्घाट्यते । अतः इदानीं एकैकस्यामपि कक्ष्यायां मन्दमतयः सामान्यबुद्धयः तीक्ष्णबुद्धयश्च वर्तन्ते; परस्परसंपर्कात् मन्दमतयोऽपि बुद्धिविकासं प्राप्नुवन्ति इति विश्वासः क्रियते । बुद्धिपरीक्षया के उच्चतरविद्यां प्राप्तुं शक्ता इत्यपि ज्ञातुं शक्यते । ततः बालानां मार्गप्रदर्शनं कर्तुं शक्यम् । कस्य कस्यां विद्यायां कियत् प्रावीण्यं प्राप्तुं शक्यमिति निर्धार्य तत्र तस्य प्रवर्तनमेव मार्गप्रदर्शनमित्यनेनोच्यते । एवं कृते, बालस्य वृथा परिश्रमः धनव्ययश्च न भवेत् । अनधिकारिणां दीयमाना उच्चतरविद्या, प्राप्ते पराजये, प्रत्याशां नाशयेत् । ततः अनुत्साहः कलहकरणमित्यादयो जायन्ते । अभिवृत्तौ (Aptitude), लब्धे ज्ञाने, प्रकृतौ (Temperament), प्रकृतिविशेषेषु (Traits), शरीरधर्मे च बालाः परस्परं विभिन्ना वर्तन्ते । एते धर्माः, बालानां विद्याशिक्षणे अवश्यं स्वं स्वं प्रभावं प्रदर्शयन्त्येव । ततश्चोपाध्यायाः एतान् सर्वानप्यंशान् मनसि धरन्तः अध्यापनं कुर्युः । बुद्धिपरीक्षया छात्राणां बुद्धिसंख्या ज्ञायत एव । अथापि तत्रैवातिविश्वासो न कार्यः यतः एताः सर्वा अपि परीक्षाः आर्थिकसौविध्यवतां धनिकानां, संस्कृतिमतां च पुत्राणां सुलभा वर्तन्ते । ग्रामे स्थितानां कृष्यादिकर्मकारिणां पुत्राणां तु न तथा सुलभाः । ततश्च अस्मिन् विषये यथोचितं मध्यमां वृत्तिमाश्रित्य उपाध्यायाः प्रवर्तेरन् इति सारः ।

## अभिवृत्तिः ( Aptitude )

एकैकस्यापि बालकस्य यथा सामान्या बुद्धिर्वर्तते एवं केषुचिद्विषयेषु कार्येषु वा विशिष्टा बुद्धिरपि वर्तेत । कस्यापि बालकस्य नूतनभाषाध्ययने, अन्यस्य गणिते, अपरस्य सङ्गीते, इतरस्य यन्त्राणां विश्लेषणे संश्लेषणे च रुचिर्भवति । तथा च निर्दिष्टे

कस्मिन्नपि विषये या रुचिः या च निगूढा शक्तिः अनयोरुभयोः समुदितयोर्नाम अभिवृत्तिः (Aptitude) इति सामान्यतो निर्देष्टुं शक्यम्। सर्वेष्वपि बालेष्वभिवृत्तिः विभिन्नपरिमाणा वर्तते। कस्मिन्नपि कार्ये स्थिता इच्छा केवलं अभिवृत्तित्वेन गण्यते कैश्चित्। कस्यापि आकाशयानविद्रावणे अभिरुचिः स्यात्। परं किञ्चित्कालप्रशिक्षणात्परं ज्ञायेत यदयं तां वृत्तिं प्राप्तुं अनर्हः इति। अभिवृत्तिशब्दः यथा केवलेच्छां न सूचयति तथा कस्मिन्नपि विषये पूर्वमेव प्राप्तां शक्तिमपि न निर्दिशति। अभिवृत्तिशब्दः कस्यापि बालस्य निर्दिष्टे विषये स्थितं अभिरुचि-सत्त्वं तद्विषयकश्रद्धावत्त्वं प्राप्त्यर्थापेक्षितशक्तिमत्त्वं च व्यञ्जयतीति कोऽपि विज्ञानी अभिवृत्तिं लक्षयति।

संगीत-भाषाप्रभृतिविषयेषु पूर्वमभूतं ज्ञानं कौशलं वा शिक्षणेन प्राप्तुं या शक्तिरपेक्ष्यते तस्याः निगूढायाः शक्तेः सत्तां सूचयितुं क्षमा या दशा अथवा यत् असाधारणधर्मजातं बालेषु दृश्यते सा अभिवृत्तिरिति[1] अभिवृत्तिलक्षणमन्यः कथयति। दशाशब्देन मातुमर्हं जीवे इदानीं स्थितं च कौशलं निर्दिश्यते। इदमेवाभिवृत्तिशब्दवाच्यं भवति, यदीदं इदानीं जीवे अविद्यमानं ज्ञानं कौशलं वा संपादयितुं क्षमां शक्तिं सूचयितुं शक्तं स्यात्। गणितज्ञानं रसायन-ज्ञानसंपादने शक्तिं सूचयेत्। एवं शरीरतन्त्रज्ञानं भैषज्यज्ञानसंपादने शक्तिं सूचयेत्। बाले अधुना स्थितं ज्ञानं भविष्यत् ज्ञानं सूचयितुं शक्तं चेत् तर्हि तत् अभिवृत्तिशब्दवाच्यं भवेत्। एवं च क्षमतापरीक्षा (Ability test) अभिवृत्ति-परीक्षा च (Aptitude test) समानोद्देश्यके भवतः। द्विचक्रिकाविद्रावणे पद्यगाने च या शक्तिः अधुना वर्तते सा (Ability) क्षमताशब्देन अभिधीयते।

---

1 "Aptitude is defined as a condition or set of characteristics regarded as symptomatic of an individual's ability to acquire with training some knowledge, skill, or set of responses such as the ability to speak a language, to produce music, etc." quoted by Asher and others. p. 443.

सद्यो द्रुतं ज्ञातुं गीतगणितादिषु श्लाघार्हां प्रगतिं प्राप्तुं यत् सामर्थ्यं वर्तते तस्याभिवृत्तिरिति नामेति अनयोः भेदः। [1]"प्रशिक्षणार्हता अभिवृत्तिरि"ति अन्यत् लक्षणं आह कश्चित्। सङ्गीताभिवृत्तिपरीक्षा, यान्त्रिकाभिवृत्तिपरीक्षा, कलाभिवृत्तिपरीक्षा, लिपिकराभिवृत्तिपरीक्षा इति बह्व्यः परीक्षाः वर्तन्ते। मास् (Moss)-नामको विज्ञानी भैषज्यमध्येतुमिच्छतां भैषज्याभिवृत्तिपरीक्षां कल्पितवान्। अभिवृत्तिपरीक्षा फलद्वयं उद्दिश्य कर्तुं शक्यते। अनया परीक्षया ज्ञाता अभिवृत्तिः, बालः कश्चित् कस्मिन् शास्त्रे अथवा कस्यां वृत्तौ प्रगतिमुत्कृष्टां अथवा निकृष्टां प्राप्नुयादिति विद्यां वृत्तिं चाधिकृत्योपदेशम्(Vocational guidance) कर्तुं शक्नोति। वृत्तिवरणे (Vocational selection) अनया यत् साहाय्यं प्राप्यते तत् द्वितीयं प्रयोजनं भवति।

अभिवृत्तिः निलीनं स्थितां कार्यकरणशक्तिं प्राधान्येन सूचयति। परं कार्यकरणे श्रद्धापि अपेक्ष्यते; संगीतस्वरभेदज्ञानवानपि श्रद्धाविहीनः गीते कुशलो न भवति। श्रद्धायां सत्यामपि अशक्तः संगीते नैव निपुणः स्यात्। श्रद्धायां शक्तौ च सत्यामपि अभिरुचिर्न भवति चेत् विद्यायां जयो न भवति। तत्तद्विषयानुगुणं अन्येऽपि केचन धर्मा अपेक्ष्यन्ते। एषु केचन शरीरधर्माः, केचन व्यक्तित्वधर्माः, केचन मनोधर्माः भवन्ति। एते गुणाश्च तत्तद्व्यापारानुगुणं कमप्यनुपातं (Proportion) प्राप्य स्थिता अपेक्ष्यन्ते। भिषजः यान्त्रिकस्य च रूपसन्नहनमपेक्ष्यते। मधुरभाषित्वं वाणिज्ये स्पृहणीयं भवति। उपाध्यायानां हास्यरसज्ञत्वं मुख्यम्। एते गुणाः कदाचित् वंशधर्मेण प्राप्ता भवन्ति; क्वचित् परिवेषादपि विकासं प्राप्नुवन्ति। अत एवोच्यते कालिदासगृहे गजालानमपि कवयेदिति। कुलविद्यायां केषांचित् रुचिः स्वतो जायते। शीघ्रं च तत्र कौशलं प्राप्तुं शक्यते। अत एवोक्तम्–अनधीतापि कुलविद्या स्वतः पाकं प्राप्नोतीति। अमेरिकादेशे वृत्तिग्रहणकाले उपाध्यायानामपि परीक्षा वर्तते। रुचिश्च कस्यां वृत्तौ वर्तत

---

1. "By Aptitude is meant trainability", Bernhardt, p. 152.

इति प्रश्नकरणेन ज्ञायते। उदाहरणभूताः केचन प्रश्नाः दीयन्ते। 'तिरुपतिमागतेन भवता किं द्रष्टुमिष्यते ? देवमन्दिरम् ? वेङ्कटेश्वरविश्वविद्यालयः ? पित्तलपात्रनिर्माण-स्थानम् ? दारुप्रतिमारचनास्थानम् ? कीदृशमौद्योगिकं स्थानमपेक्ष्यते ? वणिजः ? उपाध्यायस्य ? यान्त्रिकस्य ? भिषजः ? प्राध्यापकस्य ?' इति।

अभिवृत्तिपरीक्षणं चोपाध्यायानामप्युपयोगि वर्तते। अभिरुच्यनुगुणविद्या-दाने कालस्य व्यर्थव्ययो न भवेत्। उपाध्यायश्रमस्य च। अत एवेदानीं बहूद्देश्यकपाठशालाः (Multipurpose schools) तत्र तत्र प्रतिष्ठाप्यन्ते। तत्र रुच्यनुगुणं अध्येयविषयाः ग्रहीतुं शक्यन्ते। संस्कृतमपि रुचिमतामेवाध्यापनीयं भवति। **प्लाटो** (Plato) कथयति, 'निर्बन्धाध्यापिता विद्या न स्थायिनी न वा फलदायिनी' इति[1]।

## उपलब्धिपरीक्षा मार्गप्रदर्शनसिद्धान्तश्च[2]

विद्यार्थिनां मनोविकासाय विद्या अध्याप्यते उपाध्यायैः महता परिश्रमेण। न केवलं मनोविकासः किन्तु क्रियाकरणकौशलं सच्चारित्रं च शिक्षायाः उद्देश्यं वर्तते। एवं दत्ता विद्या विद्यार्थिभिरवगता किम् ? प्रगतिश्च प्राप्ता किमिति चासकृत् परीक्षाकरणं चोपाध्यायानां कर्तव्यमापतति। इयं परीक्षापद्धतिश्च बहोः कालाद्वर्तते। अनया परीक्षया बालस्य ज्ञानोपलब्धिः परीक्ष्यते। परीक्षायां प्राप्तैरङ्कैः कियत् केनचित् विद्यार्थिना गृहीतम् ? कक्ष्यायां पठद्भिः अन्यैः बालकैः सह तोलने अयं कीदृशं कतमच्च स्थानं अधितिष्ठति इति च ज्ञातुं शक्यते। परीक्षया बालानां शक्तिः अभिरुचिश्च विषये कथं वर्तते इत्यपि ज्ञायेत। कदाचित् उपाध्यायैः क्रियमाणस्याध्यापनस्य फलेग्रहित्वं कियद्विद्यते इत्यपि परीक्षया ज्ञायते। उपाध्यायस्वीकृतायाः अध्यापनप्रणाल्याः गुणः दोषश्च परीक्षाफलदर्शनेनानुमीयेत। परीक्षायां उत्तरणं प्राप्तवतां बालकानां संख्याधिक्येन

---

1. Enforced study is neither lasting nor fruitful.
2. Achievement test and the principles of guidance,

पाठशालानां गौरवं भवति। परीक्षायां प्राप्तजयो बालः पुनरपि सोत्साहमधीयीतेति परीक्षा क्वचित् प्रोत्साहिनी वर्तते। प्रायशः पाठशालासु कलाशालासु च संप्रदायागता परीक्षैव प्रचाल्यमाना आसीत्। अत्र पूर्वमधीतस्योपलब्धस्य परीक्षा भवति। अधीते विषये प्रश्नाः पञ्च वा षड्वा भवन्ति। उत्तराणि च प्रबन्धरूपेण (Essay) लिख्यन्ते। ततश्च मूल्याङ्कनिश्चयः।

अस्यां परीक्षापद्धतौ केचनांशा विचारणीया वर्तन्ते। इदानीं शिक्षायाः विषयज्ञानं केवलमुद्देश्यं न भवति। शिक्षोद्देश्यमिदानीं विपुलं वर्तते। शोभनो मनोविकासः, चिन्तनाशक्तिवृद्धिः, समाजे समीचीनं वर्तनम्, परिवेषानुगुणं मनसः सामञ्जस्यसंपादनम्, व्यक्तित्वविकासः, सच्चारित्रमिति बहूनि उद्देश्यानि वर्तन्ते शिक्षायाः। तथा च शिक्षया एष्वंशेषु कियन्तो भागाः बालेषु दृश्यन्ते इति सूक्ष्मयापि परीक्षया अधिगन्तुं न शक्यम्। एवं चेत् तर्हि केवलां स्मरणशक्तिं अन्विष्यन्तीयं वराकी परीक्षापद्धतिः किं कर्तुं शक्नुयात्? बुद्धिपरीक्षया ज्ञायत एव यद्विद्यार्थिनः बुद्ध्यादिषु विभिन्नशक्तयो वर्तन्ते इति। ततश्च सर्वानपि बालान् समानशक्तीन् चिन्तयन्ती इयं प्राचीनपरीक्षापद्धतिः कालानुगुणा न भवति। परीक्षया विद्यार्थिनां कुत्रांशे ज्ञानदौर्बल्यं वर्तते? ज्ञानं कियत् प्राप्तमिति च ज्ञातुं न शक्यम्। ततश्च परिहारकरणं असाध्यं भवति। यदा पूर्वकाले विद्यार्थिनः अल्पसंख्याकाः आसन् तदेयं पद्धतिः फलवती बभूवेति वक्तुं शक्यम्। परीक्षायां परीक्षकाः उत्तरपत्राण्यन्तरेण न किमपि विद्यार्थिनमधिकृत्य जानन्ति। परीक्षकाः वस्तुतः बालानां उपलब्धिमपि सम्यक् ज्ञातुं न समर्था भवन्ति, यतस्ते कोपतापादिस्वस्वभावानुगुणं उत्तरस्यार्घतां निर्णीय मूल्यांकान् ददति। एकस्यैवोत्तरप्रबन्धस्य उभाभ्यां परीक्षकाभ्यां विभिन्नं मूल्यांकनं दत्तमासीत्। एकस्यैव प्रबन्धस्य एकेनैव परीक्षकेण विभिन्नकालयोः क्रियमाणं मूल्याङ्कनमपि विभिन्नं दृष्टम्। परीक्षकेण केनचित् दत्तमादर्शोत्तरं (Model answer) अन्येन परीक्षकेण विद्यार्थीयत्वेन गृहीतं दत्तमूल्याङ्कनं चाभवत्। परं मूल्याङ्कनमत्यल्पमासीत्। परीक्षकाणां प्रकृतिः मूल्यांकने कथमुपस्करोतीति अनेन ज्ञायेत। केचनोपा-

ध्याया: अतिमात्रं विनयं प्रदर्शयत्सु बालेषु धनिकपुत्रेषु च पक्षपातिनो भवन्ति। एतादृशपरीक्षया असकृत्, विद्यार्थिनां भीतिर्ग्लानिश्च जायते। परीक्षायां प्राप्तव्यं जयमेव लक्ष्यं कृत्वा उपाध्यायैः क्रियमाणमध्यापनं शिक्षायाः परमं लक्ष्यमेव नाशयेत्। परीक्षाचिन्ता विद्यार्थिनां जिज्ञासां विहन्ति। स्वातन्त्र्येण चिन्तयितुं छात्राः असमर्था भवन्ति। पाठ्यग्रन्थं कृत्स्नं अपठितवन्तः मन्दविद्यार्थिनोऽपि प्रतीक्षितप्रश्नलाभेन परीक्षायां जयं प्राप्नुवन्ति। परीक्षोत्तरणस्यातिप्राधान्य-दानेन परीक्ष्याः परीक्षकसमाराधन-"कापि" (Copying) करण-प्रभृतिभिः कुमार्गैरपि जयप्रेप्सवः क्रियन्ते इति बह्वो दोषा वर्ण्यन्ते सम्प्रदायागतपरीक्षापद्ध-तिविषये।

पूर्वोक्तदोषाणां परिहाराय प्रयतमानैः शिक्षासिद्धान्तकुशलैः पण्डितैः वस्तुनिष्ठपरीक्षाप्रणाली (Objective test) 1920-तमे वर्षे कल्पिता। यदा बुद्धिपरीक्षाविषये गणपरीक्षार्थमुपायो दृष्टः तदैव वस्तुनिष्ठपरीक्षाप्रणाल्यपि पण्डितानां बुद्धौ उदिताभूत्। पूर्वपरीक्षा तु व्यक्तिगुणोपस्कृतपरीक्षा (Subjective test) अभूत्। परीक्षकस्य व्यक्तिविशेषस्य ज्ञान-अज्ञान-वक्रस्वभावादिगुणानुगुणं विद्यार्थिनामङ्कदानमत्र। वस्तुनिष्ठपरीक्षायां तु एते दुर्गुणदोषाः अपाकृता अभूवन्। वस्तुनिष्ठपरीक्षायाः नव्यप्रकारपरीक्षा (New Type Test) इत्यपि नाम। यतः इयं परीक्षापद्धतिः बुद्धिपरीक्षाप्रणालीमाश्रित्य कल्पिता ततः अत्र बालेन उप-लब्धस्य ज्ञानस्य दर्शनं सुसूक्ष्मं कर्तुं शक्यम्। ततश्च, बालस्य दौर्बल्यं कुत्र वर्तते? अध्यापने को दोषः? पाठ्यपुस्तकं किं समीचीनम्? किमपि नूतनतया कल्पनीयं किमित्यादिप्रश्नानामुत्तरं लभ्येत। गुणदोषयोः ज्ञानं, शोभनस्यांशस्या-नुवर्तनं, दुष्टानामंशानां परिवर्तनं अथवा परित्यजनमित्यादिकं च कर्तुमत्र शक्यम्।

इयं नव्यपरीक्षापद्धतिः कांश्चन सिद्धान्ताननुसृत्य मानाङ्किता (Standardised) प्रामाणिकी च (Valid) कृता वर्तते। एवं मानाङ्कितत्वं परीक्षायाः नव्यप्रकारसिद्धान्ताननुसरद्भिः कक्ष्योपाध्यायैरेव (Teacher-made test) कर्तुं शक्यम्। अथवा गणितादिविषये अन्यैः कल्पितं मानाङ्कितं (Standardised

Test ) प्रश्नपत्रं स्वीकर्तुं युक्तम् । व्यक्तिनिष्ठपरीक्षायाः प्रामाणिकत्वं (Validity) विश्वसनीयत्वं (Reliability) इति धर्मद्वयमवश्यापेक्षितम् । परीक्षणं यदि परीक्ष्यानंशान् सुष्ठु याथातथ्येन च मानयति तर्हि तत् प्रमाणं (Valid) भवति । कैश्चित् बहवः प्रश्नाः अस्पष्टवचसा शिरोवेष्टनप्राणायामतुल्येन दीर्घेण वाक्येन वा दीयन्ते । उत्तरं बहुप्रकारं भवति । एतादृशप्रश्नाः प्रमाणत्वेन गणनां नार्हन्ति । क्रियमाणाः प्रश्नाः पुनरुपयुक्ता अपि समानमेव (Same) उत्तरं यदि निष्पादयन्ति तर्हि ते विश्वसनीया भवन्ति । वस्तुनिष्ठपरीक्षणं कालस्य वृथा व्ययं न करोति । उत्तरशोधनं च परीक्षकस्वभावानुपहतं वर्तते । अनायाससमुपयोक्तुमर्हम् । असन्दिग्धोत्तरं च । अत्राङ्कदानमपि सुलभम् । केचन प्रश्नाः उदाहरणत्वेन दीयन्ते—

**1. साधारणस्मरणपरीक्षणम्[1] ।**

(अ) अमेरिकादेशं को दृष्टवान् ?

(आ) उत्तरप्रदेशस्य का नगरी राजधानी ?

(इ) रेडियो-यन्त्रं कः निष्पादितवान् ?

**2. पूरणपरीक्षणम्[2] ।**

(अ) चैत्रात् परं—मासः आयाति ।

(आ) संबोधनप्रथमैकवचनस्य—इति नाम ।

(इ) वाल्मीकिः—विरचितवान् ।

**3. सत्यासत्यपरीक्षा[3]।**

अत्र विद्यार्थी दत्तस्य वाक्यस्यार्थः सत्यश्चेत् स=(सत्यम् ) इति लिखेत् । अयथाभूतः चेत् अस=( असत्यम् ) इति लिखेत् । अत्रोत्तरदानं शीघ्रं भवति ।

---

1. Simple Recall Test.
2. Completion Test.
3. True and False Test.

(अ) अध्यात्मरामायणं वाल्मीकिः व्यरचयत् ।

(आ) संशयस्यापरं नाम अनुमानमिति ।

(इ) प्राणवायुजलवायुसंयोजनेन निष्पन्नः पदार्थः जलम् ।

**4. शुद्धोत्तरग्रहणपरीक्षा[4] ।**

अत्र एकस्य प्रश्नस्य संभाव्यानि बहूनि उत्तराणि दीयन्ते । उचितस्योत्तरस्य पुरस्तात् ✓ एवमङ्को देयः ।

(अ) धान्यमालिनी–रावणस्य सोदरी, भार्या, काचन अप्सरस्त्री ।

(आ) हर्षचरितकर्ता–वामनबाणः, भट्टबाणः, श्रीहर्षः ।

(इ) शोभनाश्वः- दीर्घवालः, उन्नतः, द्रुतधावी, श्वेतवर्णः भवेत् ।

(ई) पुंलिङ्गे सर्वशब्दस्य प्रथमाबहुवचने रूपम्–सर्वाः, सर्वे ।

**5. मेलनपरीक्षा[5] ।**

अत्र विषयाः गणद्वये दत्ता वर्तन्ते । तत्र प्रथमगणे दत्तः कश्चन विषयः द्वितीयगणे दत्तेन संबद्धः स्यात् । अत्र प्रथमगणस्थेन विषयेण द्वितीयगणस्थस्योचितस्य संयोजनं स्वविषयसंख्यानिर्देशेन सूच्यते ।

| प्रथमगणः | द्वितीयगणः |
|---|---|
| 1. नीलकण्ठदीक्षितः | 1. कृष्णकर्णामृतम् |
| 2. वेङ्कटाध्वरी | 2. विक्रमाङ्कदेवचरितम् |
| 3. लीलाशुकः | 3. विश्वगुणादर्शचम्पूः |
| 4. बिल्हणः | 4 नीलकण्ठविजयः |

**6. वर्गीकरणपरीक्षा[6]—**

अत्र यत् यस्मिन् वर्गे नान्तर्भवति तत्ततः अपनीयते ।

---

4. Multiple Choice Test.

5. Matching Test.

6. Classification Test.

(अ) कपोतः, कुक्कुटः, शुकः, रासभः, कोकिलः ।

(आ) कावेरी, नीलगिरिः, गोदावरी, नर्मदा

(इ) प्रति, अनु, उप, रामः, गच्छति ।

7. **सादृश्यपरीक्षा**[7] ।

(अ) यथा राज्ञी राज्ञः पत्नी एवं श्वश्रूः .... .... ।

(आ) यथा नरः पादाभ्यां चलति एवं रथः .... .... ।

(इ) यथा ठाकुरः आधुनिककविषु श्रेष्ठः एवं विवेकानन्दः.... .... ।

8. **शोधनपरीक्षा**[8] ।

(अ) अत्र कलाशालायां सर्वोऽप्याचार्याः विद्वांसः ।

(आ) क्षेत्रे चतस्रः वृषभाश्चरन्ति ।

(इ) हे वधो ! जलमानय ।

9. **अर्थाबद्धतापरीक्षा**[9] ।

(अ) गतायाममावास्यारात्रौ ग्रामादागच्छता मया मार्गे कोऽपि सर्पः दृष्टः । चन्द्रप्रकाशेनायं सम्यग् द्रष्टुं शक्यश्चासीत् ।

(आ) वत्सलः पिता कोऽपि पुत्राय, "इदं पत्रं त्वया न प्राप्यते चेत् तर्हि सद्य एव लिख्यतां मह्यमि"ति पत्रं विलिख्य प्रेषितवान् ।

(इ) अस्मिन् वर्षे कृतविवाहेषु जनेषु पुरुषापेक्षया स्त्रीणां संख्यैवाधिका ।

(ई) दक्षिणां दिशं प्रति गच्छतो मे वामपार्श्वे सूर्यः अस्ताचलं गच्छन्नासीत् ।

10. **व्यतिरेकिपदपरीक्षा**[10] ।

दत्तानां पदानां व्यतिरेकिपददानं कार्यम् । शीतम्, दुष्टः, बलवान्, निन्दा ।

---

7. Analogy Test.
8. Correction Test.
9. Absurdities in the idea.
10. Opposite Word Test.

11. **पर्यायपदपरीक्षा**[11] ।

अत्र दत्तानां समानार्थानि पदानि दीयन्ते । सिंहः, वृक्षः, नदी, मानवः ।

12. **वेगपरीक्षा**[12] ।

अत्र कस्यापि कार्यस्य निर्दिष्टे काले द्रुतं करणे शक्तिः वर्तते किमिति परीक्षा भवति । गणित-टैप्करणादिषु इयं परीक्षा भवति ।

13. **गुणपरीक्षा**[13] ।

अत्र कार्यकरणे कालस्येयत्ता न दीयते । परीक्ष्येण यावान् कालः अपेक्ष्यते तावान् दीयते । परं दत्तं कार्यं कथं कृतमिति, कृतस्य कार्यस्य गुणः कीदृशो भवतीति परीक्षा अत्र भवति ।

चित्रलेखने इयं परीक्षा युज्यते ।

14. **विशुद्धतापरीक्षा**[14] ।

अत्र लिख्यमानं विशुद्धं लिख्यते किम् इति परीक्षा भवति । वर्तनी (Spelling)-परीक्षायां टैप्करणे चास्योपयोगः ।

15. **नैदानिकपरीक्षा**[15] ।

अधीयमानविषये कस्मिन्नंशे विद्यार्थिनः अज्ञानं वर्तत इति ज्ञातुं इयं परीक्षा उपकरोति । कक्ष्यायामुपाध्यायः अध्यापनकाले एव तदा तदा प्रश्नं कृत्वा विद्यार्थिभिः दीयमानेनोत्तरेण छात्राणां क्लेशं ज्ञातुं प्रभवति ।

अस्यां नव्यपरीक्षापद्धतौ विद्यार्थिनां भाषाज्ञानसत्तायाः सूचकं किमपि न भवति यतस्ते परीक्षायां पदमेकं चिह्नं वा उत्तरदानायोपयुञ्जते । कमपि विषयमधिकृत्य दशवाक्यान्यपि स्वातन्त्र्येण लेखितुं किं छात्राः समर्था वर्तन्त इति ज्ञाने इयं परीक्षा नोपकरोति । अतः 'प्रबन्धपरीक्षा (Essay type test)

---

11. Synonyms Test.
12. Speed Test.
13. Quality Test.
14. Accuracy Test.
15. Diagnostic Test.

नव्यपरीक्षेति उभयमुपयुज्यते अधुना । ततः एकस्यां पद्धतौ अविद्यमानाः केचन सप्रयोजनाः अंशाः अन्यस्यां पद्धतौ दृश्यन्ते । स्मरणे, उचितोत्तरग्रहणे, गृहीतस्योत्तरस्य स्पष्टं विशदया विशुद्धया च वाचा अनाकुलं लेखने च प्रबन्धपरीक्षा साधनं भवति । एवं प्रबन्धपरीक्षापद्धतौ अविद्यमानाः केचन गुणाः नव्यपरीक्षायां वर्तन्त इति ज्ञातमेव । ततश्च उपाध्यायाः परीक्ष्यविषयानुगुणं नव्यप्रबन्धपरीक्षापद्धत्योरन्यतरामुभयीं वा आद्रियेरन् ।

उत्तरस्य मूल्यनिर्धारणे प्रत्युत्तरं अङ्कदानं, अन्ते दत्तानामङ्कानां संकलिताङ्कनिर्देशः, सङ्कलिताङ्कानुसारं A.B.C. इत्येवंरूपेण स्तर (Grade) - निर्देशः इति चेदानीं प्रक्रिया वर्तते ।

ततश्च परीक्षया प्राप्तव्यानि फलानि पुनरपि निर्दिश्यन्ते ।

1. पाठ्यविषये बालेन कियानंशो ज्ञातः? कियती च प्रगतिर्लब्धा? इति च ज्ञाने परीक्षा साधनं भवति ।

2. बालस्य वयसः शक्तेश्चानुगुणं बुद्धेः विकासः किं प्राप्तः इति ज्ञानेऽपि वर्तते उपयोगः परीक्षायाः ।

3. कीदृशी विद्या बालानामपेक्ष्यते इति अपेक्षिताया विद्याया ज्ञानमपि परीक्षया प्राप्यते ।

4. विद्याग्रहणे विद्यार्थिनः सोत्साहान् कर्तुमपि परीक्षा साहाय्यमाचरति । अरुचिः कथं कुत्र जायते इति ज्ञात्वा तदपाकरणमत्र प्रयोजनम् न्यूनाङ्कान् प्राप्तवन्तो बुद्धिमन्तो बालाः अधिकाङ्कप्राप्तये प्रयतेरन् ।

5. विद्यार्थिनां विद्याग्रहणे स्थितं क्लेशं तत्कारणानि च ज्ञात्वा तदपनयनेऽपि अस्ति अस्या उपयोगः ।

6. परीक्षाविषयस्याध्येयस्य काठिन्यं लालित्यं वा संसूच्य पाठ्यचर्यापरिवर्तनं कर्तुमुद्योजयत्याचार्यान् ।

आङ्ग्लेयीपाठशालासु संस्कृते परीक्षा इदानीं एवं भवति । प्रथमं प्रतिपादितविषयमधिकृत्य केचन प्रश्नाः दीयन्ते । व्याख्यानाय केचन श्लोकाः वाक्यानि च । कण्ठस्थीकरणपरीक्षार्थं श्लोकानां प्रतीकं भावं वा सूचयित्वा श्लोकलेखनार्थं प्रेरणम् । व्याकरणांशेषु विग्रह-धातुरूप-शब्दरूप-वाक्यपरिवर्तनादिषु अनुवादे च केचन प्रश्ना भवन्ति । संस्कृतपदानां स्ववाक्येषु प्रयोगाय च प्रश्ना दीयन्ते ।

पूर्वकाले प्रायशः शास्त्रे वेदे च मौखिकी परीक्षैवासीत् । परीक्ष्यं सदसि बहवः परीक्षकाः यं कमपि शास्त्रार्थमधिकृत्य पृच्छन्ति । उत्तरानुसारं पुनः पुनः प्रश्नो दीयते । परीक्षा क्वचिद्दिनचतुष्टयमपि व्याप्नोति । परीक्षकाणां निष्पक्षपातित्वद्योतनाय परीक्ष्यग्रन्थे शलाका सूत्रं वा निधीयते । उद्घाटिते पुटे यो विषयो वर्तते तत्र प्रश्नो भवति । इयं परीक्षापद्धतिः आधुनिकपरीक्षापद्धत्यपेक्षया कठिनतरा । अग्नौ हेम्नः शुद्धिरशुद्धिर्वा यथा दृश्यते तथानया परीक्षया पाण्डित्यं तदाभासो वा सम्यग् लक्ष्यते । एवं प्राप्तविशुद्धयः पण्डिताः प्रथितयशसोऽभवन् ।

तमिल्नाडुमध्ये (कृष्ण) यजुर्वेदविषये शिलापरीक्षेति कापि परीक्षापद्धतिर्वर्तते । आमलकपरिमाणानि सप्तशिलाखण्डानि (अथवा वराटिकाः) परीक्ष्यपरीक्षकयोः पुरतो निधीयन्ते । बालः कश्चित् शिलाखण्डान्यादातुं प्रेर्यते । स यदि पञ्च खण्डानि गृह्णीयात् तर्हि पञ्चमे काण्डे परीक्षा इति निश्चीयते । पुनरपि अश्मखण्डानां ग्रहणेन काण्डगतस्य प्रपाठकस्य अनुवाकस्य पञ्चाशतश्च निश्चयो भवति । पञ्चाशतः उपक्रमपदमपि परीक्षकः न कथयेत् । परीक्ष्यः स्वयमेव वितर्क्य तं पंचाशतं कथयेत् । तत्रापि पञ्चाशदुत्तरद्विशतपदान्येव (250) पठेत् सः । यदि न्यूनाधिकसंख्याकानि कथयेत्तर्हि परीक्ष्यः पराजितो भवति । विस्मरणमपि पराजयं जनयति । पदगणनं च परीक्षकैः वस्त्रान्तर्निगूढाभिरङ्गुलीभिः क्रियते । एतादृशी परीक्षा प्रचलिष्यतीति पूर्वमेव सूचना दीयते । ततश्च परीक्षासमये बहवो जनाः सम्मिलिता भवन्ति । सामान्यजनाः यथा अश्वानां धावनस्पर्धायां

(Horse Race) स्वोत्साहं प्रदर्शयन्ति एवमेवात्रापि आस्तिकाः महान्तमुत्साहं संप्रदर्शयन्ति । कदाचिदुत्साहः द्रष्टॄणां तथातिवेलो भवति यथा ते आत्मनः शरीरे धृतं अङ्गुलीयादिभूषणममूल्यमपि सद्यो विजयिने पारितोषिकं वितरन्ति । परीक्षाप्रवर्तयितृभिः परीक्षोत्तीर्णेभ्यः विद्वत्सम्भावना समर्प्यते । सलक्षणभाष्यवेद-विद्भ्यः परीक्षाजेतृभ्यः रूप्यकाणां षट्सहस्रं संभावनात्वेन वितीर्यते। विशिष्टांकव-आभरणादिकं क्षेत्रारामगृहादिकं च विशिष्टेभ्यो दीयते । परीक्षासु जयं प्राप्नुवतां पूजनं सर्वत्र भवत्येव।

## वैयक्तिकभेदाः

पाठशालायां स्थिता बालाः आकारे बुद्धौ गुणेषु अन्येषु चांशेषु परस्परं भिन्ना वर्तन्त इति उपाध्यायो जानीयादेव । एकस्यामेव कक्ष्यायां विद्यमानाः समवयसोऽपि बालाः शरीराभिवृद्धौ मानसविकासे च विभिन्ना भवन्ति । बालानां प्रवयसां च भेदो वर्तते । ज्ञाने संवेगे कार्यकरणे अन्यैः सह परिचये च मानवानां परस्परं भेदो वर्तते । एवं स्थितः अयं भेदः बहोः कालादारभ्य विदित एव । अत एव कालिदासः "भिन्नरुचिर्हि लोकः" इति कथयति । बुद्धिपरीक्षा, योग्यतापरीक्षा, अभिवृत्तिपरीक्षा चाधुना उपयुज्यमानाः भेदसत्ता-सिद्धान्तं द्रढयन्त्यः 'एकैकोऽपि मानवः अपरस्मात् भिन्न एव, एकैकस्यापि तद-साधारणः कोऽपि गुणविशेषः वर्तते' इति च सूचयन्ति। अत एव भेदक-मनोविज्ञान[1]मिति कापि मनोविज्ञानशाखाधुना उत्पन्ना या मानवेषु स्थितानां बहूनां भेदानां स्वरूपं स्वभावं इयत्तां च विचारयति । शिक्षाविषयेऽस्य विज्ञान-विभागस्यास्ति प्राधान्यम् ।

मानवानां परस्परं भेदो वर्तते इत्युक्ते दिवारात्रवत् अहिनकुलवद्वा तेऽत्यन्तं भिन्ना इति न मन्तव्यम् । सर्वेष्वपि मानवत्वापेक्षिता गुणा वर्तन्ते। ते च गुणाः तारतम्येन वर्तन्त इति तत्कृतोऽयं परस्परभेदः । केषुचित् दयागुणः अधिकतया,

---

1. Differential Psychology.

केषुचित् स्वल्पतया, केषुचित् मध्यमरीत्या च स्यात्। एकस्यैव दयागुणस्य सम-न्यूनाधिकभावेन त्रिविधत्वं भवति। एवमेव बहूनां गुणानां समवायोऽपि प्रतिव्यक्ति विभिन्नो भवन् मानवान् विभिन्नान् करोति। एवं स्थितो भेद एव ज़ीवने वैचित्र्यमापाद्य तत् रसनीयं करोति। अन्यथा सर्वेषां अभेदे जीवनं आवर्जकं न भवेत्।

वैयक्तिकभेदे प्रधानं कारणं वंशपरंपराधर्मः। बालः न केवलं स्वमातापितृभ्याम् किन्तु ततः पूर्वतनेभ्योऽपि स्वमूलपुरुषेभ्यः गुणान् प्राप्नोतीति पूर्वमेवोक्तम्। एवं वातावरणमपि तदीयबुद्धिविकासे शरीराभिवृद्धौ च कारणं भवति। यमळौ समे वातावरणे वर्धितौ समौ स्याताम्। विभिन्ने वातावरणे संवर्धितयोरनयोः भेदो विलोक्येत। आकृतिः बुद्धिश्च वंशधर्मेण प्राप्ते भवतः। रुचि-चारित्र-अभिवृत्तिप्रभृतयः वातावरणेन जायन्ते। जायमानदशायां स्थिताः गुणा एव पश्चात् वयसः परिपाकानुगुणं विकासं प्राप्य परस्परभेदातिशयं जनयन्ति। बाल्ये अप्रतीयमानो भेदः अस्यां दशायां स्पष्टं प्रतीयेत। जात्या देशेन च भेदो जायते किमित्यत्र अभिज्ञाः निश्चितं उत्तरं दातुं असमर्था वर्तन्ते। विभिन्नजातीयेषु (नीग्रोप्रभृतिषु) यो भेदः गुणकृतो वर्तते स एव भेदः एकजातीयेष्वपि वर्तते इति इदमेवात्र निदानमनिश्चये। संस्कृतिकृतो भेदः दृश्येत। एवं लिङ्गकृतोऽपि भेदो वर्तते। स्त्रियः शारीरधर्मे क्लेशासहिष्णवः पेशलाश्च। परं विद्याविषये तासां यूनां च नास्ति भेदः।

एवं व्यक्तयो विभिन्नशक्तयो वर्तन्त इति इदं भेदज्ञानमुपाध्यायानामावश्यकम्। एवं भेदे अवगते चिकित्सायां एकमूलिकाप्रयोगवत्, अध्यापने एकस्याः पद्धतेः, एकस्या एव पाठ्यचर्यायाः प्रयोगश्च अनुचित इति ज्ञात्वा, बालानां स्वरूपस्वभावानुगुणां पद्धतिं पाठ्यचर्यां च कल्पयेदुपाध्यायः। सर्वेषामपि एकप्रकारैव विद्या दीयमाना नाद्रियते इदानीम्। अत एव पाठ्यचर्यायां (Curriculum) वैकल्पिकाः बहवो विषयाः कल्पिता वर्तन्ते। अधुना पाठशालासु कृता कक्ष्याप्रणाली

(Class method) विद्यार्थिषु दृष्टं परस्परभेदं अविगणय्य सर्वेषां समाध्यापनाय प्रवर्तते। तत्र कारणमार्थिकमसौविध्यमेव। बुद्धिमतां बुद्धिप्रवर्धनायावकाशो नास्ति। मन्दबुद्धिविषये उपाध्यायाः उदासते। यद्यपि इयं दशा क्रमशः तिरोभवेत्; एकैकोऽपि विद्यार्थी उपाध्यायावधानं प्राप्य प्रगतिं लभेतेति विश्वसितुमिदानीमस्त्यवकाशः यत इदानीमुपाध्यायाः प्रशिक्षिताः शोभनमनसो वर्तन्ते।

[1]डाल्टन्प्रणाली-विनेट्काप्रणाली-प्राजेक्टप्रणालीप्रभृतयः [2]वैयक्तिकप्रणाल्यः पृथक् पृथक् व्यक्तीनामध्यापनाय उपयुज्यमानाः वर्तन्ते। कक्ष्यास्थानां बालानां वर्ग (Class section) - रूपेण विभजने विद्यार्थिनां बुद्धिसंख्या मनसि धर्तव्या। येषां बुद्धिसंख्या समा ते एकस्मिन् वर्गे (Section) निवेशयितुमर्हा भवन्ति। एवं क्रियमाणस्य विभजनस्य 'योग्यतानुसारि विभजनम्' इति नाम। शीघ्रवेदिनः, सामान्यतो वेदिनः, मन्दवेदिनः इति त्रेधा विद्यार्थिनः विभक्तुं शक्यन्ते। एवं विभागे तत्तद्विभागानुगुणं अध्यापनप्रणाली-दत्तकार्य (Assignments)-प्रभृतयः योग्यतानुसारं कल्पिता भवन्ति। अध्यापनं च ललितं स्यात्। बुद्धिमन्तो बालाः अत्र मन्दमतिभिः अनुपरुद्धाः शीघ्रां प्रगतिं प्राप्नुवन्ति। मन्दमतयः बुद्धिमद्भिः सहवासेन लभ्यमानां पराजयवेदनामप्राप्य स्वशक्त्यनुसारं अध्ययने अवकाशं लभेरन्निति मन्दमतीनां पृथग्वर्गकल्पने अपरो गुणः। योग्यतानुसारि विभजनं केचन नेच्छन्ति। इमानि तत्र कारणानि। 'यदि बुद्धिमद्भ्यः पृथक्कृताः भवन्ति मन्दबुद्धयः तर्हि ते नीचभावनां प्राप्य प्रगतिं न प्राप्नुयुः। बुद्धिमद्भिः सह वर्तने तान् विद्यायामनुकर्तुं मन्दबुद्धयः प्रयतेरन्, तादृशावकाशः नैव भवेत् पृथग् विभजने। आधुनिकलोकतन्त्रात्मक (Democratic) जनसमाजे केषांचित् बालानां बुद्धिमत्त्वेन पृथक्करणं विशेषगौरवदानं च (Privilege) सर्वसमानता (Equality)-बुद्धिं विहन्यात्[3]। मन्दबुद्धीनां मनसि

---

1. Dalton plan, Winnetka plan, Project method.
2. Individual Methods.
3. Ability grouping.

व्यथां जनयेत् । बुद्धिमन्तो गर्विष्ठा भवेयुः । उपाध्यायाश्च मन्दमतीनां कक्ष्याध्यापनं नेच्छेयुः । मन्दमतीनां पितरः आत्मनोऽपत्यानां प्रारम्भदशायामेव मन्दमतित्वाङ्कनं (Branding) नाभिलषेयुः । बालाश्च तादृशाः नीचभावनां प्राप्य ततः आत्मानं विमोचयितुमशक्ताः पश्चादपि जीवने क्लेशमनुभवेयुः । बुद्धिमापनप्रणाली च नातिविश्वसनीया । तथा च तन्मापनमाश्रित्य क्रियमाणं विभजनमपि अयथाभूतं भवेत्' इति ।

परं एतानि वास्तविकीं स्थितिं तिरोधातुम् अथवा असतीं कर्तुं न प्रभवेयुः । कक्ष्यासु वर्तन्त एव विभिन्नशक्तयो बालाः । ततश्च त्रिविधेष्वपि विद्यार्थिषु पृथक् अवधानं देयमेव । व्यक्तिगतं भेदं विचिन्त्यैवाधुना, मार्गप्रदर्शनाय वृत्तिग्रहणोपदेशाय[1] च पृथगुपायः स्वीकृतो वर्तते । छात्राणां मानसशक्तिं विज्ञाय कीदृश्यां विद्यायां अयं श्रेयः प्राप्नुयादिति निश्चित्य तादृशविद्याग्रहणायोपदेशकरणमेव मार्गप्रदर्शनमित्युच्यते । एवमेव बालस्याभिवृत्तिं, शक्तिं, औद्योगिकसन्दर्भं च पर्यालोच्य कां वृत्तिं ग्रहीतुमयं योग्यः स्यादिति अवगत्य तादृशवृत्तिग्रहणाय प्रशिक्षणं प्राप्तुं यः उपदेशः क्रियते तस्य 'वृत्तिग्रहणोपदेश' इति नाम । स्वाभिरुच्यनुगुणवृत्तिग्रहणे जीवनं भव्यं भवति । मनश्च तुष्टिं प्राप्नोति ।

संवेगविषयेऽपि बालानां परस्परं भेदो वर्तते । उपाध्यायेनाल्पेऽपि कोपे प्रदर्शिते केचन बाला अतिमात्रं विषण्णा भवन्ति । केचन दृढप्रहारमपि न गणयन्ति । तथा च कक्ष्यायां अनुशासनसंरक्षणार्थं इमं भेदमपि मनसि धृत्वा उचितं दण्डधारणं कार्यमिति उपाध्यायानां वर्तते भेदज्ञानस्यावश्यकता ।

## असाधारणबालाः[2]

सर्वत्र पाठशालासु सामान्यतः साधारणाः (Average) बाला एव भवेयुः । केचन बालाः बुद्धि-सामाजिकता-विद्या-शरीरादिविषयेषु साधारणबालेभ्यः विभिन्नाः

---

1. Guidance—Vocational Guidance.
2. Exceptional Children.

दृश्येरन्। एतेषां संख्यापि परिगणनीया भवेत्। ततश्च तेषां विद्यायां सामाजिकतासंपादने चोपाध्यायैः विशिष्टमवधानं दातव्यं स्यात्। विशिष्टाः केचनोपायाश्चादर्तव्या भवेयुः। ये सामान्यस्तरेभ्यो बालेभ्यो विभिन्ना भवन्ति ते असाधारणबाला इति व्यपदिश्यन्ते। एते प्रतिभावन्तः,[1] मन्दमतयः[2]; मन्दितमतयः[3], अक्षमशरीराः[4] इति चतुर्धा विभज्यन्ते।

## प्रतिभावन्तः

येषां बालानां बुद्धिसंख्या 130, ततोऽधिका वा भवति ते प्रतिभावन्तः इति गण्यन्ते। बालानां शते एते चत्वारः पञ्च वा भवेयुः। सर्वास्वपि कक्ष्यासु प्रतिभावन्तो वर्तेरन्। एतेषु यद्यवधानं न दीयते तर्हि ते विषमस्वभावा जायन्ते; उपाध्यायानां समस्याः (Problems) आपादयन्तः कष्टं जनयन्ति। आधुनिकपाठशालासु एषां कृते नास्ति किमपि पृथक् क्रियमाणं अध्यापनम्। अन्येषां यत् येन प्रकारेणाध्याप्यते तदेवैतेषां तेनैव प्रकारेण बोध्यते। अन्ये बालकाः यत् होरायां अधीयते तदेवैते पञ्चदशसु निमेषेषु (Minutes) अधीयीरन्। ततश्च जामितां (Boredom) प्राप्नुवन्ति; व्यर्थाः चेष्टाः आचरन्ति कक्ष्यायाम्। वृथा कालयापनं न सहन्ते एते। उपाध्यायैः पितृभिश्च, स्वबुद्धिशक्त्यनुगुणं प्रगतिं प्राप्तुमनुपकृता एते बालाः पश्चात् जीवनं सम्यग्वर्तयितुं न प्रभवेयुः। सम्यगध्यापिताः सन्तः एते एव पश्चात् तत्तच्छास्त्रेषु मेधाविनः देशक्षेमनिर्मातारः नेतारश्च भवेयुः। ततः प्रतिभाशालिनो ज्ञात्वा तेषां उचिताध्यापनं उपाध्यायैः क्रियमाणमवश्यं देशक्षेमाय कल्पेत।

येषां बुद्धिसंख्या 130 भवति ते प्रतिभाशालिन इति पूर्वं निर्दिष्टम्। येषां बुद्धिसंख्या 140 भवति ते मेधाविनः इति परिगणिताः। अत्रानुसन्धानेन केचनांशाः ज्ञाता वर्तन्ते। एते बालाः द्वेधा विभक्तुं शक्यन्ते। सामान्यविषये

---

1. Gifted children. 2. Backward 3. Mentally retarded.
4. Physically handicapped.

प्रतिभाशालिनः (Intellectually gifted), विशिष्टविषये प्रतिभाशालिनः (Specifically talented) इति । तत्र प्रथमनिर्दिष्टेषु बालेषु- G -कारणमधिकं स्यात् । शिक्षणे रुचिः, स्वातन्त्र्येण चिन्तनं, उद्योगः, लोकज्ञानम्, परातिशायने मतिः, हास्यज्ञत्वम्, युक्तिचिन्तनम् इत्येवमादीनि एतेषु भूरि दृश्येरन् । विशिष्टप्रतिभाशालिनां सङ्गीते, गणिते, चित्रे, शास्त्रे, विज्ञाने, अन्येषु च विशिष्टविषयेषु कौशलमधिकं स्यात् । एतेषां बुद्धिसंख्या प्रथमनिर्दिष्टबालकानामिव नाधिका स्यात्; अथापि एतानपि प्रतिभाशालिन एव मत्वा तेषां येषु प्रगतिः स्यात् तादृशाः विषयाः विशेषेणाध्यापनीया भवेयुः ।

## प्रतिभाशालिनां असाधारणधर्माः

प्रतिभावतां वंशपरम्परापि प्रतिभावत्येव स्यात् । पितरश्च प्रायशः सम्यक् शिक्षिताः, उच्चतरकार्यकारिणो भवेयुः । बान्धवाश्च मातुलमातामहप्रभृतयः प्रतिभावन्तः स्युः । प्रतिभावर्धनाय सर्वं सौविध्यं वात्सल्यातिशयात् प्रायशः प्रथमापत्याय दीयते । अन्तिमापत्यमपि सौविध्यं प्राप्नुयात् यतः पितॄणां धनसौकर्यं तदा जायेत । शरीरोच्छ्राय - आरोग्य-शरीरभारपरिमाण (Weight)-विषयेऽपि एते स्वसमानवयसो बालकान् अतिशय्य वर्तेरन् । शैशवे दन्तप्ररोहोऽपि शीघ्रं भवेत् । लैङ्गिकाभिवृद्धिः परिपक्वता चैतेषां द्रुतमेव जायेत । अध्ययने इव मानसोल्लासकार्येष्वपि एते अत्यासक्ता भवेयुः । कायिकव्यापारापेक्षया बौद्धव्यापारेषु अमूर्तविषयचिन्तने चैषां प्रीतिर्भवेत् । बहुग्रन्थपठने रुचिः स्यात् । क्रीडनेऽभिलाषो भवेत् । परं तत्र स्पर्धाकरणे बुद्धिर्न भवत्येतेषाम् । संवेगः स्थिरो भवेत् । स्वदोषज्ञानं, स्वतः कार्यकरणे रुचिः, हास्यज्ञत्वं, आत्मनोऽधिकवयसां संपर्केऽभिलाषः, बुद्धिमद्भिः सख्यकरणमित्येते गुणा एषु दृश्येरन् ।

एभिरुपायैः प्रतिभाशालिनो बालाः कक्ष्यायां ज्ञातुं शक्याः । परीक्षासु, दत्तकार्येषु (Assignments) च एते प्रायशः प्रथमस्थाने वर्तेरन् । बुद्धिपरीक्षयाप्येतेषां अधिका बुद्धिसंख्या विदिता भवेत् । अभिवृत्तिपरीक्षया चैतेषां

विशिष्टा योग्यता ज्ञायेत। लोकज्ञानमपि बुद्धिमत्त्वमेतेषां प्रकाशयेत्। कक्ष्याया-मन्यत्र चैतेषामाचरणदर्शनेनापि प्रतिभावत्त्वं ज्ञातुं शक्येत।

प्रतिभावतां बालानां अध्यापनं कथं कार्यमित्युच्यते। प्रतिभाशालिनां बालानां पृथक् कक्ष्याकल्पने ये गुणाः ये च दोषाः सन्ति तान् सर्वानधिकृत्य पूर्वमेवोक्तम्। यदि ते पृथक् कक्ष्यायां निवेशिता भवन्ति तर्हि अन्यैः साधारणैः बालैः सह संपर्कमप्राप्तवन्तः एते पश्चादपि जीवने जनसमाजे च सामञ्जस्यं प्राप्तुं अशक्ता भूत्वा क्लेशमनुभवेयुरिति अयं महान् दोषः स्मर्तव्यः। आत्मनो बुद्धि-मत्त्वमाचार्यैरङ्गीकृतं विचिन्त्य निगर्विणोऽपि भवेयुः। एकस्यामेव कक्ष्यायामन्यैर्बालैः सहाध्यापने योग्यतानुसारि-अध्यापनं कर्तुं शक्यम्। इदमध्यापनं उपाध्यायानां शक्ति-अध्यापनप्रणाल्यादीन् प्राधान्येनाश्रयेत्।

अन्यत् उपायद्वयमपि प्रतिभावद्बालविषये आदतुं शक्यम्। तत्र प्रथमो-पायस्य क्रमत्वरणप्रणाली ( Grade acceleration ) इति नाम। अनया प्रणाल्या बुद्धिमतां बालानां एकान्तरितकक्ष्याप्रवेशो (Promotion) दीयेत। तृतीयक-क्ष्यायां पठन् बालः वर्षमध्येऽपि चतुर्थकक्ष्याप्रवेशं विना पञ्चमकक्ष्यायां प्रवेशितः स्यात्। अयं संप्रदायः इदानीं नानुस्रियते। एवं असकृत् दत्तप्रोन्नतिः (Promotion) बालः शीघ्रमेवाध्ययनं परिसमाप्य पाठशालां विमुच्य बहिरा-गच्छेत्। मनःपरिपाकतायाः (Mental maturity) न्यूनतया जनसमाजेनाभ्य-नुकूलतां ( Adaptability ) न प्राप्नुयात्। पाठ्यचर्या यत्र चक्रकप्रणालीं (Con-centric method) आश्रित्य कल्पिता वर्तते, तत्रैवैतादृशी प्रोन्नतिः दातुं शक्या। यत्र पाठ्यचर्या एवं न भवति तत्र कक्ष्यान्तरितप्रोन्नतिदाने या कक्ष्या परित्यक्ता तस्याः कक्ष्यायाः कृते कल्पितो विषयः एतादृशबालकैरनवगत एव स्यादिति अत्र दोषद्वयं वर्तते। द्वितीयोपायस्य समृद्धिप्रणाली (Enrichment method) इति नाम। कक्ष्याकृते कल्पितपाठ्यचर्यया सह एतेषां बालानां योग्यतानुगुणं केचन अधिकविषयाः अध्येयत्वेन कल्प्यन्ते। गणितेतिहासादिविषयेषु पाठ्यचर्या-

विषयेण संबद्धाः, परं कक्ष्यायां नाध्यापिताः केचन विषयाः एतादृशैर्बालैः पठ्येरन्। पाठ्यचर्यानुगुणं लिखिते ग्रन्थे अशोकं हर्षं चाधिकृत्य अल्पमेवोक्तं स्यात्। अशोकहर्षौ अधिकृत्य अधिकं ज्ञानं प्राप्तुं एते बालाः प्रेरिता भवन्ति। रघुवंशे द्वादशसर्गे रामकथा अतिसङ्ग्रहेण वर्ण्यते कविना। विस्तरेण ज्ञानाय भाषासु कृतस्य रामायणानुवादस्य पठनमेभिः कर्तुं युक्तम्। प्रतिभाशाली बालः शरीरबलहीनः स्यात्। अन्यैः बालैः पीडितो भवेत्। ततश्च सतीर्थ्यान् बालान् परिहृत्य ऐकान्त्यमाश्रयेत्। अत्राप्युपाध्यायः दत्तावधानो भवेत्।

### [1]मन्दमतयः मन्दितमतयश्च

कक्ष्यायां यथा प्रतिभावन्तः केचन वर्तन्ते, एवं केचन मन्दमतयोऽपि भवेयुः। एते मन्दमतयः मान्द्यकारणमुखेन द्वेधा विभज्येरन्—मन्दमतयः मन्दितमतय इति। शिक्षाविषये फलं तूभयेषामपि समानमेव स्यात्। मन्दमतयो बालाः शिक्षायां अपेक्षितप्रगतिहीनाः भवेयुः। ये बालाः स्वकक्ष्यार्थं कल्पितं विषयं अध्येतुं अथवा कार्यं कर्तुमशक्ता भवन्ति ते मन्दमतय इति निर्दिश्यन्ते। एते स्वकक्ष्यातोऽधस्तनकक्ष्यार्थं कल्पितं विषयमपि अध्येतुमशक्ता वर्तन्ते। समानवयोभिः अन्यैर्विद्यार्थिभिस्तोलने शिक्षाविषये न्यूनतामेव (Deficiency)-वहन्ति। उपाध्यायैः कक्ष्यायाः कृते सामान्यतः उपात्तां प्रणालीं उपदिष्टं विषयं वा द्रुतं एते नावगच्छन्ति। **सिरिल् बर्ट्** - नामको विज्ञानी अत्र विषये अनुसन्धानं कृत्वा मन्दमतीनां लक्षणमेवं कथयति स्म। "यः कोऽपि बालः नातिमात्रन्यूनबुद्धिसंख्याकः सन् स्वकीयाध्ययनकालस्य मध्यमदशायां ($10\frac{1}{2}$ वयःकाले) स्वसमानवयसो बालकाः यस्याः कक्ष्यायाः कार्यं सुष्ठु कुर्वन्ति तस्याः कक्ष्यातः अनन्तरायाः अवरस्याः कक्ष्यायाः कार्यम् कर्तुं यदि अशक्तो भवति तर्हि सः मन्दमतिरिति गणनीयः[2]" इति। एतेषां बुद्धिसंख्यापि सामान्यतः, 70-85

---

1. Backward and Mentally retarded.

2. A backward child is one who in mid-school career is unable to do the work of the class next below that which is normal for his age.

भवेत् । एषां शिक्षा-भजनसंख्यापि[1], (Educational Quotient) पञ्चाशीतितः (85) न्यूना स्यादिति अभिप्रैति सः । "दशवर्षो बालः यदि मनोवयसा सप्तवर्षो भवति तर्हि सः त्रिभिर्वर्षैः मनसि मान्द्ययुक्तो वर्तते" इति सुलभं लक्षणं कैश्चिदुच्यते । अतिबुद्धिमन्तः सामान्याः बालाश्च कदाचिन्मन्दमतयो भवन्ति । अत्र परिवेषः अश्रद्धा वा कारणं स्यात् । [2]सामान्यमन्दमतित्वं विशेष-मन्दमतित्वमिति मन्दमतित्वं द्वेधा भवति । सामान्यमन्दमतयः पाठ्येषु सर्वेषु विषयेष्वपि मन्दा भवेयुः । विशेषमन्दमतयस्तु एकस्मिन् द्वयोर्वा विषययोः मन्दमतयो भवेयुः । गणितविदेशभाषाध्ययनादिषु एतादृशमान्द्यं दृश्येत । द्रविडदेशीयः प्रसिद्धः गणितविज्ञानी कश्चित् गणिते अतिप्रतिभावानपि आंग्लेय्यां न तथा आसीदिति श्रूयते । मन्दमतीनां शते षष्टिः अथवा अशीतिः विद्यार्थिनः वस्तुतः जन्मना मन्दा भवेयुः ; अवशिष्टाः विंशतिसंख्याकाः (20%) विद्यार्थिनः संवेगात्, परिवेषदोषात्, अन्यस्माच्च कारणात् मन्दा वर्तेरन् इति विज्ञानिनो मन्यन्ते ।

## मन्दितमतयः

येषां मतिः येन केनापि कारणेन उपहता भवति ते मन्दितमतयः इत्युच्यन्ते । वंशपरम्पराधर्मोऽपि अत्र कारणम् । केषांचित् मतिमतां पितॄणां मन्दमतयः पुत्रा जायन्ते । मन्दमतीनामपि पितॄणां प्रतिभावन्तो जायन्त एव । परं एतत्सर्वं अपवादभूतम् । गर्भे दुःस्थित्या केषांचित् शिशूनां मस्तिष्कं बाध्यते । प्रसूतिकाले शस्त्रोपयोगोऽपि मस्तिष्कोपघातं जनयति । जननात् परं पोलियो-मस्तिष्कज्वरप्रभृतिभिः रोगैः मतेः मन्दितत्वमुत्पाद्यते । गर्भकाले मातुः जाताः केचन रोगविशेषा पुष्टिहीनाहाराश्च मन्दमतित्वे हेतवो भवन्ति ।

---

1. इयं संख्या अनेन सूत्रेण लब्धुं शक्या ।

$$\frac{\text{उपलब्धिः}}{\text{कालवयः}} \times 100 = \text{शिक्षाविभजनसंख्या ।}$$

2, General backwardness, Specific backwardness,

पित्रोः दारिद्र्यं, असकृत् ताभ्यां क्रियमाणः कलहः, तयोरज्ञत्वं, विद्यायामश्रद्धा, पाठशालासु उपाध्यायानां परिवर्तनम्, तीव्रदण्डनं, प्रणालीदोषः, विद्यार्थिभिः वर्षमध्ये क्रियमाणं पाठशालान्तरगमनम्, ग्रामजनैः सहवासः इत्येतान्यपि बाह्यानि कारणानि भवन्ति बुद्धिमान्द्ये। अपुष्टिः, पौनःपुन्येन शैत्यम् (Cold), अपस्मारः, वातरोगः, शिरोवेदना, रक्तशोषः, काणता, मेरुदण्डवक्रता इत्येवमादयः शरीरधर्मा अपि बालानां मान्द्यं जनयन्ति।

के मन्दितमतय इति, विना श्रममुपाध्याया ज्ञातुं प्रभवन्ति, यतः तादृशाः बालाः स्वकीयं मन्दमतित्वं स्वयमेव प्रगल्भभावात् प्रकाशयन्ति। बुद्धिपरीक्षापि अत्र उपकरोति। भिषग्भिः क्रियमाणमारोग्यपरीक्षणमपि मान्द्यदर्शने साहाय्यं कुर्यात्।

मन्दितमतीनामध्यापनं कथं कार्यमित्युच्यते। मन्दमतीनां कृते पृथक् कक्ष्या-कल्पने नीचभावना तेषां मनसि उत्पाद्यते। उपाध्यायाः केचन मन्दमतीन् कक्ष्यायामेव प्रकाशं निन्दन्ति; तत्तु नोचितम्। वर्षान्ते उपरितनकक्ष्याप्रवेशाय प्रोन्नतिं (Promotion) अकृत्वा पूर्वकक्ष्यायामेवावस्थापनं एतेषां बालानां मनसि अनुत्साहं जनयेत्, तस्मादेतैरपि यथा प्रोन्नतिः प्राप्येत तथा विशिष्टाः कक्ष्याः (Special classes) प्रवर्तनीयाः। उचितमध्यापनं च कार्यम्। अयमेव श्लाघ्यः उपायो भवति। इयं विशिष्टकक्ष्या यस्यां पाठशालायां एते पठन्ति तत्रैव पाठशालायां कल्पनीया नान्यत्र। विषयविशेषे यदि मान्द्यं तर्हि तदर्थमपि कक्ष्या कल्पनीया। इदानीं बह्वीषु पाठशालासु परीक्षाकाले विशिष्टाः कक्ष्याः प्रवर्त्यन्ते। मान्द्यं रोगकृतं चेत् चिकित्सा कार्या। पुष्टिकरहारादानं, एतेषां कृते असाधारण-प्रणालीस्वीकारः, बुद्धिमद्भिः सह संवासकरणम्, वर्षान्ते उच्चकक्ष्याप्रापणं विशिष्टाध्यापनेनेति वर्तन्ते केचनोपायाः। ये जन्मना मन्दाः (आजानमन्दाः) येषां च मतेः मन्दितत्वं केनापि प्रबलेन कारणेनोत्पादितं तेषां विषये शिक्षा प्रायशः फलदायिनी न भवेत्। कायिकव्यापारशिक्षणेन यत्किमपि लघु औद्योगिकं कर्म (Craft) कर्तुं प्रशिक्षणदानमुचितं स्यादेतेषाम्।

## अक्षमशरीरा बालाः

पङ्गवः, कुणयः, बधिराः, अन्धाः, मूकाः, कुब्जाः, विकृताङ्गाः, वामनाश्च अत्रान्तर्भवन्ति। केचन बालाः सर्वमपि कार्यमसुन्दरमेव (Clumsy) कुर्वन्ति। वस्त्रमपि सुष्ठु धर्तुं न जानन्ति। एडमूकाः अनेडमूकाश्च वर्तन्ते। एतेषां कृते पृथक् पाठशालाः इदानीं वर्तन्ते। विशिष्टाध्यापनप्रणाली च मूकानां बधिराणामन्धानां चोपयुज्यमाना भवति। केचन बालाः सव्यहस्तेन लिखन्ति। अयं वंशपरंपरागतो गुणो भवेत्। उपदेशेनैवायमभ्यासः परिहार्यः। प्रयत्नस्य वैफल्ये पुनरपि उपदेशो न कार्यः। लोके प्रसिद्धाः पण्डिता योधाः क्रीडाशूराश्च सव्यकारिणो वर्तन्त एव। सव्यकारित्वं न दोषत्वेन गणनीयं भवति। केचन बालाः गद्गदवाचः (Stuttering) स्थगितोच्चारणाश्च (Stammering) भवन्ति। अत्रापि चिकित्सा नापेक्ष्यते।

---

1 Physically handicapped.

# अष्टमोऽध्यायः

## व्यक्तित्वम् (Personality)

विपूर्वक-अञ्ज्धातोर्निष्पन्नम् व्यक्तिरिति इदं पदं, यत् वस्तु अभिव्यक्तं सत् दृष्टिगोचरो भवति तत् कथयति। घटपटादयोऽजीवाः पदार्थाः पशुपक्ष्यादयः सजीवाः पदार्थाश्च अस्य पदस्याभिधेया भवन्ति। सर्ववाचकमपि इदं पदमत्र मनोविज्ञाने प्रकरणवशात् मानवव्यक्तीरेवाभिदधाति। तथा च व्यक्तिपदेन पृथक् स्थितो मानवः अभिप्रेयते। तस्य यो भावः वर्तते असाधारणः स एव व्यक्तित्वपदेनोच्यते।

मेषैः सह परिचयहीनानामस्माकं, शाद्वलेषु शादं चरन्तः सर्वेऽपि मेषाः समाना एव भान्ति। मेषत्वजातिं दृष्ट्वा 'इमे मेषा' इति जानीमः। मेषपालस्तु स्वकीयस्यैकैकस्यापि मेषस्यासाधारणं धर्मं (चिह्नं) अपि जानाति। अत एव संभूय चरतां स्वमेषाणां अन्यमेषाणां च मध्ये स्वकीयान् मेषान् सायं पृथक्-कर्तुं शक्नोति सः। एवं एकैकं मेषं पृथक् सूचयितुं यो धर्मो वर्तते तस्य धर्मस्य व्यक्तित्वम्, व्यक्तिः, अथवा पृथगात्मता इति नाम। अमरकारः, 'जातिर्जातं च सामान्यं व्यक्तिस्तु पृथगात्मता' इत्याह। व्यक्तिशब्दः धर्मिवाचित्वेन धर्मवाचित्वेनापि दृष्टः। अथापि स्पष्टप्रतिपत्त्यर्थं व्यक्तित्वमिति पदमेवात्र धर्मवा-चित्वेन उपयुज्यते।

जगति जातः एकैकोऽपि मानवः इतरमानवसाधारणगुणात् कांश्चित् दधदपि, स्वासाधारणानपि कांश्चन धर्मान् धत्ते एव। एवं व्यक्तौ मानवे स्थिताः ये साधारणा असाधारणाश्च गुणाः ते तं अन्येभ्यो मानवेभ्यः पृथक् कृत्वा प्रदर्शयन्ति इति तेषां धर्माणां समुदायः एव मानवगतव्यक्तित्वेन अवगम्यते।

पदनिष्पादनप्रक्रियायां ज्ञातायामपि व्यक्तित्वस्य वास्तविकं स्वरूपमधिकृत्य लक्षणादिभिरपि ज्ञातव्यमेव । आंग्लेय्यां एतत्समानार्थकं पदं **पेर्सनालिटि** (Personality) इति वर्तते । इदं पदं, पेर्सोना (Persona) इति ग्रीक्भाषापदात् निष्पन्नम् । पूर्वं नटाः स्वगृहीतपात्रानुगुणं मुखावरणम् (Mask) किमपि धृतवन्तः । मुखावरणवाचि इदं पदं पश्चात् तत्पात्रगुणवाचि अभवत् । कालक्रमेण, मानवानां ये असाधारणा गुणा वर्तन्ते तद्वाचि जातम् ।

व्यक्तित्वस्य लक्षणं दुर्वचम् । **आल्पोर्ट्** (Allport)-नामा मनोविज्ञानी कश्चित् व्यक्तित्वं स्वकीयग्रन्थे पञ्चाशता लक्षणैः लक्षितवान् । अस्य पदस्यार्थस्तु विपुलो वर्तते । मानवस्य शोभनमाकारं क्वचित् सूचयति । क्वचित् दक्षतामपि । क्वचित् मानवगतान् विशिष्टान् धर्मान् । एकैकोऽपि मानवः स्वासाधारण्या प्रक्रियया कार्यं करोति; अन्यैः सह व्यवहरति च । एवं क्रियमाणः व्यवहारः मानवस्य व्यक्तित्वं प्रकाशयितुमलं भवति । मानवेषु केचन भीताः । केचन निर्भीकाः । केचनाग्रहिणः सन्तः स्वाभिप्रायमेव परेषु निधातुं प्रयतमानाः । केचन तु माध्यस्थ्यमवलम्ब्य तूष्णीं वर्तमानाः । केचन स्वाज्ञाभङ्गातितिक्षवः । केचन सर्वदा क्षमावन्तः । केचन कदर्याः, केचनोदाराः । मानवाः यथा एवंविधा जगति वर्तन्ते तथा कक्ष्यायामपि बहवो विद्यार्थिनः विभिन्नगुणा वर्तेरन् । यदि एकैकस्यापि विद्यार्थिनः व्यक्तित्वमवगतं स्यात्तर्हि, "अस्मिन् सन्दर्भे अयं विद्यार्थी एवमेवाचरेदि"ति निश्चप्रचं वक्तुं शक्यं स्यात् । सङ्ग्रहेणैवं व्यक्तित्वमधिकृत्य वक्तुं युक्तम्—मानवः परिपूर्णतया यच्छीलो वर्तते तच्छीलत्वमेव तदीयं व्यक्तित्व[1]मिति लक्षणं अभिधातुं साम्प्रतम् । मानवस्य शारीरसंस्थान-मनःपरिपाक-सांवेगिकावस्थानां तदीयानुभवज्ञानवृत्त्यभ्यासादीनां पुञ्ज विषयीकुर्यादिदं पदम् । तथा च बहुभिः कारणैः निर्वृत्तमिदं व्यक्तित्वम् मनोविज्ञानानुगुणं नरस्य कृत्स्नां सत्तां सूचयति । [रामविषयकपूर्णव्यक्तित्वं जिज्ञासुः सन्

---

1. Personality is all that a person is,

वाल्मीकिः 'कोन्वस्मिन् साम्प्रतं लोके' इत्यादिना बहु पृच्छति नारदम्। रामस्य व्यक्तित्वद्योतकाः गुणाश्च वर्ण्यन्ते पश्चात् नारदेन ।]

अन्यानि च कानिचन लक्षणानि विज्ञानिभिरादृतानि परिशील्यन्ते । कस्यापि मानवस्य, व्यवहारस्य प्रकारः (Mode of behaviour) यः वर्तते तस्य प्रकृतिविशेषः (Trait) इति नाम । वुड्वोर्त्-महोदयः व्यक्तित्वं एवं लक्षयति— 'मानवव्यवहाराणां मूलभूतः यः समुदितः धर्मविशेषः तस्य व्यक्तित्वम् इति नाम' इति । 'इदं व्यक्तित्वम् तस्य चिन्तनाभ्यासेन, वाचा, रुच्या, अभिरुच्या, कार्यकरणशैल्या, जीवनमधिकृत्य तदादृतेन भावेन च सूच्यते' इति च ।

आल्पोर्ट्महोदयाभिमतं लक्षणमिदम्–' मानवगताः केचन शारीरमानस-धर्माः अभ्याससंवेगादयः प्रकृतिविशेषाः परिवेषानुगुणं मानवेन कर्तव्यं असाधरणम् सामञ्जस्यं तत्तत्समये निश्चिन्वन्ति । एषां धर्माणां येन क्रियाशीलैकसूत्रत्वम् आपाद्यते तस्य व्यक्तित्वमिति नाम' इति[1] ।

व्यक्तित्वं नाम नैको गुणः अथवा धर्मः । किन्तु बहूनां प्रकृतिविशेषाणां (Traits and attitudes) समुदायः ; तादृशसमुदायात् निष्पन्नः कश्चन भावविशेषो वा इत्यायातम् ।

प्रसङ्गात् मनोविज्ञानिभिः प्रदर्शिताः केचन प्रकृतिविशेषाः निर्दिश्यन्ते । स्थिरचित्तत्वम्, उत्साहः, मृदुस्वभावः, कारुण्यम्, उत्तरदायित्वम्, साहसम्, अतिमात्रभाववशंगतत्वं, मैत्री, धैर्यं, दास्यबुद्धिः, अधिकारप्रियत्वं, विषादशीलत्वम्, कठिनचित्तत्वं, पृथग्वर्तित्वम्, कल्पनालोकसञ्चारित्वं, संशयशीलत्वं इत्येते मानव-प्रकृतिविशेषेषु केचन । एते एव स्वकीयविषयभेदेन मात्राभेदेन च अभिवृत्तयः

---

1. "Personality is the dynamic organisation within the individual of those Psychophysical systems that determine his unique adjustments to his environment"–*Personlity*, P.48,

( Attitudes ), प्रकृतिविशेषाश्च ( Traits ) व्यपदिश्यन्ते । अष्टादशसहस्रसंख्याः प्रकृतिविशेषाः निर्देष्टुं शक्या इति आल्पोर्ट् कथयति ।

एतेषु गुणाः केचन परस्परं विरुद्धाः । केचन तु परस्परमविरुद्धाः । भव्यजीवनाय केवलव्यक्तित्वं न पर्याप्तम् । किन्तु मानवे स्थिता एते गुणाः विरुद्धा अविरुद्धाश्च यदि समं अनुपातं प्राप्य परस्परमनुपरुन्धानाः भवन्ति तर्ह्येव व्यक्तित्वं समीचीनं सुष्ठु संकलितं च भवतीति अंगीक्रियते । अस्यैवापरं नाम संकलितव्यक्तित्वम् ( Integrated personality ) इति[1]। धर्मे अतिश्रद्धां वहन्तः केचन गृहिणः अर्थनाशं कुर्वन्ति । एवं कामुकाः केचन अर्थधर्मयोः नाशम् । अर्थप्रियाः कदर्या भूत्वा भार्यापुत्रादीनामपि पोषणमकुर्वन्तः क्लेशयन्ति तान्; स्वयं क्लिश्यन्ते च । संवेगवशंगताः केचन स्वाभिमतमेव कार्यं सर्वप्रधानं मन्यन्ते । एतत्सर्वमसमीचीनं व्यक्तित्वं अथवा असंकलितं व्यक्तित्वं सूचयति । क्षमा कोपश्च विरुद्धौ भावौ । अथाप्यनयोः सुश्लिष्टत्वं कर्तुं शक्यम् । सामान्यतः कश्चित् क्षमावानपि अन्याय्ये क्रियमाणे अवश्यम् कोपं प्रदर्शयेदेव । अस्य सात्विककोप इति व्यपदेशः । क्षितिक्षमावानिति क्षमानिलयत्वेन वर्णितः रामः 'कोपमाहारयत्तीव्र' मिति कोपवान् वर्ण्यते समुद्रविषये । दिलीपं वर्णयन् कालिदासः विरुद्धगुणानामपि तस्मिन् संकलितत्वं कथयति ।

ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।
गुणा गुणानुबन्धित्वात् तस्य सप्रसवा इव ॥ इति ।

एवं रामगुणं-'धर्मार्थकामेषु समां प्रपेदे यथा तथैवावरजेषु वृत्तिमि'ति च । 'युक्ताहारविहारस्य युक्तचेष्टस्य' इति भगवान् गीतायां शोभनव्यक्तेः स्वरूपं निरूपयति । एवं स्थितप्रज्ञस्य स्वरूपं तत्रैव वर्णितं स्मर्तव्यम् ।

पाठशालासु विद्यार्थिनां केवलज्ञानोत्पादनं नास्माकमुद्देश्यं भवितुमर्हति; किन्तु संकलितव्यक्तित्वाभिवर्धनमपि लक्ष्यं वर्तते । यथा शरीरे एकस्यावयवस्य

1. आलंकारिकैरपि रसाविरोधित्वं कल्पनीयमिति उपदिश्यते ।

अभिवृद्धिः न आशास्या तथा व्यक्तित्वापादकैकधर्मस्य वर्धनमपि नाभिनन्दनीयं भवति। विद्यार्थिनां व्यक्तित्त्वाभिवृद्ध्यर्थं प्रथमं कानिचन सौविध्यान्यपेक्ष्यन्ते। दरिद्रबालानां क्षुधापीडितानां अस्तेयादिगुणा नैव भवेयुः। तथा च दैनन्दिनजीवनायापेक्षितानां वस्तूनामशनवसनादीनामभावो बालानां मनसि कमपि क्लेशं जनयति। ततश्चापथे तेषां प्रवृत्तिः। मातापित्रोः प्रीतिः, गुरूणां वात्सल्यं, अभयं, परेषां मैत्री, स्वातन्त्र्यमिति एतेऽपि अंशाः बालैः न लभ्यन्ते चेत् तर्हि तेषां मनसि किमपि कष्टं जायते। ततश्च असमीचीनं व्यक्तित्वं भवेत्। क्षुण्णिवृत्त्यर्थमिदानीं मध्याह्नकाले बालेभ्यो भोजनं दीयते पाठशालासु। पुस्तकवस्त्रादीन्यपि विनामूल्यमधुना बालेभ्यो वितीर्यन्ते। उपाध्यायाश्च प्रीतिं प्रदर्शयन्ति। एवं जनसमाजः एव बालानां व्यक्तित्वं सम्यग्वर्धयितुमिदानीं प्रयतते। यस्य बालस्य बुद्धिशक्तिः, संवेगः, दक्षता च समावस्थां प्राप्य, शोभनं साध्यं च लक्ष्यमुद्दिश्य प्रवर्तन्ते तस्य व्यक्तित्वं समीचीनं स्यात्। शक्त्यनुगुणं लक्ष्यकल्पनं वरम्। दुर्बलस्य पर्वतारोहणं सुसाधं न भवति। तस्मात् विद्यार्थिभ्यः तत्तच्छक्त्यनुगुणं साध्यमेव लक्ष्यं कल्पनीयम्। सर्वैरपि बालकैः परीक्षायां प्रथमश्रेणी प्राप्तुं नैव शक्येत। तादृशलक्ष्यकल्पनं अनुचितं भवति। लक्ष्याप्राप्तौ विषण्णा भवन्ति। स्वशक्त्यसाध्ये प्रेरिता बाला आशाभङ्गेन कुमार्गे प्रवर्तेरन्। यूनां प्रवयसां च पराजयेन उन्मादो जायेत। आत्महत्यामपि आचरेयुः। अतटमनोरथे व्यक्तित्वस्य पात एव स्यात्। व्यक्तित्वे नष्टे बालाः चोरा दुर्विनीताश्च भवन्ति। बालशक्त्यनुगुणं विद्या दातव्या। उपदेशः, सान्त्वनम्, सन्मार्गप्रदर्शनम्, ईश्वरे प्रत्ययः, भविष्यति शुभे प्रत्याशा च बालमनसि व्यक्तित्वं सम्यगुद्भावयेत्। ततश्चाचार्याः अत्र समवहिता भवेयुः।

बालानां समग्रव्यक्तित्वोत्पादनात् पूर्वं उपाध्यायाः, आत्मनो व्यक्तित्वं किं सङ्कलितं वर्तते इति परीक्षां कृत्वा जानीयुः। यस्य संवेगानुपातः समीचीनः व्यक्तित्वं च संकलितं स परिवेषानुगुणं स्वजीवनं वर्तयेत्। स कुत्राप्यतृप्तिं नैवप्रकाशयेत्। आत्मप्रत्ययवान् भवेत्। आफलोदयकर्मा भवेत्। परे यथास्मिन्

स्निह्येयुः तथा वर्तेत। आत्मना कृतान् दोषान् स्वयमवगत्य तत्परिहाराय प्रयतेत। वृथा गर्वं नावहेत्। बहूनि मित्राणि प्राप्नुयात्। अध्यापने च अपेक्षितां शक्तिं उत्साहं च वहेत्। मानसद्वन्द्वात् विमुक्तः सर्वदा प्रत्याशी (Hopeful) स्यात्।

इमानि असमीचीनव्यक्तित्वद्योतकानि भवन्ति। यस्य व्यक्तित्वं न समीचीनं स अल्पेऽपि विघ्ने कार्यात् विरमेत्। यत्किमपि अपदेशं निर्दिश्य कार्यं नैव कुर्यात्। कार्ये प्राप्ते व्याध्यादिनिर्देशेन कार्यकारी न भवेत्। पराजये प्राप्ते कारणन्तरं अन्विष्येत्; न तु स्वीयमपराधं कारणं निर्दिशेत्। परेषु दोषारोपणं कुर्यात्। कुनर्तकी नर्तने दोषे जाते वीथीवक्रतां कारणं निर्दिशतीति वर्तते आभाणकः। आत्मनो दशां दुर्दशां मत्वा सर्वदा विषादी कोपनो वा भूत्वा भार्यापुत्रादीन् पीडयेत्। आत्मनो दोषगोपनाय आत्मप्रशंसां कुर्यात्। प्रभुत्वेच्छया परपीडारुचिः भवेत्।

बालानां व्यक्तित्वं प्रथमं निर्नियन्त्रणं वर्तते। दृष्टाय सर्वस्मै अपि क्रीडनकाय स्पृहयेयुः। ततः क्रमशः मातापित्रादिभिः नियन्त्रिताः लक्ष्यं किमपि उद्दिश्य प्रवर्तन्ते। पाठशालां गत्वा अध्ययनं कुर्वन्ति। पाठशालायामपि पाठ्येतरकार्याणि, स्कौट्क्रीडाः, समाजसेवासमितिः, मानसोल्लसयात्राः, अन्ये चैतादृशा विषया बालानां व्यक्तित्ववर्धने उपकुर्युः।

## व्यक्तित्ववर्धने मूलकारणानि

शारीरमानसधर्माणां फलभूतं व्यक्तित्वमिति यद्यपि ज्ञातम्। अथापि एषां धर्माणां वर्धने अन्यान्यपि कानिचन कारणानि वर्तन्ते। वंशधर्मः परिवेषश्च मुख्ये कारणे भवतः। मानवस्य शारीरं संस्थानं मातापितृभ्यां प्राप्यते। गम्भीराकृतिः नरः नीचभावनां विना वर्तते। वामनः विकलाङ्गश्च नीचभावनां प्राप्य बहूनां पुरतः आगमनेऽपि लज्जावान् भवेत्। शरीरस्थितेभ्यो ग्रन्थिभ्यो निस्सृतानां द्रवाणामपि व्यक्तित्वनिर्धारणे महत् स्थानं वर्तते। कस्यापि अतिकामुकत्वम्,

अन्यस्य विरागित्वम् इति इदमुभयमपि इदानीं ग्रन्थिकार्यत्वेन वर्ण्यते शरीरतन्त्र-निष्णातैः। इदमधिकृत्य पूर्वमप्युक्तम्।

एवं परिवेषोऽपि व्यक्तित्वे कारणं भवति। कुटुम्बस्थितिः, मातापित्रोः संस्कृतिमत्त्वम्, कुटुम्बवातावरणे प्रीतिपूर्णत्वम्, शालायां सुहृदामुपाध्यायानां च प्रीतिप्राप्तिः, विद्या, जनसमाजः इत्येते सर्वेऽपि व्यक्तित्वे कारणानि। यद्येतानि समीचीनानि भवन्ति तर्हि व्यक्तित्वमपि समीचीनं स्यात्। कुटुम्बे कलहः, अप्रीतिः दुःसहवासः, दुर्मैत्री, दुरुपाध्यायाः इत्यादयः बालानां असमीचीनव्यक्तित्वे कारणानि भवन्ति। बाल्ये एव समीचीनव्यक्तित्वप्राप्त्यर्थं बाला उपकर्तव्या उपाध्यायैः।

## व्यक्तित्वप्रभेदाः

जगति यावन्तो मानवाः सन्ति तावन्तः व्यक्तित्वप्रभेदाः वर्तन्ते। अथापि, यथा नैयायिकाः जगति स्थितान् सर्वानपि पदार्थान् सप्तधा व्यभजन् तथा विज्ञानि-नोऽपि व्यक्तित्वं स्वाभिमतधर्मानुसारेण व्यभाक्षुः। भगवान् गीतायां सत्त्वरजस्त-मोरूपगुणभेदेन तद्वन्तो मानवाः सात्त्विकाः राजसाः तामसा इति त्रेधा विभेजे। आयुर्वेदीयाश्च वातपित्तकफरूपधातुत्रयं पुरस्कृत्य व्यक्तित्वं अवर्णयन्। ज्योति-श्शास्त्रविदः जन्मराश्यनुगुणं व्यक्तित्वं द्वादशधा कल्पयन्ति। प्राचीनकाले ग्रीसुदेशे स्थितः **हिप्पोक्रेटस्**(Hippocrates, 400 B.C.)-नामकः भिषक् शरीर-धातूनां स्वभावविशेषान् पुरस्कृत्य चतुर्धा मानवान् विभजते स्म।

1. पैत्तिकः (Choleric) :—अयं क्रोधशीलः स्यात्।
2. विषादी (Melancholic) :—विषदनशीलः।
3. श्लैष्मिकः (Phlegmatic) :—स्वापशीलः, तन्द्रालुः।
4. सुप्रत्याशी (Sanguine) :—उत्साहवान्, हास्यप्रियः, इति।

विल्लियम् जेम्स्नामकः विज्ञानी मृदुमनसः (Tender-minded), कठिन-चित्ताः (Tough-minded) इति मानवान् द्वेधा व्यभाक्षीत्। मृदुमनसः शास्त्राध्ययनादिषु व्यापृता भवन्ति, कठिनचित्तास्तु कार्यकरणे कुशला वर्तन्ते

इत्याह । क्रेट्ष्मेर् (Kretschmer 1888-1964)-नामकः जर्मन्देशीयः आधि-भिषक् शारीरं संस्थानं निमित्तीकृत्य व्यक्तित्वसिद्धान्तं कमपि कथयति ।



*क्रेट्ष्मेर् (1888-1964)

1. कृशकायाः (Asthenic type):- एते उच्छ्रायवन्तः कृशाङ्गाः स्थिराशयवन्तः परदोषदर्शिनः ; परं स्वदोषाविदः । एते विकृतिं प्राप्ताः मनोभ्रंशरूपाधिमन्तो भवन्ति । एते प्रापञ्चिकवास्तविकीं स्थितिमजानन्तः कल्पनालोके स्थिताः आत्मानमधिकृत्य सर्वदा चिन्तयन्तः वर्तेरन् । अस्या दशाया नाम मनोभ्रंशवत्त्वं अथवा अन्तराबन्धः(Schizoid-Schizophrene ) इति ।

2. तुन्दिलाः ( Pyknic type ):-एते नात्युच्छ्रायवन्तः, परं पुष्टाङ्गाः ; परैः संव्यवहारे प्रीतिमन्तः, कार्यकरणे उत्साहवन्तः संवेगशालिनश्च वर्तेरन् । संवेगाश्च असकृत् परिवर्तनशीला भवेयुः । यदि एतेषां मनोविकृतिः (मनोविक्षेपः) जायते तर्हि ते अतिमात्रसंवेगवन्तः फलमविगणय्य कार्ये प्रवर्तेरन् । एतादृशावस्थायाः, विक्षिप्तचित्तता (Cycloid, Cyclopherene) इति नाम । क्रेट्ष्मर्महोदयेन निर्दिष्टौ अन्यौ द्वावपि विभागौ अत्रैवान्तर्भवतः ।

*Photo: lent by Sri R. Desikan, Officer, Max Muller Bhavan, Madras.

यूङ्ग्महाशयश्च, बहिर्मुखाः (Extroverts), अन्तर्मुखाः (Introverts) इति द्वेधा मानवान् वर्गीकरोति। बहिर्मुखः बाह्यपरिवेषेण प्रेरितः सन् सामाजिक-कार्येषु उत्साही भवेत्। परैः आत्मनि दोषे दृष्टे नातीव विषादं प्राप्नुयात्। हर्षादि-संवेगादीन् सम्यक् प्रकाशयेत्। पराजयेऽपि नैव विषीदेत्। अन्तर्मुखस्तु बाह्य-विषये नात्युत्साहवान् सन् स्वकीयानेव विषयानतिमात्रं चिन्तयेत्। कल्पनालोके वर्तेत। संवेगादीन् न सहसा प्रकाशयेत्। एतौ उभौ प्रकारौ अपि यूङ्ग्महोदयः पुनरपि चतुर्धा विभक्तवान्। अनयोर्मध्ये वर्तमानं उभयमुखत्वं (Ambivert) नाम अन्यः कश्चन व्यक्तित्वप्रकारो वर्तते इति बहूनां मतम्। प्रायशो जनाः उभयमुखा एव भवेयुः। यूङ्ग्-कृतं विभागं मक्डूगल्महोदयोऽप्यङ्गीकरोति। चिन्तन - लघुचापल-निरोधनादयः अन्तर्मुखस्य गुणाः। संवेगादीनां निर्निरोधप्रकाशनं बहिर्मुखस्य स्वभाव इति च कथयति। मधुपानादयः अनायासं अन्तर्मुखं बहिर्मुखं कुर्युः। एवं भेषजेन बहिर्मुखस्यापि अन्तर्मुखत्वं जायेतेति तदाशयः।



*मक्डूगल् (1871-1938)

---

*Professor William McDougall—1871-1938. Photo kindly lent by British Psychological Society, London.

**स्प्राङ्गेर्** (Spranger) - नामा विज्ञानी मानवान् तत्तत्स्वभावानुगुणं षोढा (1909) विभजते। ते एते भवन्ति—

1. सिद्धान्तप्रियाः ( The Theoretical ):—एते तत्त्वदर्शनरुचयो वर्तन्ते। युक्त्यनुसन्धानमेषां स्वभावः। प्रायः विज्ञानिनः वेदान्तिनश्चैतादृशा भवन्ति।

2. आर्थिकाः ( The Economic ):—एते सर्वं विषयमधिकृत्य, 'किमनेन प्रयोजनम्' इति आर्थिकदृष्ट्या विचारयेयुः। वस्तूनां उत्पादने विक्रयणे अन्यत्र चैतादृशे कार्ये एषामासक्तिः भवति। वणिजः औद्योगिककर्मरताः धनार्जनप्रिया मानवाश्च अस्मिन् वर्गे वर्तन्ते।

3. कलारसिकाः (The Aesthetic):- एतेषां नामैव सूचयति कीदृशा एते भवन्ति इति। कलासु, गीते, साहित्ये, नाटकादिषु चैतेषामासक्तिः भवति। सौन्दर्यहेतोरर्थव्ययं महान्तमपि कर्तुमुद्यता भवन्त्येते।

4. सामाजिकाः ( The Social ):-इमे जनप्रियाः जनतायाः सेवायां हितकरणे च आसक्तिं प्रदर्शयेयुः।

5. नैतिकाः ( The Political ): - एते आत्मनः प्रभुत्व ( Power ) - सम्पादने रुचिमन्तः, न केवलं नैतिकविषये, किन्तु अन्यत्र च समाजकार्येषु श्रद्धां प्रदर्शयेयुः। देशनेतारः बहवः एतादृशाः।

6. धार्मिकाः ( The Religious ):-एते मते धर्मे भगवद्भक्तौ निष्काम-कर्मकरणे च आसक्ता भवन्ति। स्वसुखनिरभिलाषाश्च वर्तेरन्।

**षेल्डन्** (Sheldon)-नामा कश्चन विज्ञानी शरीरसंस्थानानुगुणं मानवानां व्यक्तित्वं निश्चिनोति स्म। केषांचन उदरादिकं अतिमात्रं विशालं वर्तते। एते विशालोदरा इति निर्देष्टुमर्हाः। सुखप्रियाः (Vescerotonic) भवन्ति इमे। केचन कृशाङ्गा वर्तन्ते। एते चिन्तनशीलाः (Cerebrotonic) भवन्ति। केषां-चित् मांसलत्वं स्यात्। एते साहसप्रियाः कार्येषु व्यग्राः (Somatotonic)

भवेयुः । यद्यपि एवं व्यक्तित्वं वर्गीकृतं विज्ञानिभिः; अथापि नैतावता मन्तव्यं सर्वमिदं व्यक्तित्वं परस्परं अनभिव्याप्तं वर्तत इति । जगति नानाविधा जना वर्तन्ते । ततश्च व्यक्तित्वमपि बहुविधं स्यादेव ; न तु त्रिविधम् षड्विधम् वा यथा कैश्चिद्वि-ज्ञानिभिरुच्यते । तस्मादस्मिन् विषये मध्यमवृत्तिमेवाश्रयीरन्नुपाध्यायाः ।

## व्यक्तित्वनिर्धारणम्

व्यक्तित्वनिर्धारणं वस्तुतः न सुलभम् । पूर्णव्यक्तित्वं नैकेनोपायेन, सकृद्दर्श-नेन वा निर्धारयितुं शक्यते । अतः व्यक्तित्वांशभूताः स्वभावविशेषाः (Personality traits) परीक्ष्याः भवन्ति । अंशाः प्रायशः स्थिरा भवेयुः । केचन मानवाः यावत्फलप्राप्ति यतन्ते । अन्ये तु अल्पेऽपि विघ्ने भग्नाशाः विरमन्ति । केचन उत्साहवन्तः, केचन कोपवन्तः । **काटल्** (Cattell)—नामको विज्ञानी, 'परस्परविरुद्धाः अपि व्यक्तित्वांशाः एकस्मिन् मानवे दृश्येरन्' इति कथयति । कार्यालये दास्यबुद्धिं (Submissiveness) वहन्नपि कश्चित् गृहं गतः स्वप्रभुत्वं (Dominance) भार्यापुत्रादिषु प्रदर्शयति । उपरि निर्दिष्टाश्चत्वारो गुणा व्यक्तित्वस्य अंशा भवन्ति । एते चांशा निर्धारयितुं शक्यन्ते । कस्मिन्नपि मानवे के अंशाः मापनीया वर्तन्ते इति प्रथमं निर्धारणं कार्यम् । तदनन्तरमेव मापने यत्नः कार्यः ।

प्राचीनकालादारभ्य व्यक्तित्वनिर्धारणाय प्रयत्नः कृत आसीत् । तत्रादृता-नामुपायानां अवैज्ञानिकत्वं मन्यते कैश्चित् विज्ञानिभिः । ज्यौतिष[1]-रेखाशास्त्र[2]-हस्ताक्षरविज्ञान[3], **गाल्** (Gall), उपज्ञकपालविज्ञान[4]-**लंब्रोसो** (Lombroso)-उपज्ञ[5] मुखाकृतिविज्ञानानि व्यक्तित्वावगतौ उपायत्वेन स्वीकृतान्यासन् ।

## वैज्ञानिकप्रणाल्यः

### 1. साक्षात्कारप्रणाली[6]

समालापप्रणाली इति अस्याः अपरं नाम । इयं प्रणाली अतिप्राचीनकाला-दुपयुज्यमाना वर्तते । साक्षात् द्रष्टा कश्चित्, परीक्ष्येण सह समालापं कृत्वा

1. Astrology. 2. Palmistry. 3. Graphology.
4. Phrenology. 5. Physiognomy. 6 Interview method.

प्रश्नान् दत्वा, परीक्ष्यः प्रश्नानामुत्तरं कथं कथयति ? उत्तरदानकाले अस्य मनोभावः कीदृशो वर्तते ? संवेगादिकं कथमाविष्करोति ? इत्येतत्सर्वं ज्ञात्वा, ततः तदीयव्यक्तित्वांशानां निर्धारणेन व्यक्तित्वस्य निर्धारणं करोति। अत्र परीक्षकः पूर्वमेव सम्यग्विचिन्त्य कल्पितानेव प्रश्नान् प्रथमं दद्यात्। कालोचितोत्तरचिन्तनाय प्रतिभा परीक्ष्यस्य वर्तते किम् इति ज्ञातुं उत्तरेभ्यः उद्गतानपि कांश्चन प्रश्नान् दद्यात्। कार्यालयस्थानेषु नियोज्यमानानां व्यक्तित्वपरीक्षणं अनया प्रणाल्या एवाधुना बहुत्र क्रियते। वधूवरनिश्चयोऽपि क्वचित् एवमेव भवतीदानीम्।

अस्यां प्रणाल्यां केचन दोषा अपि विद्यन्ते। सकृत्समालापेन व्यक्तित्वं पूर्णतया ज्ञातमिति वक्तुं नैव शक्यम्। चतुरः परीक्ष्यः आत्मनो दुर्गुणं दोषं वा नैव प्रकाशयेत्। अन्तर्मुखः लज्जावांश्च शोभनमात्मनो व्यक्तित्वं नाविष्कुर्यात्। परीक्षकेष्वपि केचन दोषा वर्तन्ते। एते दोषाः तैः क्रियमाणं क्रमनिर्धारणं बाधन्ते। समुचितान् प्रश्नान् कुर्वता, स्वयं वैयक्तिक-अकारणप्रद्वेषासूयादिभिः अनुपहतेन निर्धारणकरणे प्राप्तव्यम् इदं कौशलं परीक्षकेष्वपि केषांचिदेव भवति। कदाचित् परीक्षकाः अतिमात्रं स्वाधिकारमत्ताः परीक्ष्याणां मनसि भियमुत्पादयन्ति। अतः समालापप्रणाली सर्वदा विशुद्धेति नैव मन्तव्यम्।

उपाध्यायाश्च पाठशालामागच्छद्भिः बालैः सह समालप्य तेषां व्यक्तित्वं ज्ञात्वा तदनन्तरमेव यदि पाठं च विषयमध्यापयन्ति तर्हि अध्यापनस्य फलमपि प्रशस्तं स्यात्।

## 2. प्रश्नावलीप्रणाली[2]

पूर्वोक्तप्रणाल्या एकस्मिन् समये एक एव परीक्ष्यते। बहूनां परीक्षणे महान् कालव्ययो भवेत्। परीक्ष्यः लज्जया उत्तरं विस्रब्धं कथयितुं न पारयेत्। तस्मात् पूर्वप्रणालीगतदोषपरिहारेण इयं प्रणाली कल्प्यते। अस्यां प्रणाल्यां

1, Questionnaire method,

व्यक्तित्वद्योतकोत्तरप्राप्त्यनुकूलाः प्रश्नाः पत्रे मुद्रिता भवन्ति । प्रश्नानामुत्तरं च परीक्ष्येण लेखनीयम् । लिखितमुत्तरं दृष्ट्वा व्यक्तित्वं कथं वर्तत इति क्रमनिर्धारणं भवति । कस्यापि दयागुणः वर्तते किमिति ज्ञातुं एते प्रश्ना दीयन्ते ।

1. भिक्षमाणान् मानवान् दृष्ट्वा भवतो मनसि का चिन्ता जायते ?

2. शकटे युक्तान् वृषभान् कथं चालयन्ति शाकटिकाः ? शाकटिकेषु भावः कीदृशो भवति ?

3. मित्राणां धनादिना साहाय्यमाचर्यते किम् ?

4. नवसु काव्यरसेषु भवतः अभिमताः रसाः अभिमत्यनुगुणं क्रमेण निर्दिश्यन्ताम् ।

प्रसिद्धैः विज्ञानिभिः व्यक्तित्वनिर्धारणाय केचन प्रश्नाः कल्पिताः; तेषु केचन दीयन्ते । उत्तरं च आम्, नो इत्यनयोरन्यतरस्य लेखनेन देयं भवति ।

1. भवता सामान्यतः चिन्तां विनैव स्थीयते किम् ?
2. भविष्यन्तं कालमुद्दिश्य चिन्ताग्रस्तो भवान् भवति किम् ?
3. कर्मकरणकाले भवतः शीघ्रमेव श्रान्तिः जायते किम् ?
4. कार्यकरणकाले बाह्यैः हेतुभिः अवधाननाशो भवति किम् ?
5. जीवने लक्ष्यं किं भवति ?
6. स्वगृहजनैः कलहः क्रियते किम् ?
7. दिवास्वापे रुचिर्वर्तते किम् ?
8. अन्येषां मैत्री अनायासेन प्राप्यते किम् ?
9. वस्तुविक्रेतृभ्यः आत्ममोचनं श्रमसाध्यं भवति किम् ?

अत्र दत्तैरुत्तरैः उत्तरयिता कीदृशं व्यक्तित्वांशं वहतीति ज्ञातुं शक्यते । अत्रापि केचन दोषा वर्तन्ते । कदाचित् प्रश्नानामुत्तरं निश्चित्य लेखितु-

मशक्तः अवास्तविकमपि उत्तरं लिखेत् । केचित् बुद्धिपूर्वमेव अनृतमुत्तरं दद्युः । अतः इयमपि परीक्षा अत्यन्तं श्रद्धातुमर्हेति वक्तुं न शक्यते ।

### 3. मानाङ्कितावस्थाकलनप्रणाली[1]

व्यक्तित्वनिर्धारणं अनया प्रणाल्यापि क्रियते। पूर्वमेव विचिन्त्य कल्पितायां कस्यामपि अवस्थायां अवस्थापिताः नराः कथं व्यवहरन्तीति सुसूक्ष्ममवलोक्य परीक्षकैः व्यक्तीनां व्यक्तित्वं अत्र निर्धार्यते । क्रियाकरणप्रणालीत्यपि अस्याः नाम ।

सेनायां सेवां प्रार्थयमानाः केचन संभूय कर्तव्यं किमपि कार्यं कर्तुं प्रेर्यन्ते । कार्यकरणकाले एतेषां पारस्परिको व्यवहारः विलोक्यते ; ततः परं निश्चयो भवति व्यक्तित्वस्य ।

### 4. प्रक्षेपपरीक्षा[2]

केचन मानवा आत्मनो हृद्गतान् भावान् संवेगांश्च अविदितमेवान्येषु स्थितान् कथयेयुः । एवं आत्मनो भावानां विभावनानां च अन्यस्य मनसि स्थितत्वेन यत् कथनं तस्य नाम प्रक्षेप इति । यदा प्रियंवदा शकुन्तलां विवाहोत्सुकां वर्णयति तदा शकुन्तला, 'प्रियंवदायाः मनोरथः एव शकुन्तलाया हृद्गतत्वेन वर्ण्यते' इति कथयति[3] । अन्तरिक्षे कदाचित् नियतं आकारं विना (Without definite structure) स्थितं मेघं दृष्टवन्तो जनाः स्वाशयानुरोधं तदीयमाकारं वर्णयेयुः । सिंहस्य चित्रं नियताकारवद् वर्तते । ततश्च तस्य प्रदर्शने 'अयं सिंहः' इति कथयेत् कश्चित् । स एव विन्यासविहीनं चित्रं दृष्ट्वा इदं इत्थमिति वक्तुमशक्तः आत्मनः चिन्ता-प्रकृतिविशेषाद्यनुगुणं तत् वर्णयेत् । इदं च तदीयं व्यक्तित्वं द्योतयति यतः सर्वोऽपि स्वस्वव्यक्तित्वानुगुणमेवावगच्छति । अत्र

---

1. Standardized situation method.
2. Projective Test
3 "नूनं एष तवात्मगतो मनोरथः"—**शाकुन्तलम्**

क्षेपपरीक्षायां कानिचन चित्राणि प्रदर्श्यन्ते । प्रदर्शितेषु चित्रेषु आत्मनः आशयं मानवः (प्र) क्षिपतीति हेतोः अस्याः परीक्षायाः प्रक्षेपपरीक्षा इति नाम । प्रक्षेपपरीक्षासु अतिप्रसिद्धा परीक्षा तु स्विट्सर्लाण्ड्-देशीयेन **हेर्मन् रार्षाक्** ( Hermann Rorschach 1884-1922 ) - नामकेन मनोरोगचिकित्सकेन (Psychiatrist) 1921-तमे वर्षे उद्भाविता वर्तते। अस्याः परीक्षायाः अपरं नाम मषीविन्यासपरीक्षा[1] इति । चित्रम् विलोक्यताम् ।



32. रार्षाक्-क्षेपचित्रम्

रार्षाक्महोदयः बहुप्रयोगानन्तरं नातिस्पष्टानि मषीकृतानि चित्राणि कल्पयामास । यतः एतानि अविशदानि आसन्, अतः तद्द्रष्टारः स्वाशया-नुरोधमेव तानि व्याचख्युः । रार्षाक्महोदयस्य दशसु चित्रेषु कृष्णवर्णानि पञ्च, कृष्णरक्तवर्णयुक्ते द्वे, बहुवर्णयुक्तानि च त्रीणि आसन् । यस्य व्यक्तित्वं परीक्ष्यते तस्मै इमानि चित्राणि एकैकशः प्रदर्श्यन्ते । एकस्य चित्रस्य व्याख्यानात् परमेवापरं चित्रं प्रदर्शितं भवति । चित्रदर्शनकाले परीक्ष्यः एवं पृच्छ्येत-'किमत्र दृश्यते भवता ? इदं चित्रं कां चिन्तां भवतो मनसि जनयति ?' इत्येवम् । दत्तोत्तरानुगुणं पुनरपि प्रश्ना भवेयुः । इयं प्रक्षेपपरीक्षा अतिचतुरैः मनोविज्ञानि-भिरेव प्रयोक्तुं शक्या । अत्र परीक्षायां केचनावधेया अंशा वर्तन्ते । परीक्ष्यः

1 Inkblot Test.

लज्जया चित्रं अन्यथा व्याख्यान् आत्मानं न प्रकाशयेत्। संवेगवशंगताः केचन अतिशयोक्तिप्रियाः सन्तः यत्किमपि कथयेयुः। शोकाक्रान्ताः केचन किमपि नाविष्कुर्युः। ततश्च परीक्षकेणात्रावहितेन भाव्यम्।

## 5. विषयाभिबोधपरीक्षा[1]

अस्या एव परीक्षाया अपरं नाम अन्तश्चेतनाभिबोधपरीक्षा इति। प्रायशः कवयः आख्यानलेखकाश्च स्वबुद्धौ स्थितं विषयपुञ्जमेव काव्यरूपेण कथा-रूपेण वा आविष्कुर्वन्तीति इदं सर्वविदितम्। कल्पनाशक्तिरपि अल्पा उपयुज्यते। तथा च काव्येषु आख्यानेषु वा कवीनां लेखकानां च व्यक्तित्वं अवश्यं प्रतिफलितं भवेदिति इदमेव तत्त्वं आधारीकृत्य अमेरिकादेशीयाभ्यां **मार्गन्** (Morgan), **मर्रे** ( Murray )-नामभ्यां विद्वद्भ्यां इयं परीक्षा 1935-तमे वर्षे उद्भाविता। वार्तापत्रिकासु यथा अनुस्यूतकथानां वैशद्याय दीयमानानि चित्राणि अवस्थाः अभिव्यञ्जयन्ति तथा इमान्यपि चित्राणि मानवस्य जीवने कमपि सन्दर्भविशेषं अथवा कामपि अवस्थास्थितिं क्रमशः सूचयन्ति। तत्र पुंसां कृते दश चित्राणि, स्त्रीणां कृते दश, उभयेषां कृते दश इति त्रिंशत् चित्राणि वर्तन्ते। एकैकमपि चित्रं एकैकं विषयं (Theme) सूचयति। प्रथमं दश चित्राणि प्रदर्श्यन्ते। तदनन्तरं दश। एषां चित्राणां द्रष्टा, आत्मनः अपेक्षां (Needs) बाह्यप्रेरणं च (Press) अनुसृत्य चित्राणां व्याख्यानं कुर्यात्। 'कस्मादत्र चित्रे मानवः एवं वर्तते? कस्य कार्यस्य फलं इदं भवति?' इत्येवं प्रश्ना भवन्ति। द्रष्टा च कदाचित् चित्रे स्थितेन पात्रेण आत्मनोऽभिन्नतां कृत्वापि व्याकुर्यात्। ततश्चात्मनः व्यक्तित्वं मानवः अविदितमेव प्रकाशयति।

इयं परीक्षापि मषीविन्यासपरीक्षावत् प्रयोगे अतिश्रमकरी। ततश्च चतुरैः विज्ञानिभिः प्रयोक्तव्या। एताः परीक्षाः प्रायशः मनोव्याधिग्रस्तानां रोगज्ञाने उपयुज्यन्ते। व्यक्तित्वज्ञानाय यानि साधनानि तानि सर्वाण्यपि ज्ञात्वा

---

1. Thematic Apperception Test (TAT)

उपाध्यायः स्वच्छात्राणां [illegible] तदनुगुणं उपदेशमध्यापनं च कुर्यात् । छात्राणां अभिवृत्त्यनुगुणायां विद्यायां वृत्तौ च तान् प्रवर्तयेत् । यदि मानसग्रन्थिरपि जायेत कैश्चित् कारणैः तर्हि तानपि ग्रन्थीन् उचितेनोपायेन विश्लेषयेत् । उपाध्यायः अवहितो भूत्वा [illegible] स्वच्छात्रानवगच्छेत् इति तु सारः ।

## मानसस्वास्थ्यम्[1]

संकलितं व्यक्तित्वं यदि न भवति तर्हि मनःस्वास्थ्यं नष्टं भवतीति व्यक्तित्वविचारानन्तरं मनस्स्वास्थ्यमधिकृत्य विचारः क्रियते । शिक्षाया मुख्यं प्रयोजनं तु इदमेव यत् बालः भव्यजीवनकरणाय परिपूर्णं विकासं शिक्षया प्राप्नुयादिति । भव्यं जीवनं च मनस्स्वास्थ्यवद्भिरेव प्राप्तुं शक्यमिति उपाध्यायैः इदमधिकृत्यापि ज्ञातव्यमेव । विद्यार्थिषु केचन मनस्सामञ्जस्यरहिता भवन्ति । यथा तेऽपि मनस्सामञ्जस्यं प्राप्नुयुः तथा उपाध्यायेनोपकर्तव्यमिति इदानीं उपाध्यायप्रशिक्षणे अयमपि विषयः ज्ञातव्यत्वेन कल्पितः । यत् शास्त्रं इमं विषयं परिशीलयति तस्य शास्त्रस्य मनस्स्वास्थ्यविज्ञानमिति[2] नाम ।

अस्य च शास्त्रस्य मुख्यमुद्देश्यं तु द्वयम् । 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमि'ति न्यायेन अनागतविधानं प्रथममुद्देश्यं भवति । यथा मनसः अस्वास्थ्यं न कदापि जायेत तथा प्रथममेव तत्कारणानां परिहरणं (Prevention) विधेयमिति । स्थितस्य मनस्स्वास्थ्यस्य रक्षणं तु द्वितीयमुद्देश्यम् ।

कस्मात् मनसः अस्वास्थ्यं जायते इत्युच्यते । यदा व्यक्तित्वधर्माणां अपेक्षितः अनुपातो न भवति तर्हि कुसामञ्जस्यं (Maladjustment) जायते । यदा च संवेगयोः संघर्षो (Conflict) जायते तदापि कुसामञ्जस्यं भवेत् । दास्यवृत्तेः आत्मगौरवबुद्धेश्च संघर्षो भवति । मातृभक्तेः भार्याप्रीतेश्च संघर्षं प्राप्य कश्चित् नवोढो युवा किं मातृवाक्यमनुष्ठातव्यं उत भार्यावचः श्रोतव्यमिति चिन्ताकुलः

---

1. Mental health. 2. Mental Hygiene.

कुसामञ्जस्यं प्राप्नुयात्। बालानामपि विद्यायामश्रद्धावतां पितृनिर्बन्धेन पाठशालामागच्छतां मनसि संघर्षो भवेत्।

समाजे स्वेच्छया प्रकाशयितुमशक्यानां केषांचित् भावानां समाजात् भीत्या अन्येन वा कारणेन यदा निरोधः (Repression) क्रियते तर्हि ते भावाः अवचेतने मनसि लग्नाः मनसः अस्वास्थ्यं जनयन्ति। सर्वत्र भावानां निरोधे अनौचित्यं, लज्जा, सामाजिकस्थितिश्च कारणानि भवन्ति। ततः तेषां भावानां विस्मरणे प्रयत्नः क्रियते। यत्र गुणदोषविचारपूर्वं कस्यापि भावस्य दुष्टत्वमवगत्य मनसः नियन्त्रणं (Suppression) क्रियते तत्र कष्टकारी भावसंघर्षो न भवतीति ज्ञातव्यम्। यः एवं विवेकेनात्मनियन्त्रणं करोति तस्य व्यक्तित्वं पूर्णं संकलितं विशुद्धं च स्यात्।

केषांचन बालानां व्यवहारः समीचीनो न भवति। परद्रव्यापहरणम्, परोपद्रवकरणम्, पाठशालाद्रव्याणां नाशनम्, अपचारित्रम्, अविनीतत्वम्, कक्ष्यातः अपसरणमिति एते दुर्गुणा दृश्येरन् बालेषु। परस्परं विरुद्धाः भावाः बालानां मनः यतः पीडयन्ति तत्र एवैतादृशा दुर्गुणा जायन्त इति मन्तव्यम्। येषां बालानां विषये गृहे मातृप्रीतिः पितृप्रीतिर्वा न भवति, गृहे पाठशालायां च अत्यनुशासनं भवति, उपाध्यायप्रीतिश्च न वर्तते, ते एव बालाः प्रायशः मनस्स्वास्थ्यं न लभन्ते। अतिलालनमपि कुसामञ्जस्यं जनयति। येषां बालानां मदीयमिति स्वाम्यबुद्ध्युत्पादनापेक्षितं क्रीडनकमपि न भवति ते बालाः सर्वथा कुसामञ्जस्यं लभन्ते। दारिद्र्यमेवात्र अपराध्यति। केचन पितरः उपाध्यायाश्च बालशक्त्यतिक्रान्तं किमपि कर्तुमथवा पठितुं बालं प्रेरयन्ति। अत्र प्राप्तपराजया विद्यार्थिनः मनसः अस्वास्थ्यं प्राप्नुवन्ति। बाह्यपरिवेषान्तर्भूताः दुर्मित्र-दुश्छायाचित्र-कामुकतावर्धकपत्रिकाप्रभृतयोऽपि अनुचितान् भावानुत्पाद्य बालान् दुष्टान् कुर्वन्ति। तस्मात् ते कष्टदायिनः बालाः (Problem children) सम्पद्यन्ते।

मनस्स्वास्थ्याभावात् बालेषु जायमानाः केचन दोषाः निर्दिश्यन्ते।

**चौर्यम्**—बालेषु दृश्यमानेषु दोषेषु अयमेव मुख्यतमो भवति। बालिकापेक्षया बाला एव अधिकं चौर्यकारिणो वर्तन्ते। दारिद्र्यम्, वस्त्वपेक्षा च अत्र मुख्यं कारणम्। अपेक्षितवस्तूनामलाभे बालाः चौर्याय प्रवर्तेरन्। केचन पितरः उपाध्यायाश्च सच्चारित्र्यमधिकृत्य नोपदिशन्ति। ततश्च चौर्ये दोषमपश्यन्तः केचन बालाः स्तेयमाचरन्ति। क्वचित् स्तेयकारिणः पितॄन् दृष्ट्वा बालाः स्वयमपि स्तेयं कुर्वन्ति।

**असत्यकथनम्**—शैशवावस्थायां शिशूनां सत्यासत्यभेदज्ञानं न वर्तते। बाल्येऽपि अनयोः भेदं अविदित्वा बालाः कल्पनाशक्तिमप्युपयुज्य अयथाभूतमर्थं कथयन्ति। अत्र दोषदृष्टिः न कार्या। सत्यासत्यज्ञानं तु वस्तुतः दशमे वयस्येव पूर्णतया जायते। यदि बालः अस्मिन् वयसि अयथाभूतं अर्थं कथयति तर्ह्येवायं बोधनीयो भवति, 'असत्यं न वक्तव्यम्, सत्यमेव कथनीयमि'ति। पितरः कदाचित् बालानां पुरतः असत्यं कथयन्ति। ततः पुत्रादयः तान् अनुकुर्वन्ति। उपाध्यायकृतदण्डनात् भिया, आत्मगौरवरक्षणाय च बालाः कक्ष्यायां अनृतं वदन्ति। कदाचित् स्वमित्रं उपाध्यायकोपात् परिरक्षितुमिच्छन्तः असत्यमभिदधति। निरर्थके लघुनि च असत्ये बालैः कथिते नातिचिन्ता कार्या उपाध्यायैः, यतः कालक्रमेण सच्चारित्रज्ञानं प्राप्य बालाः एतादृशमनृतकथनं स्वयमेव परित्यजेयुः। यदि बालाः परेषां उपद्रवकरं अनृतं कथयन्ति, तर्हि ते उपाध्यायैः प्रतिबोधनीयाः असकृत्। दण्डनमत्र नातीवोपकुर्यात्।

**कक्ष्यां प्रति अनागमनम् अथवा कक्ष्यातः पलायनम्**[1]—केचन बालाः शिक्षायामेव सामान्यतः अरुचिमन्तो भवन्ति। केषांचित् पाठशालायामध्याप्यमानेषु केषुचिद्विषयेषु अरुचिः स्यात्। केषांचन विद्यार्थिनां केचनोपाध्याया अप्रिया भवन्ति। ततः बालाः पाठशालां नागच्छेयुः। पाठशाला क्वचित् बालानां गृहात् अतिदवीयसि स्थाने स्यात्। दूरगमनमनि-

---

1. Truancy

च्छन्तः बालाः पाठशालां नागच्छेयुः । शोभनवस्त्राभावात् केचन बालाः, अन्ये परिहसिष्यन्तीति लज्जां प्राप्य पाठशालागमनं परिहरन्ति । एतादृशा बालाः प्रातः उचिते काले गृहात् प्रस्थाय आसायं यत्र कुत्रापि परिभ्रम्य, सायं उचिते काले, पाठशालातः प्रतिनिवर्तमानाः साधवो बाला इव स्वयमपि गृहं गच्छन्ति । एवं कृत्वा मातापितरौ उपाध्यायांश्च वञ्चयन्ति ।

यदि कतिचन दिनानि कश्चन बालः पाठशालां नागच्छति तर्हि तदधिकृत्य पित्रे निवेदनीयम्। ततो ज्ञायेत किं बालः स्वेच्छया पितुरविदितं अपसारी (Truant) वर्तते ? उत उचितेन कारणेनेति । यदि अपसरणं अथवा पलायनम् पूर्वोक्तदोषयुक्ताध्यापनादिभिः भवेत्, तर्हि तादृशकारणापनयनं कार्यम्। प्रीतिपूर्णः परिवेषः पाठशालायां आपादनीयः। विद्यार्थिनां चित्तं पाठशालां प्रति आगमने यथा स्वत एवाकृष्टं भवेत् तथा व्यवस्था कर्तव्या । अत एवेदानीं बहुषु राज्येषु पाठशालासु बालेभ्यः भोजनं क्षीरं च दीयते । न कोऽपि बालः आजन्मदुष्टो भवति । किन्तु परिवेषबलादेव दुष्टो जायते । ततः परिवेष एव सम्यक् रक्षणीयः । एवं सौविध्ये सत्यपि यदि बालाः पाठशालां नायान्ति तर्हि इदं पितृभ्यो निवेद्य तेषां साहाय्येन बालसान्निध्यं संपादनीयं स्यात्। पाश्चात्य-देशे केचन सेवासमाजा वर्तन्ते ये पाठशालायाः पितॄणां च मध्ये सन्धायकत्वेन स्थित्वा एवमादिविषये साहाय्यं कुर्वन्ति। तादृशसमाजा अस्मद्देशेऽपि कल्पनीयाः भवन्ति ।

अत्रेदमतितरामवधेयं वर्तते । पाठशालासु पठतां बालानां मनसः असा-मञ्जस्यं कथं जायते ? कथं च तत्परिहरणीयमित्युक्तम्। किं उपाध्यायस्यापि मनः समञ्जसं वर्तते इति विचारणीयम्। कुसमञ्जसमनस्कः उपाध्यायः स्वेन अध्याप्यमानानां बालानां मनस्सु कुसामञ्जस्यमवश्यं जनयेत्। तस्मादुपाध्यायः प्रथमं, 'किमहं सामञ्जस्यवानि'ति विचारयेत् ।

बहवः उपाध्यायाः आत्मनो वृत्तिं निहीनाम्, आयं चाल्पं विचिन्त्य सर्वदा दुःखमनुभवन्ति । एते आत्मानं न जानन्ति। एकैकस्यापि मानवस्य

यदृच्छया भगवत्सङ्कल्पेन वा कापि वृत्तिः उपनता भवति। आत्मेच्छानुरोधेन सर्वेषां वृत्तिः न लभ्यते। ततः लब्धायां उपाध्यायवृत्तौ जुगुप्सां अकुर्वन्तः तत्रैव यदि तृप्ता भवन्ति तर्ह्येव मनःस्वास्थ्यं प्राप्नुयुः। केचनोपाध्याया आत्मनः परिमितां शक्तिमजानन्तः असाध्यं लक्ष्यं किमपि साधयितुं वाञ्छन्तः पराजयमसकृत् प्राप्य स्वं मनः अनारोग्ययुक्तं कुर्वन्ति। 'यदसदीयं न हि तत् परेषा'मिति वचनं विस्मर्यते एतैः। मनःस्वास्थ्यरक्षणाय केचनोपाया आदर्तव्या भवन्ति।

1. प्रतिदिनं वृत्तिकरणात् परं यद्यवकाशः स्यात् तर्हि मानसोल्लासकरं ( Hobby ) किमपि कार्यं कर्तव्यम् यत्र मनसः पूर्णा रुचिः स्वयं प्रवर्तेत। समाजहितकारिणी सेवापि कर्तुं शक्यते। क्रीडापि मानसोल्लासाय कल्पेत।

2. जीवनपद्धतिः काचन वेदान्तानुसारिणी उपादेया। समाजात्महित-परिवेषे वर्तितव्यम्।

3. आत्मनः सुखं, दुःखं, आशयाश्च अन्यैः सह संविभजनीयाः। समानहृदयैः सख्यं सम्पादनीयम्। तेषु विश्वासः कार्यः। रहस्यमपि तेभ्यः कथनीयम्। तेषां उपदेशश्च ग्राह्यः।

4. भये उपगते सम्यक् विमृश्य धीरो भवेत्। न तु शोकसागरे निमग्नो विषीदेत्। 'प्रकाशः पिशाचान् वारयती'ति वर्तते आभाणकः। ज्ञानं, अज्ञानं, तत्कृतां भीतिं च नाशयेत्।

5. अधुना प्रत्यक्षं दृश्यमानया परिस्थित्या काल्पनिकपरिस्थितिं सन्तोल्य विचारः कार्यः। अनुभवविरुद्धां, साधयितुमशक्यां आयोजनां कृत्वा ये काल्पनिके लोके एव सञ्चरन्ति ते पतनात् परं प्रबुध्यन्ते।

6. आगामिनं विषयमधिकृत्य व्यथाकारिणीं चिन्तां कुर्वन्तः केचन सर्वथा दुःखिनो भवन्ति। इदमपि परिहर्तव्यम्।

7. परेषु युक्ता प्रीतिः प्रदर्शनीया। 'प्रीतिः प्रीतिं वर्धयति' इति लोकोक्तिः। परेषु क्रियमाणा प्रीतिः परेषां मनस्यपि अस्मद्विषये प्रीतिं जनयति।

8. भविष्यति शुभे विश्वासः कार्यः। क्षमावता प्रत्याशावता च भाव्यम्। 'कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा, नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेणे'ति कालिदासः।

एवमात्मनो मनसः सामञ्जस्यं प्राप्य स्ववशे स्थितानां बालानामपि मनसः स्वास्थ्यं रक्षेयुरुपाध्यायाः।

## अपचारी बालकः[1]

अपचारः इतीदं पदं बालैः अथवा किशोरैः क्रियमाणं यत् समाजानभिमतं दुश्चरितं भवति तत् अभिदधाति। अत्रेदं पारिभाषिकं पदं वर्तते। ये अपराधाः चौर्यप्रभृतयः वयस्थैः क्रियन्ते ते एवापराधा बालैः किशोरैश्च क्रियमाणाः अपचारपदेन निर्दिश्यन्ते। ये एतादृशदौश्चारित्र्यवन्तो बालाः ते अपचारिणो भवन्ति।

पाठशालायामेवान्यस्य पुस्तकादिकं योऽपहरति स समस्यादायी बालः उच्यते। स एव पाठशालाया बहिः चौर्यं कुर्वन् अपचारी भवति। यानि दुष्कार्याणि कुर्वन्तः प्रौढाः पुरुषा दण्डिता भवन्ति, तान्येव दुष्कार्याणि कुर्वन्तो बालाः अपचारिणो व्यवह्रियन्ते इति सिरिल् बर्ट् कथयति। अष्टादशवर्षेभ्योऽवरवयसः आगस्कृतः किशोराः अपचारिणः उच्यन्ते।

पूर्वकर्मवशात् एवं बालाः दुर्वृत्ता भवन्तीति अपचारे कारणं कथयेयुः केचन। वंशगुणः अनुवर्तते इत्यपरे साधयेयुः। परिवेषप्रभाव इति इतरे भणेयुः। प्राकृतिकोऽयं धर्म इति प्रकृतिसिद्धान्तं स्थिरीकुर्युः केचन। पूर्वोक्तेषु परिवेषस्यैव बालानां अपचारे कारणत्वं सर्वाङ्गीकृतं वर्तते। कुटुम्ब-ग्राम-नगर-पाठशालारूपपरिवेषाः यत्र शोभना वर्तन्ते तत्र अपचारिणो बालाः अल्पसंख्याका एव भवन्ति। नगरपरिसरे कुटीरनिवासिनां दरिद्राणां पुत्रा बहवः अपचारिणो

---

1. Delinquent child.

भवन्ति । धनिकपुत्रापेक्षया दरिद्रपुत्रा एव अपचारिणो वर्तन्ते । अपचारिषु बालिकापेक्षया बालाः एवाधिकसंख्याकाः विद्यन्ते ।

पूर्वं अपचारिणो बालाः तीव्रं दण्डनं प्राप्तवन्तः आसन् । अधुना अपचारस्य मूलं कारणमन्विष्य तदपनयनाय प्रवृत्यते । यदि दारिद्र्यात् कोऽपि चोरयति तर्हि दारिद्र्यमेवात्र अपराधि । मानवस्य दारिद्र्ये जनसमाज एव कारणमिति, तस्मात् जनसमाजस्यैवायमपराध इति, कस्य दण्डो धार्य इति च इदानीं चिन्त्यते । असाध्याः (Incorrigible) इति ये केचन बालाः पूर्वं परित्यक्ता आसन्, इदानीं तेष्वपि मतिरन्यथा वर्तते । असाध्या अपि बालका मनःस्वास्थ्य-संपादनेन साधवः कर्तुं शक्या एवेति संप्रति सिद्धान्तः ।

**अपचारितापनयनम्**

मनस्स्वास्थ्यरहितानां बालानां मनःस्वास्थ्यसंपादनाय ये उपायाः पूर्वं उक्ताः ते एतेषु बालेषूपयुज्यमानाः अभिलषितं फलं दद्युः । अपराधिनां दण्डनेन साधुत्वं नैव संपद्यते । बालापचारे परिवेष एव कारणमिति परिवेषः (समाजः) समीचीनः कल्प्यते अधुना । अपचारिणो बालाः सच्चारित्रवर्धनपाठ-शालासु[1] रक्ष्यन्ते । धनसंपादनानुकूलं किमपि कर्म कर्तुमेतेभ्यः प्रशिक्षणं दीयते । कर्मणा धनं संपाद्य जीवनं वर्तयितुं शक्यमिति एतेषां मनसि आत्मप्रत्ययश्चोत्पा-द्यते । अमेरिकादेशे एतादृशबालानां पाठशालाः प्रथममुपक्रान्ता बभूवुः । अस्मद्देशेऽपि **बालनगरनाम्ना** प्रथिताः समाजाः अपचारित्रान् अनाथांश्च बालान् प्राप्ताक्षरज्ञानान् सामाजिकांश्च कर्तुं प्रयतमानाः तत्र तत्र वर्तन्ते । अपचारित्रं बालानां प्रायशः दशमे वर्षे जायते । उपाध्यायैः, जनसमाजहितकारिभिः, देश-नेतृभिश्च यथा बालाः अपचारिणो न भवेयुः, तथा विधातव्यम् ।

**अत्रोपायाः—**

1. बालापचारित्रे समाजस्थितिरेव कारणमिति समाजस्य जीवनस्तर एव उचितः कल्पनीयः । यथा सर्वेषामपि अशनवसननिवासादयः लभ्येरन् तथा

---

1 Reformatory schools,

सामाजिकस्थितिः वर्तनीया । समाजस्य जीवनस्तरः यद्युत्कृष्टो भवति तर्हि अपचारित्रमपि न्यूनीभवति ।

2. सर्वस्यापि समाजस्य उद्धरणं अशक्यं चेत् तर्हि पाठशालामागच्छतां दरिद्रपुत्राणां जीवानापेक्षितं सौविध्यं पाठशालायां दातव्यम् । मध्याह्ने भोजनकल्पनं, विना मूल्यं वस्त्रपुस्तकादीनां दानं च उपकुर्यात् ।

3. पाठशालापरिवेषस्तथा तोषकरः कल्पनीयः यथा विद्यार्थिनः सस्पृहं पाठशालां स्वयमेवागच्छेयुः ।

4. एकैकस्यापि बालस्य तत्तदभिरुच्यनुगुणा विद्या दातव्या ।

5. उपाध्याया अपि सर्वदा यदि प्रीतिमेव प्रदर्शयन्ति तर्हि विद्यार्थिनां मनसि अभयं भवेत् । ततश्च स्वकीयां कष्टदशामुपाध्यायेभ्यो निवेद्य समाश्वसनं परिहारं च प्राप्तुं उत्साहिनो भवेयुः बालाः ।

6. पाठशालायां योगक्षेमनिकेतनं (Welfare Centre) किमपि कल्पनीयम् । तत्र विद्यार्थिनां शरीरारोग्यादिपरीक्षणं कार्यम् । मानससंकटपरिहारोऽपि अत्र कार्यः ।

7. सच्चारित्रवर्धनायापि संविधानमधिकं कर्तव्यम् । स्कौट्-नागरिकता-शिक्षण-नैतिकोपदेश-धर्मोपदेशादिभिरुपायैः सच्चारित्रं वर्धयितुं शक्यम् ।

8. भगवति विश्वासः उत्पादनीयः यः आत्मरक्षणप्रत्ययं प्रत्याशां चोत्पाद्य मानससंकटं परिहरेत् ।

9. लब्धः अवकाशः (Leisure) यथा शोभनया कयाचन प्रक्रियया यापितः भवेत् तथा संविधानं कर्तव्यम् । तदर्थमुपादेयोपायाश्च उपदेष्टव्याः ।

10. अपचारित्रमङ्कुरावस्थायामेवापनेयमिति तत्रोपाध्यायैरवहितैः भाव्यम् ।

11. पितॄणामपि बालमनोविज्ञानं यथा स्यात् तथोपकर्तव्यमुपाध्यायैः । शिशुमनोविज्ञानवन्तः पितरः किमपि साहाय्यमत्र कर्तुं प्रभवेयुः ।

## निर्देशनसिद्धान्तः[1]

आधुनिकमनोविज्ञानं, 'विद्यार्थिनः सर्वेऽपि समानबुद्धिशक्तयो न भवन्ति। वैयक्तिको भेदस्तेषु वर्तत' इति इदं तत्त्वं सुदृढं निरूपितवद् वर्तते। अत एव वैयक्तिकमनोविज्ञानमिति कापि शाखापि इदानीं कल्पिता चकास्ति। वैयक्तिक-भेदस्तु नैसर्गिकः। एकैकोऽपि विद्यार्थी यथा आत्मनः मनसः परिपूर्णं विकासं प्राप्य भव्यं जीवनं वर्तयति तथा शिक्षा तस्योपकारमाचरेदिति इदानीं शिक्षा-सिद्धान्तिनां मतं वर्तते।

निर्देशनम् (Guidance) इत्यस्य पदस्य अर्थः निष्कृष्य ज्ञातव्यः। यद्य-पीदं बहुधा लक्ष्यते, अथापि अधोदीयमानं व्याख्यानमस्य पदस्यार्थं सुष्ठु व्याख्या-तीति मन्तव्यम्। 'निर्देशनं' कुशलेन केनापि मानवेन अन्यस्मै दीयमानं बौद्धं साहाय्यं सूचयति। इदं च केनापि जीवने प्राप्तायाः कस्या अपि समस्यायाः उत्त-रदर्शने तस्य साहाय्यं करोति। न तु स्वयमेवोत्तरं ददाति। इदं निर्देशनं एकस्या व्यक्तेः अथवा समाजस्य साहाय्यं कुर्यात्। संग्रहेणोच्यते चेत् एवं भवति। कुशलः कश्चिदन्यस्मै तत्कार्यसिद्ध्यर्थं उपायमुपदिशति। न तु स्वयमेव तत्कार्यं साधयति। यत् उपदेशनम् वर्तते तस्यैवापरं नाम निर्देशनमिति। गन्तव्यस्य स्थानस्य मार्गं पृच्छतः पथिकस्य कस्यचित् यथा मार्गदर्शनं अन्येन मानवेन वाचा केवलं क्रियते न तु स्वयं गम्यते, एवमेव शिक्षायामपि विद्यार्थिनां विद्यालये मार्गप्रदर्शनं यद् दीयते कुशलैः तदेवात्र निर्देशनमित्यभिधीयते। निर्देशने सर्वत्र एते अंशा भवेयुः। कार्यं सिषाधयिषुः कश्चन स्यात्। स च स्वयमेव विघ्नशङ्की सन् परेण क्रियमाणं निर्देशनमपेक्षमाणो भवेत्। मार्गप्रदर्शकः कुशलः अनुकम्पावान् स्यात्। निर्देशनं च क्रियाकर्तुः उपायोपदेशनरूपं भवति। एवं उपदेशं लभमानेन पुरुषेण सर्वदा उपदेष्टुर्वचनं श्रोतव्यमिति नास्ति निर्बन्धः।

---

1. Principles of guidance.

सः उपदेशग्रहणात् परं स्वतन्त्रतया विचिन्त्य कार्यं कर्तुमनुमन्यते। कुशलेनोपदिष्टमार्गः कश्चित्, पुनः स्वकीयं मार्गं स्वयमेव द्रष्टुं शक्तः स्यादिति च तर्क्यते। अत एव, अर्जुनाय तत्त्वमार्गं निर्दिशन् भगवान् कृष्णः सर्वमुपदिश्य अन्ते—'इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया। विमृश्यैतदशेषेण **यथेच्छसि तथा कुरु** ॥' (18.63) इति यदाह तन्निर्देशनस्योदाहरणं भवति।

निर्देशनं शिक्षायां वृत्तिग्रहणे च दीयते। शिक्षानिर्देशनं विद्यार्थिभिः स्वाध्येयविषयग्रहणे उपकरोति। बालकाः केचन पित्रादिभिर्निर्बद्धाः आत्मनः अनभिमतं विषयं अध्ययनार्थं गृह्णन्ति। बुद्धिशक्तिः अभिरुचिश्च केषुचिद्विषयेषु न भवति। एतादृशसन्दर्भेषु पितरः किमपि न जानीयुः। तस्मादुपाध्याय एव बालस्याभिरुचिशक्त्यादिकं प्रश्नकरणादिभिः ज्ञात्वा उचितं विषयमुपादातुं विद्यार्थिनां निर्देशनं कुर्यात्, न तु निर्बध्नीयात् अयमेव विषयः ग्राह्यः इति।

विषयनिर्धारणे च, बालस्य कुटुम्बस्थितिं, परिवेषं, कुटुम्बीयानां वृत्तिं, पित्रोः अभिलाषं, अध्येतुरुत्साहं, पाठशालायाः परिस्थितिं च विचिन्त्य निर्देशो देयः। विद्यार्थिना यो विषयः इष्यते तस्यैव ग्रहणं वरं स्यात्। संस्कृताध्ययने यदि कस्यापि रुचिः न भवति तर्हि न कदापि सः निर्बन्धनीयो भवति। यदि निर्बद्धो भवति तर्हि तस्य संस्कृते जातः द्वेषः संस्कृतज्ञेष्वपि प्रसरेत्। पश्चादपि जीवने संस्कृतज्ञान् सर्वान् द्विष्यात्। अतो वरं अभिलषिताया एव विद्याया दानम्। अभिरुचिप्रकरणे (P. 197) यद् यदुक्तं तत्सर्वमत्राप्यतिदेष्टव्यमिति विस्तरः न क्रियते।

**औद्योगिकपरामर्शदानम्[1] अथवा वृत्तिनिर्देशनम्**

केषांचित् बालानां अक्षरविद्यायां रुचिर्न भवति। किन्तु ते औद्योगिके विषये रुचिं प्रदर्शयन्ति। यत्किमपि कर्तुं स्पृहा वर्तते। जीवनाय वृत्तिग्रहणेऽपि केषांचित् असकृत् विचिकित्सा भवति, 'का वृत्तिः स्वीकर्तव्या' इति।

1. Vocational guidance.

दशम्यां तदुपरितनकक्ष्यासु वा स्थितानां बालानां विद्यासमाप्त्यनन्तरं वृत्तिजिघृक्षा जायते। अत्रापि उपाध्यायेन बालस्य कुटुम्बपरिस्थित्यादिकं सम्यग् ज्ञात्वा देशापेक्षां च विदित्वा यादृश्याः वृत्तेः शिक्षणे किशोरः शिक्षणात्परं जीविकां अनायासेन लभेत तादृश्याः वृत्तेर्ग्रहणाय ज्ञानाय च उपदेशः कार्यः। यस्या वृत्तेः जनानां मध्ये अपेक्षा न भवति तस्याः वृत्तेः ज्ञानं निरुपयोगि भवेत्। अत्रापि किशोरस्य अभिरुचिशक्ती पर्यालोचनीये भवतः। वृत्तिग्रहणे बालस्याभिलाषः केवलं निर्धारणे अलं न भवति।

किशोराभिलाषज्ञाने प्रश्नकरणमेव मुख्योपायो भवति। पश्चात् कस्मिन्नपि कार्ये नियोजनेनापि ज्ञातुं शक्यते। नियोजनकाले केचन वैज्ञानिकाः नियुक्तेभ्यः वेतनं दातव्यमिति उपदिशन्ति। अन्यथा युवकः अनुत्साही भवेदिति।

इदं च निर्देशनं बालानां किशोराणां यूनां चापेक्षानुगुणं प्रारम्भपाठशालायां, उच्चतरपाठशालायां, कलाशालासु च यथाक्रमं कर्तुं शक्यमिति अभिप्रयन्ति।

## चारित्रम्[1]

चारित्रम् शीलम् इत्यनयोः पर्यायत्वं कोशकारा अभिप्रयन्ति। 'निष्ठा च शीलं चारित्रं चरित्रं चरितं तथा' इति रत्नकोशः। 'शीलं स्वभावे सद्वृत्ते' 'शुचौ तु चरिते शील'मिति च अमरकारः। अनेन ज्ञायते शीलशब्दः स्वभावं आचरणं च सूचयति इति। चरितमात्रेऽपि शीलमिति भानुजीदीक्षितः। आचरणस्य मूलभूतः स्वभावविशेषः चारित्रशब्देन निर्दिश्यते। अयं च सर्वदा नियतया रीत्या आत्मानं प्रकाशयेत्। एकरूपः एव स्यात्। कदाचित् सन्दर्भवशात् शीलं (चरित्रम्) भ्रंशं प्राप्नुयात्। अथापि बहुलं शीलं स्थायि एव भवेत्। यस्य यत् शीलं वर्तते तत् तस्य असाधारणं भवति। सामाजिकनैतिकदृष्ट्या दृश्यमानं व्यक्तित्वमेव शीलमिति केचन शीलं लक्षयन्ति।

---

1. Character.

शीलं च मानवस्य संवेगानुगुणमेव जायते । धार्मिकसंवेगवतः शीलमपि शोभनं स्यात् । संवेगे दुष्टे शीलमपि दुष्टं भवति । संवेगदोषादेव नेतारोऽपि अपप्रथां प्राप्नुवन्ति । विद्यायाः मुख्यमुद्देश्यं बालेषु सच्चारित्रवर्धनमेवेति हेर्बार्ट्-प्रभृतयोऽपि मन्यन्ते । ' विद्या ददाति विनयम् ' इति वर्तते सूक्तिः । 'वाग्भूषणं भूषण'मिति विद्यां प्रशंसमानोऽपि भर्तृहरिः 'दुर्जनः परिहर्तव्यः विद्ययालङ्कृतोऽपि सन्' इति शीलराहित्यं निन्दति । आधुनिकलोकस्थितिं पश्यन्तः केचन शिक्षासिद्धान्ताभिज्ञाः शिक्षोद्देश्यत्वेन शीलोत्पादनमेव कल्पनीय-मिति सुदृढं वदन्ति । तथा च शीलं (सच्चारित्रम्) धार्मिकांशान्, शोभनान् सद्भावान्, सद्गुणांश्चाश्रित्य क्रियमाणं सदाचरणमिति फलितम् । सदाचरण-कारणभूतस्य शीलस्य, शीलकार्यभूतस्य सदाचरणस्य च अभिन्नतामङ्गीकृत्य असकृत् व्यवहारः क्रियते अभिज्ञैः । एवमेव आङ्ग्लेय्यामपि तदर्थकपदयोः[1] पर्यायत्वं ज्ञायते कैश्चित् ।

शीलाख्यभवनस्य मूलशिला तु अन्तःकरणम् (Conscience) भवति । 'मनस्साक्षि' इति भाषायामुच्यते । इदं चान्तःकरणं शैशवादारभ्य मातापितृभ्यां यदि शोभनया रीत्या सम्यक् वर्ध्यते तर्हि पश्चादपि मानवः, रहस्ये पापं कार्यं चापलात् कर्तुं प्रवृत्तोऽपि, अनेन अन्तःकरणेन निवार्यते । यदि अन्तःकरणम् अन्तर्विवेको वा न भवति, तर्हि मानवं दुराचरणात् प्रतिरोद्धुं न किमपि शक्तं स्यात् । अन्याविदितं रहस्ये दुराचरणादिकं कुर्यादेव । अन्तर्विवेक एव पाप-कार्यात् मानवं सर्वदा निवारयतीति, समीचीनः स एव उत्पादनीयः प्रथमं विद्यार्थिनां मनसि ।

वर्तन्ते लोके स्वार्थपरा नरा ये परेषां प्रयोजनं न्याय्यमपि विनाश्य अन्याय्यमपि स्वहितमेवाचरितुं प्रवर्तन्ते । लोभः स्वार्थपरत्वमिति इदमुभयमेव जगति बहून् मानवान् प्रवर्तयति । अन्याय्यम्, परपीडनम्, असता उपा-

---

1. Character and conduct.

येन परद्रव्यापहरणम्, परकीयाशयस्य तत्स्वातन्त्र्यस्य च तिरस्करणं च विलोकयतां बालानां मनसि, 'सत्यं न सन्त्येव प्रपञ्चे न्यायार्जवप्रभृतयो गुणाः' इति बुद्धिरुदियादेव।

असकृत् कलहायमानौ, परनिन्दकौ, चञ्चलचित्तौ, क्रोधनौ, असूयावन्तौ, हिंसारुची, अनृतवक्तारौ, पितरौ दृष्ट्वा बालः सच्चारित्रे मतिं न कुर्यात्। कार्यालयेष्वपि अविश्वसनीयानाम्, अश्रद्धावतां, अदक्षाणां, गृध्नूनां तदितरेषां च वेतनं सममेव दीयमानं पश्यतो यूनो मनस्यपि न श्रद्धा भवेत् सच्चारित्ररक्षणे। नैतिकपरिवेषेऽपि नियमोल्लंघिनां पूजनं, तदनुल्लंघिनां तिरस्कृतिं च विलोकयतो मनसि जायते एव शैथिल्यं सच्चारित्ररक्षणे।

सत्यपि विपरीते बाह्यपरिवेषे, प्रत्याशावद्भिरुपाध्यायैः बालानां सच्चारित्रोत्पादने महत् कर्तव्यं वर्तते।

उपाध्याया यदि कक्ष्यायां अध्याप्यविषयाध्यापनेनैव आत्मानं कृतकृत्यं मन्येरन्, चारित्रवर्धनाय च न प्रयतेरन्, तर्हि कोऽन्यः सच्चारित्रबुद्धिं बालेषूत्पादयितुं प्रभवेत्। तस्मादुपाध्यायानामयमपि स्वधर्मः एव यत् चारित्रबुद्ध्युत्पादनं बालेषु।

सच्चारित्रमभ्यासेनैवोत्पादनीयमिति **विलियं जेम्** अभिप्रैति। जायमानः शिशुः स्वयमेव सुचरित्रः अपचरित्रो वा न भवति। एतद्विषयकज्ञानं शिशोः तदा नास्ति। ततः परं ईषत् प्रबोधं प्राप्य नैसर्गिकमूलप्रवृत्त्या प्रेरितः व्यवहरति। अस्यां दशायां अर्जनरूपमूलप्रवृत्त्या प्रेरितः अन्यस्य शिशोः क्रीडनकं गृह्णीयात्। पश्चादेव कालक्रमेण ज्ञानं प्राप्नोति सच्चरित्रविषये।

## सच्चारित्रोत्पादनम्

विद्यार्थिनां सच्चारित्रोत्पादने उपाध्यायैः श्रद्धावद्भिः भाव्यम्। उपायाश्च केचन निर्देष्टुं शक्यन्ते। प्रायशो बालाः प्रौढान् अनुकुर्वन्ति। तस्मादुपाध्यायाः स्वयं सच्चारित्रवन्तो भूत्वा स्वकीयव्यवहारेषु तत् यदि प्रतिफलितं कुर्वन्ति तर्हि

बाला अपि तान् अनुकुर्वन्तः सच्चारित्रवन्तो भवेयुः । भगवानपि कथयति— 'यद्यदाचरति श्रेष्ठः तत्तदेवेतरो जनः' इति । केषांचित् उपाध्यायानां केषुचिद्विषयेषु लघु चारित्रदौर्बल्यं यदि भवेत् तर्हि तदपि प्रयत्नेन निवार्यं स्यात् । एतादृशं दौर्बल्यं विचिन्त्यैव उपनिषदाचार्यः 'यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि' इत्याह । उपाध्यायाः श्रेष्ठा भान्ति बालानाम् । ये सद्गुणाः सच्चारित्रप्रतिपादकग्रन्थेषु वर्णिताः तेषामधिगमनस्य जीवने मुख्यलक्ष्यत्वं निर्दिश्य विद्यार्थिनः प्रतिबोधनीयाः । अत एव पाठपुस्तकेषु हरिश्चन्द्ररामादीनां महापुरुषाणां चरितं वर्ण्यते । तेषां महापुरुषाणां सच्चरित्रज्ञानेन आत्मनोऽपि सच्चारित्रं वर्तयितुं वर्धयितुं च बालानां बुद्धौ दृढः संस्कारः आधेयः । महात्मा गान्धिमहोदयः आत्मकथायां स्वस्य सत्ये श्रद्धा हरिश्चन्द्रकथयोत्पादिता इति कथयति । प्रतिसप्ताहं सत्यादिधर्मानधिकृत्य तदा तदा उपदेशोऽपि कार्यः कक्ष्यायाम् । पाठशालासु अधुना नैतिकानुदेशार्थं (Moral instruction) पृथगन्तराणि च कल्पितानि वर्तन्ते । अत्रेदमवधेयम् । केवलोपदेशश्रवणेन बालाः स्वयं सच्चारित्रा भवेयुः इति नैव मन्तव्यम् । एतेषां धर्माणां अनुष्ठानमपि यथा स्यात् तथा उपाध्यायैः कर्तव्यम् । अनुष्ठानावसायि ज्ञानमिति अभियुक्ताः कथयन्ति । ततश्च सत्यधर्मादीनामनुष्ठानाय बहवः अवकाशा देयाः । केचन बालाः, 'सत्यादीनां कालानुगुणाचरणमेव वरम्; न तु सर्वदाऽऽचरणमि'ति मन्येरन् । आधुनिकः परिवेशोऽपि तादृशीं बुद्धिं बालानां उत्पादयेत् । परं एते सत्यादयो धर्माः सर्वदा अनुसर्तव्या इति मतिरुत्पादनीया । इमे धर्माः सदातना भवन्ति न तु कादाचित्काः ।

बालानां याः प्रधानाः अपेक्षा वर्तन्ते अशनवसनादिविषये तासां पूरणे सत्येव सच्चारित्रं जायेत । पाठशालाः अपेक्षापूरणं यदि कुर्युः तर्हि सच्चारित्रमुत्पादितं स्यात् । बालेषु यदि आत्मगौरवबुद्धिः (Feeling of self-respect) उत्पाद्यते, तदा आत्मगौरवनाशकं अपचारित्रं कर्तुं बाला उत्साहवन्तो न भवेयुः । निहीनात् कर्मणः स्वयमेव परावृत्ताः वर्तेरन् । सच्चारित्रवर्धने पितॄणामपि

महान् भागो वर्तते। तस्मात् यथा पितरोऽपि सम्यगाचरेयुः तथोपाध्यायैः तेऽपि प्रतिबोधनीयाः।

**सच्चारित्रवानेवं स्यात्—**

1. स्वेनाङ्गीकृतं परकीयं कार्यं सर्वदा कृत्वैव विरमेत्; न त्वन्तरा पलायेत।
2. स्वकं कार्यमपि सम्यक् कर्तुं जानीयात्।
3. दत्तेषु कार्येषु उत्तरदायित्वं प्रतिपद्येत।
4. संभ्रमकालेऽप्यचञ्चलबुद्धिः स्यात्।
5. आत्मनियन्त्रणवान् भवेत्।
6. आर्जवं वहेत्।
7. विश्वासयोग्यो वर्तेत।
8. परोपकारी सहयोगकारी च स्यात्।
9. उत्साही भवेत्।
10. उद्यमशीलश्च वर्तेत।
11. न्याय्यात् मार्गात् न चलेत्। "न्याय्यात् पथः प्रविचलन्ति पदं न धीराः" इति भर्तृहरिः।

# नवमोऽध्यायः

## गणमनोविज्ञानम्

**गणमनः—**

एतदवधि अस्माभिरवगतं मनोविज्ञानं वैयक्तिकं मनः अधिकृत्यैव विचारयति स्म। शिक्षामनोविज्ञानमपि सामान्यतः बालानां मनसः स्थितिं निरूपयति स्म। प्राचीनकाले गुरुकुलेषु गुरुः कतिपयानेव अर्हान् शिष्यान् वैयक्तिकापेक्षानुगुणमध्यापयन् अवर्तत। आधुनिकपरिस्थितिस्तु अन्यथा वर्तते। जनतन्त्रे राज्ये इदानीं सर्वेषामपि विद्यादानं कर्तव्यमिति मतिः। तस्मादद्य कक्ष्यायां चत्वारिंशत्-नो-ततोऽप्यधिकसंख्याका विद्यार्थिनो वर्तन्ते। ततश्च एकत्र संभूय स्थितानां बालानां मनः कीदृशं स्यादिति विचारो जायते। वैयक्तिकव्यवहारं परिशीलयत् मनोविज्ञानमेव गणस्यापि व्यवहारं परिशीलयितुमर्हं भवति।

जगति केचन जीवा यूथचारिणः सन्तः स्ववर्गीयैरेव निवसितुं इच्छन्ति। वानर-गज-गोप्रभृतयः मृगा एतादृशाः। शुककाकबकचटकादयः पक्षिणोऽपि संघचारिणः एव। मानवाः अपि यूथचारिणः। स्वकीयैः वर्तितुमेव इच्छा भवति एतेषाम्। कारागृहे एकाकित्वेनावस्थापनं मानवस्य स्वयूथात् पृथक्करणात्मकं दण्डनं भवति।

पक्षिणां पशूनां च यूथचारिणां यूथचारित्वं केवलमात्मरक्षार्थं भवति। मानवस्य यूथचारित्वं केवलमात्मरक्षणार्थं न भवति। मानवः ईश्वरदत्तया भाषणशक्त्या स्ववर्गीयैः व्यवहरन् परां संस्कृतिमपि प्राप्य शोभते। शोभनं जीवनं च वर्तयति।

यदा मानवः पृथक् वर्तते तदा तस्य स्वभावः अन्यः भवति। गणमध्ये स्थितस्य तस्यैव स्वभावः अन्यो जायते। रथ्यायामाचार्यं दृष्ट्वा प्रणामं कुर्वन्नपि

बालकः कश्चित् स्वमित्रमध्ये स्थितः उपाध्यायं विलोक्यापि न प्रणमति। गणे स्थितानां मानवानां मनःस्थितिः व्यवहारश्च प्रायशः ईषन्नीचस्तरौ एव भवतः इति सर्वविदितमिदम्। उचिते नेतरि स्थिते व्यवहारः उच्चस्तरोऽपि भवेत्। अत एव कक्ष्यायां स्थितानां बालानां व्यवहारोऽपि सामान्यस्तरात् न्यून एव स्यात्। तस्मात् गणमनोविज्ञानमुपाध्यायानामपेक्षितम्। प्रकृत्या ये नेतारो भवन्ति तेषां गणमनोविज्ञानमस्तीति तर्कयितुं शक्यते। गणे स्थितानां विद्यार्थिनां मनः कथं गणेन उपस्कृतं भवति? गणरूपा पाठशाला च कथं श्लाघ्यं लक्ष्यमुद्दिश्य प्रवर्तमानः समुदायः (Community) कल्प्येतेति उपाध्यायैः ज्ञातव्यम्। अस्मच्छास्त्रकारा अपि गणानुवर्तनमुपदिष्टवन्तः "महाजनो येन गतः स पन्थाः" इति।

मक्डूगल्-प्रभृतयः प्राधान्येन गणं त्रेधा विभजन्ते। १. केवलगणः (Crowd), २. संघः (Club), ३. समाजः समुदायो वा (Community) इति।

**केवलगणः—**

सायंकाले विपण्यां बहवो जनाः यान्तः आयान्तश्च वर्तन्ते। एषां संख्या चाधिका स्यात्। अस्य जनसमाजस्य केवलगण इति नाम। एषां जनानां सामान्यमुद्देश्यं किमपि नास्ति। संवेगादयश्च विभिन्ना भवेयुः। एकैकोऽपि स्वं स्वं कार्यमुद्दिश्य प्रवर्तते। यदि कापि विपद् रथ्यायां जायेत तर्हि ते सर्वे अवहिता भवेयुः। क्षणात् परं एते एव भिन्नां भिन्नां दिशं गच्छेयुः। अनेन केवलगणेन संभूय कर्तव्यं किमपि कार्यं नैव स्यात्।

**सङ्घः, समाजश्च—**

इमौ उभौ अपि केवलगणात् भिन्नौ। संघे समाजे च स्थितानां जनानां चिन्तनविभावनकार्यकरणशक्तयश्च समाना भवेयुः। सम्भूय च कार्यं कुर्युः। एतेषां मनांसि सम्भूय चिन्तनादिषु ऐकरूप्यं प्राप्य वर्तेरन्। यत्र गणे मनसः एवं एकरूपत्वं तत्र गणस्य गणत्वं मनोवैज्ञानिकदृष्ट्या अङ्गीकृतं वर्तते। यत्र द्वौ

त्रयो वा नराः मिलिता भवन्ति तत्र अपूर्वा काचन शक्तिः जायते या मानवान् एकमतीन् कुर्यात्। इयं शक्तिः मानवानां मनस्सु पूर्वमेव स्थिता परेषां सान्निध्ये स्वकार्यं अभिव्यनक्तीति मन्यन्ते मनोविज्ञानिनः। सहानुभूतिः, सूचनम्, अनुकरणमिति इमे त्रयो धर्माः सङ्घे स्थितान् जनान् परस्परं संश्लिष्टान् (Welded) कुर्वन्ति। एतान् धर्मानधिकृत्य पूर्वमेव (129-137 पुटेषु) विस्तरेणोक्तम्।

सङ्घे स्थितानां किमपि लक्ष्यं वर्तेत। पाठशालास्वेव यौः अवान्तरसमुदायौ वर्तेते मानसोल्लाससङ्घः (Hobby club), छायाचित्रसङ्घः (Photographic club) इति, इमौ सङ्घस्य ( club ) उदाहरणभूतौ। अत्र सदस्याः परिमिता वर्तेरन्। अयं सङ्घः सुदृढं संघटितः न भवेत्। सङ्घे स्थितानां परस्परं संश्लेषश्च न तथा स्थिरतरः स्यात्। समुदाये तु लक्ष्यं किमपि स्थिरं स्यात्। संवेगादयश्च स्थिरा भवेयुः। अत्र च स्थिता जनाः समानेन लक्ष्येण सुदृढं ऐकमत्यं प्राप्य वर्तेरन्। वैयक्तिकमनसां समुदायः एव समुदायस्य मनः भवेदिति नैव मन्तव्यम्। तत्तु तदतिरिक्तं वर्तेत इति जरन्मनोविज्ञानिनः। आधुनिका एतन्नाङ्गीकुर्वन्ति।

गणमनः (Group mind) विभिन्नं इत्यतः पाठशालासु तदपि अस्माभिः सम्यक् रक्षणीयम् वर्धनीयञ्च। यत्र एवं गणमनः सम्यक् परिपुष्टं वर्तते तत्र पाठशालासु सङ्घभावः ( Esprit de corps ) उत्साहश्च सुष्ठु स्याताम्। तादृश्यः पाठशाला एव सुप्रसिद्धा भवन्ति। तत्राधीतवन्तः बाला एव देशनेतारः जायन्ते। जीवनं च समीचीनं वर्तयन्ति।

पाठशालासु गणमनसः उत्पादनाय एते उपाया वर्तन्ते। यत्र पाठशालायां शोभना उपाध्यायाः स्थायिनो भवन्ति, शिष्याश्च कानिचन वर्षाणि स्थित्वा पठन्ति, तत्रैव आदर्शभूतः कश्चन समुदायः जायेत। तदनुगुणं गणमनश्च भवेत्। पाठशालायाः किमपि लक्ष्यं स्यात्। 'उद्धरेदात्मनात्मानम्', 'विद्या ददाति विनयम्', 'ज्ञानं सम्यगवेक्षणम्', 'परोपकारः पुण्याय' इत्यादीनि आदर्शवाक्यानि श्लाघ्यं लक्ष्यं कल्पयेयुः। इदं लक्ष्यं उपाध्यायाः छात्राश्चावगत्य

तल्लाभाय प्रयतेरन् । जयन्त्याद्युत्सवप्रवर्तनमपि बालानां मनसि एकसमाजाङ्गत्व-बुद्धिं जनयेत् । अन्यपाठशालाविद्यार्थिभिः क्रीडादिषु क्रियमाणाः शोभनाः स्पर्धासंघर्षादयोऽपि पाठशालाविद्यार्थिनां मनस्सु 'वय'मिति गणबुद्धिं जनयितुं प्रभवेयुः । परैः परिभवे प्राप्ते वयं पञ्चोत्तरं शतम्' 'परस्परं विरोधे तु वयं पञ्चैव ते शतम् । इति युधिष्ठिरवाक्यमपि[1] संघर्षे जायमानामेकता-बुद्धिं सूचयति । पाठशालायाः संप्रदायः चिरादनुवर्तमानः विद्यार्थिनां मनस्सु समाजबुद्धिं जनयेत् । कस्यामपि पाठशालायां गणिते विद्यार्थिनः चतुरा भवेयुः । अयं संप्रदायः सर्वदा सर्वैर्विद्यार्थिभिः संरक्ष्येत महता प्रयत्नेन । सर्वैरपि विद्यार्थिभिः समानवस्त्रादिधारणम्, असाधारणं देवप्रार्थनागीतादिकं च एकताबुद्धिं वर्धयेत् । पाठशालाया नेतृभूता उपाध्यायाः प्राध्यापकश्च यदि सुचरिता भवेयुः तर्हि ते विद्यार्थिनां केवलं गणं शोभनमनुशासनेन परिवर्तयितुं शक्ता भवेयुः । विद्यार्थिनां नीचगतिः उच्चगतिर्वा उपाध्यायाधीनैव । विद्यार्थिनः यथा पश्चात् शोभननेतारो भवेयुः तथा प्रशिक्षणं दातव्यमुपाध्यायैः पाठशालायाम् । शिक्षा यथा एकैकस्या अपि व्यक्तेः पुरोगतौ अवधानं करोति एवं कृत्स्नायाः पाठशालायाः शोभन-समुदायत्वेन निर्माणेऽपि अवहिता भवेदिति तत्रैव प्रयतितव्यमुपाध्यायैः । एवं यः समुदायः पाठशालारूपः कल्प्यते सः आदर्शसमुदायो भवेत् ।

**समुदायः, तत्कृतः उपस्कारश्च**

मानवस्य परिवेषः, जीवाः अजीवाः इति द्वेधा वर्तते । परितो वर्तमाना मानवाः मानवस्य व्यवहारमुपस्कुर्वन्ति । एवं शीतोष्णस्थितिप्रभृतयोऽपि तदीय-व्यवहारे कारणानि भवन्ति । जननादारभ्य अन्तिमयात्रापर्यन्तं मानवः सर्वदा बाह्यपरिवेषोपस्कृतो वर्तते । प्रथमं कुटुम्बपरिवेषः, तदनन्तरं क्रीडासहायाः, पाठशालायां सतीर्थ्याः, कार्यालयेषु च सहकार्यकारिणः इति बाह्यपरिवेषः बहुविधः । एवं समुदाये वर्तमानस्य मानवस्य व्यवहारपरिशीलनाय पृथक् शास्त्रमपि इदानीं वर्तते । तस्य च नाम समाजविज्ञानं[2] इति । समुदायस्थितिविषये

---

1. वनपर्व, 244.11.  2. Sociology.

मानवस्य मनः कीदृशं वर्तत इति यच्छास्त्रं विचारयति तस्य समाजमनोविज्ञानमिति[1] (P. 33) नाम। समाजमनोविज्ञानं, व्यक्तीनां मध्ये, व्यक्तेः समाजस्य च मध्ये, समाजानां मध्ये च पारस्परिको व्यवहारः (Inter-action) कथं जायते, अस्य व्यवहारस्य कारणं किम्, अनेन व्यवहारेण जायमानं फलं कीदृशं वर्तते इति; संभूय क्रियमाणं जीवनं कथं भवेत्, जीवनप्रगतेः कारणानि कानि, तत्र विघ्नकारिणः के, तत्परिहारोपायाश्च के इति च विचार्य निरूपयति। यस्य समाजशास्त्रज्ञानं वर्तते स समाजे सम्यक् व्यवहरेत्। शिक्षामनोविज्ञानं च बालस्य ज्ञानं, बुद्धिविकसनं, व्यक्तित्ववर्धनं च संपादयति। अस्यैव शास्त्रस्य अङ्गत्वेन शिक्षासमाजविज्ञानमिति[2] कापि शाखा समाजविज्ञानेनोपकृता इदानीं विज्ञानिभिः आदृता चकास्ति। शिक्षाविषये स्थितानां बहूनां समस्यानां उत्तरदर्शने इयं शाखा समाजविज्ञानसिद्धान्तान् उपयुङ्क्ते। पाठालयोऽपि कश्चन समाज एव। तस्य बाह्यसमाजस्य च पारस्परिकसम्बन्धमवगत्य पाठशालां बालानुपाध्यायांश्च समाजार्हान् कर्तुं प्रयतते इदं शास्त्रम्। हेरिङ्टन् (Herrington)-नामा कश्चन विज्ञानी अस्य शास्त्रस्य प्रयोजनानि एवं वर्णयति—

1. जनसमाजे पाठशालायां च उपाध्यायस्य कीदृशं स्थानं वर्तते समाजहितकरणे इति विचारणं अनेन क्रियते।

2. समाजप्रभावस्य व्यक्तिषु कियदुपस्कारकत्वं वर्तत इति अवगमनं अनेन भवति।

3. बालानां सामाजिकत्वसंपादनाय पाठ्यचर्याकल्पनम् इदं शास्त्रं निश्चिनोति इति।

केवलबुद्धिवर्धनं शिक्षायाः प्रयोजनं न भवतीति, किन्तु बालानां समाजयोग्यत्वसंपादनमेव (Socializing) मुख्यं उद्देश्यमिति, ततः अस्य शास्त्रस्य ज्ञानमपि उपाध्यायस्यापेक्षितमिति च किञ्चिदुच्यते। अत्र शिक्षामनोविज्ञानं, शिक्षासमाजविज्ञानं च परस्परोपकारकत्वं भजतः।

---

1 Social Psychology, 2 Educational Sociology.

**व्यक्तिसमाजयोः सम्बन्धः ।**

व्यक्तेः समाजस्य च कीदृशः सम्बन्धो वर्तते इति ज्ञातव्यम् । व्यक्तीनां समुदायः एव समाज इति व्यपदिश्यते । समाजस्य प्राप्तव्यं लक्ष्यं किमपि स्यात् । समाजव्यक्त्योः सम्बन्धः अपहातुमशक्यः । नरः समाजात् पृथग्भूतः न भवति । एवं समाजोऽपि मानवान् विना सत्तां न लभते । उभावप्यविनाभूतौ । पाठशालावत् बाह्याः समाजा अपि बालानां ज्ञानं जनयन्ति । किं व्यक्तेः प्राधान्यं उत समाजस्य इत्यत्र चर्चा वर्तते । समाजस्य प्राधान्यं वदन्तः व्यक्तेः पृथक्स्थितिं नाङ्गीकुर्वन्ति केचन । एतद्वैपरीत्येन केचित् व्यक्तेः प्राधान्यमूरीकुर्वन्तः समाजमप्रधानं मन्यन्ते । परं उभावपि प्रधानभूतौ इत्येव चिन्तनीयम् । नरस्य वैयक्तिकाभिवृद्धौ समाजस्य (परिवेषस्य) भागो वर्तते । नरः समाजात् वियुज्य वर्तमानः संस्कृतिं न लभेत । व्यक्तित्वं न प्राप्नुयात् । मृगतुल्य एव स्यात् । जननकाले एव शिशोः केचन मानवासाधारणाः गुणा वर्तन्ते । ते जनसमाजे एव पूर्णं विकासं प्राप्नुयुः । प्रगतिश्च समाजसाहाय्येन प्राप्यते । संस्कृतिमज्जनसमाज-वर्तनादेव ग्रामबालापेक्षया नगरबाला नागरिका वर्तन्ते । केवलाशनवसनादिभिः तृप्तिः न भवति मानवस्य । जनसमाजे स्थित्या मानसोल्लासः प्राप्यते । आत्म-रक्षापि जनसमाजेन भविष्यतीति विश्वासः मनःशान्तिं दद्यात् । मैत्रीं प्रीतिं च समाजात् ये बाला न प्राप्नुवन्ति ते एवापचारित्रा भवन्तीति पूर्वमप्युक्तम् । "एते अस्मदीयाः, अहं च तदीयः" इति ज्ञानमेवाभयबुद्धिं दद्यात् बालस्य । जनसमाजः यादृशीं विद्यामपेक्षते तादृशीमेव विद्यां दत्त्वा बालाः समाजार्हाः कार्याः । ततः समाजः एव नरं तद्व्यवहारं च नियच्छति । बालव्यवहारोपस्का-रकाः समाजाः त्रिविधाः निर्दिश्यन्ते—

1. **मूलसमाजः**—

मातापितरौ, भ्रातृस्वसृप्रभृतयः सन्निकृष्टाः बान्धवाः, प्रातिवेशिकाश्च, मूलसमाजतां प्राप्नुवन्ति । अयमेव समाजः बालस्य प्राथमिकापेक्षाः पूरयित्वा 'अहं, वयम्' इति बुद्धिमुद्भावयति ।

2. **मध्यसमाजः—**

पाठशालाः, धर्मबोधनाय प्रवृत्ताः अन्ये सङ्घाश्च मध्यसमाजे अन्तर्भवन्ति। अयं समाजः स्वस्वसंप्रदायेन, उचितपरिवेषकल्पनेन, उपदेशेन, ग्रन्थैश्च बालव्यवहारमुपस्कुर्वन्ति ।

3. **गौणसमाज :—**

विपुलः सर्वोऽपि जनः अत्रान्तर्भवति । बालस्य अनेन समाजेन साक्षात् सम्बन्धः न भवति । संबन्धश्च वार्तापत्रिका-रेडियोप्रसारण-छायाचित्र-ग्रन्थादिभिः जायते । बालस्य वयसः अनुगुणं अनेन समाजेन संपर्को जायते ।

यादृच्छिकसमाज इति कश्चन समाजो वर्तत इति केषांचित् मतम् । अयं समाजः बाष्पशकटप्रयाणे उत्सवादौ च मिलितो भवति । अस्य समाजस्य प्रभावः न तथा बलवान् वर्तते ।

जायमानः शिशुः प्रथमं मूलसमाजेन संपर्कं प्राप्नोति । बालः सन् माध्यमिकगौणसमाजयोरपि संबन्धं लभते । प्रथमं समाजाङ्गत्वं प्राप्नोति । पश्चात् समाज एव एनं अन्यैः समाजाङ्गभूतैः सह सुदृढं संयोजयति । एकप्रदेशवासिनां, समानकर्मकारिणां, एकजातीयानां, समानभाषावतां, समानशासनवतां, समानमतावलम्बिनां, एकसमाजीयत्वबुद्धिर्वर्तते । यत्र द्वौ समाजौ अथवा अधिकसंख्याकाः समाजा भवन्ति तत्र समाजानां मध्ये संघर्षः (Conflict), स्पर्धा (Competition) च स्याताम् । व्यक्तीनामपि परस्परं इमौ भावौ भवेताम् । पाठशालयोर्मध्ये संघर्षः भवेत् । संघर्षे जाते मूलं कारणं अन्विष्य प्रतिविधानं कार्यम्। स्पर्धा क्वचित् शुभायापि स्यात्। यदि स्पर्धा अनभिमतं फलं जनयेत् तर्हि सा स्पर्धा सर्वथा परिहर्तव्या। शुभस्पर्धा तु वर्धनीया ।

**समाजे प्रद्वेषः—**

समाजस्य अथवा व्यक्तेः स्वरूपं सम्यगविदित्वा स्थितस्य मानवस्य कदाचित् तद्विषये प्रद्वेषोऽपि (Prejudice) भवेत् । अकारणप्रद्वेषः जाति-धर्म-विपक्षराजनीति-दारिद्र्यप्रभृतिभिरुत्पाद्यते । पराजितानां, भग्नमनोरथानां, द्राक्षाम-

लब्धवतो जम्बुकस्येव निरर्थकप्रद्वेषो भवेत्। प्रद्वेषवतो मनसि स्वसमाजाङ्गभूतेषु अन्तरङ्गत्वबुद्धिः (In-group), परसमाजीयेषु बहिरङ्गत्वबुद्धिश्च (Out-group) स्यात्। अन्तरङ्गेषु तु 'वयमिति' बहिरङ्गेषु 'ते-यूयम्' इति च मतिर्जायते। अन्तरङ्गीयाणां सर्वोऽप्युपकारः, सहयोगश्च क्रियते। प्रद्वेषपरिहारे एते उपाया भवन्ति। मनसः विशालता संपादनीया। 'अयं निजः परो वेति गणना लघुचेतसाम्। उदारचरितानां तु वसुधैव कुटुम्बकम्' इति अस्मदीयाः। लोके जना विभिन्नाशया भवेयुरेव। 'भिन्नरुचिर्हि लोकः' इति कालिदासः। सर्वेषां स्वस्वाशयधारणे वर्तत एव स्वातन्त्र्यम्। तस्माद्विभिन्नाशयवत्सु नैव दोषबुद्धिः कार्या। सर्वमिदं उपाध्यायैः स्वयमाचरणेन असकृदुपदेशेन च कर्तुं शक्यम्।

**समाजविषये व्यक्तिकृतः उपस्कारः**

यत्र बहवः संमिलन्ति, कार्यं च कुर्वन्ति तत्र कश्चिन्नेता भवति। अन्ये तमनुसरन्ति। नेतृत्वं समाजात् जायते। अनुगन्तॄणामभावे नेता नैव स्यात्। एवं जातो नेता समाजमुपस्करोति। नेतृशासनमनुस्रियेत समाजेन। नेतुः केचन गुणा अपेक्ष्यन्ते। व्यक्तित्वांशानां संकलितत्वं, प्रभुशक्तिः, विनयः, उचिते समये परच्छन्दानुवर्तित्वम्, बुद्धिमत्त्वम्, कालोचितनिश्चयकरणशक्तिः, धीरत्वम्, आर्जवम्, विश्वसनीयत्वम्, समाजहितकारित्वमित्यादयः गुणा येषु समीचीनतया वर्तन्ते ते एव शोभननेतारः भवेयुः। नेतारश्च बहुविधा वर्तन्ते। केचन आजाननेतारः। केचन समाजहितकरणात् नेतारः भवन्ति। केषुचित् विषयेषु विशिष्टज्ञानवन्तः (भिषजः, अधिकरणिकाः, यान्त्रिकाश्च) तत्तत्काले नेतारो जायन्ते। मठाधिपतयः सम्प्रदायागतनेतारो वर्तन्ते। केचन बलात् आत्मनो नेतृत्वं स्वीकुर्वन्ति। एते अचिरादेव नेतृस्थानात् पात्यन्ते। आमूलपरिवर्तननेतारोऽपि वर्तन्ते। 'सकृन्नेता सर्वदा नेता' इति न मन्तव्यम्। कालानुगुणं नेतारः परिवर्तिता भवन्ति। सङ्कटकाले कश्चिन्नेता भवेत्। निवृत्ते सङ्कटे अन्यः कश्चिन्नेता स्यात्। अपथं नेता सद्यः अनेता जायते। नेतुर्दुर्गुणे ज्ञाते नेता परित्यज्यते। अतिपरिचयात् जातया अवज्ञया नेता तिरस्क्रियते। पूर्वनेत्रपेक्षया विशिष्टगुणः

कश्चित् यदि दृश्यते तर्हि सः नेता क्रियेत। बालानां मध्येऽपि क्रीडाङ्गणे कश्चिन्नेता भवति। कक्ष्यायामन्यः कश्चिन्नेता स्यात्। वादविवादादिषु चान्यः, कलास्वपरः। बालानां वयसः अनुगुणमपि नेतारो भिन्ना भवन्ति। शिशुक्रीडाकाले नेतुरपेक्षा न भवति। पश्चादेव नेतुरपेक्षा जायते।

## उपाध्यायानां नेतृत्वम्—

पाठशालायां कक्ष्याचार्याणां प्राध्यापकस्य च स्थानकृतं नेतृत्वं वर्तते। उपाध्यायानां विद्यार्थिसमुदायरूपं समाजमुपस्कर्तुं अतिमात्रमवकाशा वर्तन्ते। विशिष्टं ज्ञानं, वयः, संप्रदायागतं पूज्यत्वम् इत्येतत् उपाध्यायान् नेतॄन् करोति। स्थानानुभवादिभिः जातं इदं नेतृत्वं सम्यगुपयुज्य विद्यार्थिनां श्रेयसि रता भवेयुः उपाध्यायाः। बालानां स्थिरे क्षेमे दत्तबुद्धयो भवेयुः न तु तात्कालिकसन्तोषजननेन अथवा लघूपायेन लघुकीर्तिप्राप्तौ (Cheap popularity)। बालानां प्रीतिसंपादनाय आत्मनः प्रभुत्वं विमुच्य केचनोपाध्यायाः बालानां मध्ये स्वयमपि बाला इव व्यवहरन्ति। केचित् स्वाधिकारमत्ताः कठिना अपि वर्तन्ते। इदमुभयं परिहरणीयम्। समयपरिपालनादिगुणेषु स्वयं श्रद्धावन्तो भूत्वा स्वयमनुतिष्ठन्तः बालानामादर्शा यदि भवेयुरुपाध्यायाः तर्हि एव तेषां नेतृत्वमपि बालकैरङ्गीकृतं भवेत्। विद्यार्थिनः उपाध्यायानां स्मयमनुग्रहम्, भ्रूभङ्गमपि दण्डनम् च यथा मन्येरन् तथा सगौरवं व्यवहर्तव्यमुपाध्यायैः।

## नेतृत्वे बालानां प्रशिक्षणम्

उपाध्याया एव सर्वदा नेतारो न भवेयुः। कक्ष्यायां केचन बालाः नेतारः कल्पनीयाः। स्ववशे स्थितानां बालानां नेतृत्वप्राप्त्यर्थं प्रशिक्षणं देयम्। उपाध्यायछात्रसंबन्धानुगुण्येन बालानां नेतृत्वं कल्पयितुं शक्यम्। सौलभ्यम्, प्रीतिः, लोकज्ञानम्, संस्कृतिमत् मनः, आर्जवम्, निष्पक्षपातित्वम्, विद्यार्थिक्षेमे श्रद्धावत्त्वम्, इत्येते गुणा उपाध्यायेषु दृष्टाः बालोपाध्यायसम्बन्धं समीचीनं संपादयेयुः। बालेष्वपि केषां नेतृत्वे शक्तिः वर्तते? इति ज्ञातव्यम्।

के च अन्येषां बालानां अभिमताः वर्तन्त इति समाजमितिद्वारा[1] अवगन्तुं शक्यम्। उत्तरदायित्वाङ्गीकरणम्, कर्मसु श्रद्धा, आज्ञानुवर्तित्वं, कार्यकरणदक्षता इत्येते गुणा मुख्यतया अपेक्ष्यन्ते नेतरि। ततश्च तेषां गुणानां सत्ता तावत् प्रथमं विलोकनीया। दैनंदिनिकेषु विद्यालयकार्येषु बालाः प्रथमं नियोज्याः। विद्यार्थिसान्निध्याङ्कने, ग्रन्थागारपुस्तकाद्यारचने, पाठशालावार्षिकोत्सवनिर्वर्तने, प्रदर्शने (Exhibition), विद्यार्थिस्वायत्तशासने[2], स्कौट्कार्येषु, स्वातन्त्र्यदिनमहोत्सवकरणे गान्धिप्रभृतीनां जयन्तीसंविधाने, उल्लासयात्रासु, कलाप्रदर्शने, अन्नदानादिसमाजकार्येषु बालानामवकाशो देयः। विशिष्टबालानां विशिष्टकार्येषु नियोजनं वरम्। कर्तव्यं निर्दिश्य पश्चादाचार्यः कार्यनिर्वाहे पूर्णं स्वातन्त्र्यमपि दद्यात्। केवलपर्यवेक्षणं कुर्यात्। न तु मध्ये उपदेशैः विद्यार्थिनामुत्साहं नाशयेत्। एवं नियुक्ता ये कार्यं सम्यङ् निर्वर्तयन्ति ते कालक्रमेण नेतारो भवन्ति। बाल्ये सम्यङ्नेतृत्वे प्रशिक्षिताः पश्चादपि शोभननेतारो भविष्यन्तीति विश्वसितुं युक्तम्।

## समाजमितिः

पाठालयः बालसमुदायात्मक इति ज्ञातम्। पाठालये स्थितयोः कक्ष्ययोः परस्परप्रीतिर्वा द्वेषो वा स्यात्। एवं कक्ष्यायां स्थितानामपि केषांचन बालानां परस्परारागद्वेषादयो भवेयुः। केचन बालाः सर्वप्रिया वर्तेरन्। केचन सर्वविद्विष्टाः। केचन कैश्चिदुपेक्षिताः सन्तः सामाजिकतामप्राप्य पृथक् (Isolated) भवेयुः। समाजानां बालानां च पारस्परिकः सम्बन्धः कथं वर्तते इति ज्ञातव्यमुपाध्यायैः। समाजसंबन्धं व्यक्तिसंबन्धं च मापयितुं ये उपाया वर्तन्ते तेषां सामान्यं नाम समाजमितिः (Sociometry) इति। इदं च मापनं 1934-तमे वर्षे मोरीनो (Moreno. J.L.) - नामकेन प्रथममुपक्रान्तमासीत्। एते मापनोपायाः कस्मिन्नपि सन्दर्भे अथवा कस्यामपि अवस्थायां कस्यापि समाजस्य अङ्गभूतानां मध्ये परस्परं मनोभावः कथं वर्तते इति ज्ञातुमुपयुज्यन्ते। यद्यपि उपाध्याया असकृत्

---

1. Sociometric method 2 Pupil-self-Governnet

बालानां दर्शनेन कस्य कस्मिन् प्रीतिः वर्तते ? केन सह क्रीडति ? कं मित्रत्वेन गृह्णाति ? इति ज्ञातुं शक्नुवन्ति । अथापि सुनिश्चिततया ज्ञानाय काचन प्रश्नावली दीयते । प्रश्नाश्च एवं भवन्ति—'तव कस्मिन् बाले प्रीतिः वर्तते ?' 'कं नाभिनन्दसि ?' 'कस्ते द्वेष्यो वर्तते ?' 'कस्मिन् ते औदासीन्यं भवति? इत्येवम् । प्रश्नानामुत्तरदर्शनेन को बालः बहूनां प्रीतिपात्रं वर्तते, कश्च उपेक्षितः, कश्च द्विष्टः इति ज्ञातुं शक्यम् । विद्विष्टेषु उपेक्षितेषु च यथा अन्ये बालाः द्वेषं उपेक्षां च परित्यज्य मैत्रीं कुर्युः तथा बालाः उपाध्यायैः उपदेशादिभिः नेतव्या भवन्ति ।

मनस्सन्तोषाय मैत्री अपेक्ष्यते । यदि कस्यापि बालस्य मित्रं किमपि न भवति कक्ष्यायां, तर्हि स सर्वदा विषण्णः सन् नीचभावनां प्राप्य सामाजिकत्वं व्यक्तित्व-विकासं च नैव प्राप्नुयात् । अधीयमाने विषयेऽपि प्रगतिः न स्यात् । तस्मात् सर्वेऽपि बालाः एककुटुम्बीया इव परस्परं मैत्र्या यथा वर्तेरन् तथा उपाध्यायैः उपायः कार्यः ।

कस्यामपि कक्ष्यायां विद्यमानानां विद्यार्थिनां परस्परसम्बन्धः कथं वर्तते इति मापयित्वा समाजलेखेन (Sociogram) प्रदर्शयितुं शक्यम् ।




अत्र उ-विद्यार्थी बहूनां प्रीतिपात्रं वर्तते । '←→' इदं, परस्पर-मैत्रीं, —→ इदं, एक-मुखं प्रियं च सूचयति ।

33. समाजलेखः

अपर उपायः एवं वर्तते। अस्य उपायस्योपयोगे बालस्वभाववर्णन-पराणि पदानि दीयन्ते। तत्तत्पदं च कक्ष्यायां स्थितेषु बालेषु कस्मिन् कस्मिन् अन्वेतीति निर्देष्टुं आदिश्यते बालः। पदानि—अलसः, सदाध्यायी, वञ्चकः, दुर्विनीतः, अनृतवादी, परपीडाकारी, चोरः इति। निर्वाचनमपि अत्र उपकरोत्येव।

**अभिवृत्तिः तन्मापनं च—**

एकैकस्यापि मानवस्य केषुचिद्विषयेषु कश्चित् स्थिरः मनोभावः स्यात्। अयं भावः संवेगेनोपस्कृतो वर्तते। इयमभिवृत्तिः मातुः पितुः आचार्याणां उपदेशात्, स्वानुभवाच्च क्रमशः उत्पद्य स्थैर्यं प्राप्नोति। बालानां मनस्सु अविचाल्यश्च तिष्ठति। अभिवृत्तिः यदि दुष्टा स्यात् तर्हि सा अवश्यं परि-वर्तनीयेति बालानामभिवृत्तिमधिकृत्य उपाध्यायैः ज्ञातव्यम्। अत्रापि प्रश्नावली उपकुर्यात्। उत्तरानुगुणं कस्यापि अभिवृत्तिः कथं वर्तत इति ज्ञातुं शक्यते।

उदाहरणभूताः केचन प्रश्नाः परीक्षाविषये दीयन्ते—

1. इदानीं पाठशालासु प्रचाल्यमाना परीक्षापद्धतिः तवाभिमता भवति किम्?

2. परीक्षां विनैव उत्तरकक्ष्याप्रापणं युक्तं किम्?

3. परीक्षाशालायां पाठ्यपुस्तकं दृष्ट्वा उत्तरलेखनायानुमतिर्देया इति केषांचिन्मतं अधुना वर्तते। इदं तवाङ्गीकारं लभते किम्?

4. लेखनपरीक्षास्थाने मौखिकी परीक्षा भवतु इति केचन मन्यन्ते। किमिदं त्वयाङ्गीक्रियते?

अध्येयविषयेऽपि अभिवृत्तिपरीक्षा कर्तुं शक्यते (दृश्यताम् पुटः 196-तमः); अभिवृत्त्यनुगुणविषयाध्यापने बालाः सोत्साहं पठेयुः। उपाध्यायानां परिश्रमश्च नाधिकोऽपेक्ष्येत।

# दशमोऽध्यायः

## प्राचीनभारते मनोविज्ञानम्

'मन अवबोधने' इत्ययं धातुः 'मनस्'-शब्दात् विकृष्य सम्पादितः। मनः इति इदं पदं इदानीं यं पदार्थं स्वाभिधेयत्वेन गृह्णाति तमेव पदार्थं ऋग्वेदेऽपि व्यनक्ति स्म। ऋग्वेदे अन्यवेदेषु च मनःपदं अवबोधसाधने चित्ते प्रयुक्तं वर्तते। स्वं मनः यजमानेषु प्रीतियुक्तं[1] स्थिरं[2] च कुर्वन्तु इति असकृत् देवताः प्रार्थ्यन्ते। मनः अथवा मनोभिमानिनीं देवतामुद्दिश्य द्वादशर्चं (10.58) सूक्तमेकं ऋग्वेदे वर्तते, यत्र सुबन्धुनामकस्य मृतस्य मानवस्य मनः पुनरपि तं प्रत्येतु[3] इति तद्भ्रातरः प्रार्थयन्ते।

क्वचित् सूर्यः मन इव त्वरितं गच्छति[4] इति, मनः कम्पते भीत्या[5] इति च मनसो व्यापारौ निर्दिष्टौ वर्तेते। एभिः प्रमाणैरिदं सुदृढमवसातुं शक्यं यत् मनोविषया प्रतिपत्तिः (Concept of mind) बहोः कालात् पूर्वं एव भारतीयानां मनस्सु उत्पन्ना इति, तदभिलापकशब्दाः मनः-स्वान्त-चित्तप्रभृतयः कल्पिता इति, मनोव्यापाराश्च बहवः अवगता इति च। यथा व्यवहारवादिनः आधुनिकाः अदृश्यस्य मनसः सत्तां न प्रतिपद्यन्ते तथा पूर्वकालेऽपि मनस्सत्तां अधिकृत्य विप्रतिपद्यमानाः केचनासन्निति तर्कयितुं वर्तते निमित्तम्। **बृहदारण्यके** मनोऽस्तित्वनिरूपणाय, तद्व्यापारनिर्देशाय च प्रवृत्तानि कानिचन वाक्यान्युपलभ्यन्ते।

---

1. भद्रं नो अपिवातय मनः (10-20-1)
2. स्थिरं मनः चकृषे जात इन्द्र (5-30-4)
3. यत्ते चतस्रः प्रदिशो मनो जगाम दूरकम्। तत्त आवर्तयामसीह क्षयाय जीवसे॥ (10-58-4) (आवर्तयामसि-आवर्तयामः ; क्षयाय-स्थिरनिवासाय).
4. मन इव सूर्यः त्वरितं गच्छति (1-71-9)
5. वेपते मनो भिया (5-30-4)

"अन्यत्रमना अभूवम् नादर्शम्। अन्यत्रमना अभूवम् नाश्रौषमिति। मनसा ह्येव पश्यति ; मनसा शृणोति[1]"। अत्र श्रीशाङ्करं भाष्यम्—

'मनसः अस्तित्वं स्वरूपं च प्रति संशय इत्यत आह—अस्ति तावन्मनः श्रोत्रादिबाह्यकरणव्यतिरिक्तम्, यतः एवं प्रसिद्धम्। बाह्यकरणविषयात्मसम्बन्धे सत्यपि अभिमुखीभूतं विषयं न गृह्णाति। किं दृष्टवानसि इदं रूपमित्युक्तो वदति, अन्यत्र मे गतं मनः आसीत्। सोऽहमन्यत्रमनाः आसम्, नादर्शम्। तथा, इदं श्रुतवानसि मदीयं वचः इत्युक्तः, अन्यत्रमना अभूवम्, नाश्रौषम्, न श्रुतवानस्मीति। तस्मात् यस्यासन्निधौ रूपादिग्रहणसमर्थस्यापि सतश्चक्षुरादेः स्वस्वविषयसम्बन्धे रूपशब्दादिज्ञानं न भवति, यस्य च भावे भवति, तदन्यदस्ति मनो नामान्तः-करणं सर्वकरणविषययोगि इत्यवगम्यते। तस्मात् सर्वो हि लोकः मनसा ह्येव पश्यति। मनसा शृणोति। तद्व्यग्रत्वे दर्शनाद्यभावात्' इति।

एवमस्तित्वं प्रसाध्य बृहदारण्यकम्, तत्स्वरूपं निरूपयति—"कामः, संकल्पः, विचिकित्सा, श्रद्धा, अश्रद्धा, धृतिरधृतिः ह्रीर्धीर्भीरित्येतत्सर्वं मन एव। तस्मादपि पृष्ठतः उपस्पृष्टः मनसा विजानाति"[2] इति। अत्रापि श्रीशाङ्करं भाष्यम्–'अस्तित्वे सिद्धे मनसः स्वरूपार्थमिदमुच्यते। कामः—स्त्रीव्यतिकराभिलाषादिः। संकल्पः—प्रत्युपस्थितविषयविकल्पनम् शुक्लनीलादिभेदेन। विचिकित्सा—संशय-ज्ञानम्। श्रद्धा—अदृष्टार्थेषु कर्मसु आस्तिक्यबुद्धिः देवतादिषु च। अश्रद्धा—तद्विपरीता बुद्धिः। धृतिः—धारणम्, देहाद्यवसादे उत्तंभनम्। अधृतिः—तद्विपर्ययः। ह्रीः—लज्जा, धीः—प्रज्ञा ; भीर्भयमित्येतमादिकं सर्वं मनः एव—मनसः अन्तःकरणस्य रूपाण्येतानि[3]। मनोऽस्तित्वं प्रति अन्यदपि कारणमुच्यते। तस्मान्मनो नामास्त्यन्तःकरणम्। यस्माच्चक्षुषो ह्यगोचरे पृष्ठतोऽप्युपस्पृष्टः केनचित्

---

1. बृहदारण्यकम् 1-5-3.
2. तत्रैवोपनिषदि।
3. अत्र, कैश्चिदाधुनिकैः मनोविज्ञानिभिरुच्यमानं मनसः व्यापारात्मकत्वं, तदन-तिरिक्तत्वं च सूच्यत इव।

हस्तस्यायं स्पर्शः, जानोरयमिति विवेकेन प्रतिपद्यते। यदि विवेककृन्मनो नाम नास्ति तर्हि त्वङ्मात्रेण कुतो विवेकप्रतिपत्तिः स्यात्। यत्तत् विवेकप्रतिपत्तिकारणं तन्मनः' इति।

इतोऽपि स्पष्टं मनस्सत्तां निरूपयितुं न किमपि प्रमाणमपेक्षितमिति ज्ञायते। अनुनेयार्थमीषत् हास्यरससंमिश्रं कथयति भाष्यकारः पतञ्जलिः—"तद्यथा वैयाकरणानां शाकटायनः रथमार्गे आसीनः शकटसार्थं यान्तं नोपलेभे। किं पुनः कारणम्? कश्चित् जाग्रदपि वर्तमानं कालं नोपलभते। मनसा प्रयुक्तानी-न्द्रियाणि उपलब्धौ कारणानि भवन्ति। मनसोऽसान्निध्यात्[1]"।

तत्रैव मनःपरिमाणमधिकृत्य नागेशः एवं कथयति—"यद्यपि पातञ्जला-ना[2]मन्तःकरणं व्यापकम्। तथापि तत्परिणामविशेषो मनः चिरस्थायि मध्यम-परिमाणं संकोचविकासशालि[2]" इति।

मन्यते अनेन इति करणत्वेन व्युत्पाद्यमानमिदं पदं अवबोधसाधनं प्रतिपादयति; भावे व्युत्पाद्यमानं केवलव्यापारमपि कथयितुमलं भवति। 'चन्द्रमा मनसो जातः'[3], 'मनो ब्रह्मेति व्यजानात्'[4] इत्यादिभिः मनः वस्त्वात्मकं किमपि इति प्रत्येतुं शक्यम्।

**चार्वाकास्तु** देहात्मवादिनः, ताम्बूलात् राग इव, किण्वादिभ्यो मदशक्तिरिव भूतचतुष्टयसमवायात् जायते चैतन्यमिति कथयन्ति। एतन्मते चैतन्यमेव मनः इति अभ्युपगन्तव्यम्।

**सांख्यास्तु** शरीरं मनश्च प्रकृतिपरिणामात्मके त्रिगुणात्मके च इत्यभि-प्रयन्ति; यतः मनः करणम् चलं च तस्मात् तन्न विभु[5]; किन्तु सावयवम्,

---

1. महाभाष्यम् 3-2-115.

2. योगसूत्रकर्तुः, वैयाकरणस्य पतञ्जलेश्चाभेदमाकलय्य नागेशः एवं कथयतीति प्रतिपत्तव्यम्। 3. पुरुषसूक्तम्। 4. तैत्तिरीयोपनिषत्।

5. न व्यापकत्वं मनसः करणत्वात् इन्द्रियत्वाद्वा। सक्रियत्वात् गतिश्रुतेश्च। सांख्यप्रवचनसूत्रम् 5-69,70.

इन्द्रियैः संबद्धं च। अत्र शास्त्रे बुद्धि-अहंकार-मनसां परस्परं विभिन्नत्वं सर्वदा नावगम्यते। अन्तःकरणत्वेनैतेषां समुच्चित्य ग्रहणम्। बीज-अङ्कुर-वृक्षवत् अवस्था-भेदेन त्रिविधमप्यन्तःकरणं एकमेव।

**आर्हतास्तु,** "भौतिका एव परमाणवः ; अणवो वा मनांसि इत्याहुः। वायुरेव मनः" इति केचित्। मनः इन्द्रियम् प्रत्यात्मं भिन्नम्।

**बौद्धाश्च** प्रवाहवदनुस्यूतं प्रवहतां भावानां समुदायो मनः इति कथयन्ति। कामतृष्णा, भावतृष्णा (जीवनेच्छा) विभवतृष्णा (प्रभुत्वेच्छा) च मनोव्यापारप्रेरिकाः इति च। "न खलु मनो नाम चक्षुरादिवत् किञ्चिदिन्द्रियव्यापारं रोचयामहे। किन्तु पूर्वमेव विज्ञानं चरमज्ञानस्योपादान-माचक्ष्महे। तदेव हि समं विज्ञानत्वेन अनन्तरं चाव्यवहितत्वेन समनन्तरप्रत्यय इत्युच्यते[1]"

अन्यत्र चैवमुक्तम्—"सविषयाणीन्द्रियाणि रूपस्कन्धः। अहमहमित्यालय-विज्ञानप्रवाहः विज्ञानस्कन्धः। सुखाद्यनुभवो वेदनास्कन्धः। गौरश्च इत्येवं नाम-विशिष्टसविकल्पकप्रत्ययः संज्ञास्कन्धः। रागद्वेषमोहधर्माधर्माः संस्कारस्कन्धः[2]"। एतेषामेव समुदितानामात्मेति नाम[3]। 'तत्र विज्ञानस्कन्धः चित्तमात्मेति गीयते। अन्ये चत्वारः स्कन्धाः चैत्ताः, तेषां संघातः आध्यात्मिकः, सकल-लोकयात्रानिर्वाहक इत्यर्थः'[4] इति। तथा च ज्ञानप्रवाहरूपमेव मनः इति बौद्धमतम्। अस्य च क्षणिकत्वं एवं निरूप्यते। यथा एकत्वेन प्रत्यभिज्ञाय-मानापि दीपज्वाला क्षणिकानां दीपज्वालानां परम्परारूपा भवति तथा चित्तमपि

---

1. उदाहृतं मीमांसाकोशे।
2. श्रीशाङ्करभाष्यव्याख्या — रत्नप्रभा 2.2.18.
3. सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम्।
   सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम्॥ माघे 2.28.
4. रत्नप्रभा 2.2.18.

ज्ञानपरम्परारूपं [1]भवति। 'निरुपप्लवा चित्सन्ततिः मुक्तिरि[2]'ति तन्मतम् इति। विचार्यमाणे बौद्धमते आत्ममनसोर्भेदो न भायात्।

**वैशेषिका नैयायिकाश्च** क्रियाश्रयत्वं गुणाश्रयत्वं च द्रव्यलक्षणं स्वीकृत्य मनसः द्रव्यत्वं, 'युगपज्ज्ञानानुत्पत्तिः मनसो लिङ्गम्' (1-1-16), इति मनसः अणुत्वं च वाञ्छन्ति। आत्मेन्द्रियमध्यवर्तित्वं मनसः प्रत्यक्षे। आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षमिति तेषां पल्लवीगानम्। तस्य चाष्टौ परापरत्वादयो गुणा वर्तन्ते। मनो नित्यम्; न प्रत्यक्षविषयः, इन्द्रियमध्ये परिगणितम्। 'सर्वविषयकज्ञानजनकमपि बाह्यविषयज्ञानजनने परतन्त्रम्। अबाह्यविषयज्ञानेषु स्वतन्त्रम्। जन्यज्ञानसामान्यं प्रति त्वङ्मनःसंयोगः कारणम्। अत एव पुरीतति प्रवेशे मनसः, सुषुप्तिः जायते। हृदयं मनसः स्थानम्', इति च कथयन्ति।

**चरकसुश्रुतादयो** भिषजस्तु एवं अभिप्रयन्ति। "चतुर्थे मासि भ्रूणस्य सर्वाङ्गप्रत्यङ्गविभागः प्रव्यक्तो भवति। गर्भहृदयप्रव्यक्तिभावाच्चेतनाधातुरभिव्यक्तो भवति। कस्मात्? तत्स्थानत्वात्। तस्मात् गर्भः चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोति। पञ्चमे मासि मनः प्रतिबुद्धतरं भवति। षष्ठे बुद्धिः[3]" इति।

"अतीन्द्रियं पुनर्मनः सत्त्वसंज्ञकम्; चेत इत्याहुरेके। तदर्थ-आत्म-सम्पदायत्तचेष्टम्[4]" इति **चरकः**। अत्र **चक्रपाणिदत्त**व्याख्या–'मनोर्थः सुखादिः चिन्त्यादिः विचार्यादिश्च। यदा मनसः सुखादयः चिन्त्यादयोऽपि विषया भवन्ति, आत्मा च प्रयत्नवान् भवति, तदा मनः स्वविषये प्रवर्तते। इन्द्रियाणि चाधितिष्ठति। इन्द्रियाणि च मनोधिष्ठितान्येव स्वविषयज्ञाने प्रवर्तन्ते। अस्मिन् सिद्धान्ते मनः एकम्; परमनेकमिव भाति। न चानेकत्वम्। न ह्येकमेककाल-

1. Dr. S. Radhakrishnan, Indian Philosophy, Vol.I. P.373.
2. रत्नप्रभायां तत्रैव.
3. सुश्रुतसंहितायां शारीरस्थानम्, 3-30.
4. चरके सूत्रस्थानम्, 8.

मनेकेषु प्रवर्तते। तस्मान्नैकदा सर्वेन्द्रियप्रवृत्तिः। महत्त्वमपि मनसो नास्ति। महत्त्वे सति युगपत् पञ्चेन्द्रियाधिष्ठानात् ज्ञानोत्पत्तिः स्यात्। न च भवति। तस्मादेकं अणु च मनः' इति। "अणुत्वमथ चैकत्वं द्वौ गुणौ मनसः स्मृतौ" इति चरके शारीरस्थाने। परं प्रतिशरीरं भिन्नं मनः।

मनश्चान्तरिन्द्रियं परमाणुपरिमाणमिति मीमांसकैकदेशिनः **प्राभाकराः**। "मनश्चान्तःशरीरं परमाणुपरिमाणम्। तत् खलु द्रव्यभूतं संयोगगुणभागिष्यते। द्रव्यं च द्विविधम्—अनेकद्रव्यमद्रव्यद्रव्यं चेति। तत्र मनसः अनेकद्रव्यत्वे कल्पनागौरवम्; आरभ्यारम्भकद्रव्याभ्युपगमप्रसक्तेः। अद्रव्यद्रव्यत्वेऽपि परममहत्त्वाभ्युपगमे आत्मना सह संयोगासम्भवः। न हि परममहतोरपरिस्पन्दयोरनवयवयोश्च संयोगोपपत्तिः। त्रिविध एव संयोगः, अन्यतरकर्मजः, उभयकर्मजः, संयोगजश्चेति। तस्मात् परमाणुपरिमाणं मनः। तच्च सत् कारणत्वान्वितम्। आशुतरसञ्चारि च तत्; आशुतरेन्द्रियाधिष्ठानदर्शनात्। न हि तदनधिष्ठितमिन्द्रियं स्वविषयमवसाययितुमलम्; अन्यत्र व्यासक्तचित्तस्य विषयान्तराप्रतीतेः[1]" इति।

'अन्तरिन्द्रियं विभुपरिमाणमस्पन्दं च मन इति **भाट्टाः**' इति **मानमेयोदयकारः**। सुखाद्यापरोक्ष्यसाधनेन्द्रियत्वेन कल्प्यमन्तरिन्द्रियं विभुपरिमाणम्। अस्पन्दं च मनः इति तद्वाक्यम् (214)। मनसः कार्यमधिकृत्य **शास्त्रदीपिकाकारः** एवं निरूपयति—"मनस्तु पृथिव्यादीनामेवान्यतमात्मकम्। तेभ्योऽन्यद्वा। सर्वथा तावदस्ति मनः। तच्चात्मगुणेष्वेव स्वतन्त्रं प्रवर्तते, न बाह्येषु रूपादिष्वित्यान्तरमुच्यते। रूपादिज्ञानेष्वपि तत् चक्षुरादिसहायं प्रवर्तते; एवमनुमानादिष्वपि लिङ्गादिसहायम्; अन्यमनस्कस्य संप्रयुक्तेष्वपि रूपादिषु ज्ञानानुत्पत्तेः। स्मृतावपि संस्कारपरतन्त्रं प्रवर्तते, न स्वतन्त्रम्[2]"।

---

1. प्रकरणपञ्चिकायाम् P. 332.
2. शास्त्रदीपिका - P. 36.

**विशिष्टाद्वैतिनस्तु** मनः अणुपरिमाणमिति कथयन्ति। अशुद्धसत्त्वे सति पञ्चविषयसाधारणेन्द्रियत्वं स्मृतिकरणेन्द्रियत्वं इत्यादि लक्षणम्। तच्च हृत्प्रदेशमात्राधिष्ठानम् । इन्द्रियाणामपि हृत्प्रदेश एव कन्दस्थानम् । स्थानान्तरेष्वपि यथासम्भवं वृत्तिः। मनः एकमेवान्तःकरणम्। सङ्कल्पाध्यवसायादयः तद्व्यापारभेदादेव जायन्ते[1] ।

**अद्वैतिनस्तु** अन्तःकरणमेव संशयात्मकं सत् मनो भवतीति कथयन्ति। तच्च सादि सावयवं परिणामशीलं च ।

"मनो बुद्धिरहङ्कारः चित्तं करणमान्तरम् ।
संशयो निश्चयो गर्वः स्मरणं विषया अमी ॥"

इति। निश्चयात्मकमन्तःकरणं बुद्धिः, गर्वात्मकमन्तःकरणमहङ्कारः, स्मरणात्मकं चित्तमिति व्यपदिश्यते । एतन्मते मनसः इन्द्रियत्वं नाभ्युपगम्यते । मनसः आहंकारिकत्वे अभ्युपगतेऽपि क्वचित् पाञ्चभौतिकत्वमुक्तम्। 'एतैरेव सत्त्वगुणोपेतैः पञ्चभूतैः मिलितैर्मनोबुद्ध्यहंकारचित्तानि जायन्ते[2]' इति । मनसः अणुपरिमाणत्वं भामत्याम् (2,3-29) उक्तम्। भगवत्पादाश्च मनः एवं लक्षयन्ति—'यद्विभजते, निश्चिनोति, सङ्कल्पयति च भावान्, जानाति, जानामीति च जानाति तन्मनः' इति। मनसः इन्द्रियत्वं चाभ्युपगतम् भगवत्पादैः—'स्मृतौ त्वेकादशेन्द्रियाणीति मनोऽपीन्द्रियत्वेन श्रोत्रादिवत् संगृह्यत' इति भाष्यम् (2-4-17)।

**द्वैतिनां** मते तु मनो न विभु। किन्त्वण्वेव प्रतिजीवं भिन्नं वर्तते; जीवानामानन्त्यात्। स्वरूपतः अणुत्वेऽपि प्रकाशतः सर्वव्याप्तत्वमिन्द्रियेषु स्वीकृतम्[3] । 'मनष्षष्ठानीन्द्रियाणि' इति भगवद्वचनानुरोधेन मनोपि इन्द्रियमेव। मनोनधिष्ठितं इन्द्रियं दुष्टं भवति। "मनसस्तु बाह्येन्द्रियाधिष्ठानेनैते सर्वे विषयाः

1. न्यायसिद्धाञ्जनम् P. 194.
2. वेदान्तपरिभाषायाम्, विषयपरिच्छेदे P. 303.
3. मध्वभाष्ये 2,4,8.

(गन्धादयः भवन्ति)। स्वातन्त्र्येण स्मरणसाधनं मन[1]:। 'तस्यैव दोषा रागादयः'। "तत्त्वरूपं तद्भिन्नं चेति मनः द्वेधा विभज्यते। वैकारिकाहङ्कारोपादानकं मनस्तत्त्वम्। तत्त्वभिन्नं मनः इन्द्रियं भवति। तत् नित्यमनित्यं चेति द्विविधम्। नित्येन्द्रियम् ईशलक्ष्मीब्रह्मादिसर्वजीवानां स्वरूपभूतम्। अनित्येन्द्रियं च ब्रह्मादिसर्वजीवानां बाह्यम्। इदं च पञ्चविधम्, 'मनो बुद्धिरहङ्कारः चित्तं चेतने'ति। सङ्कल्पविकल्परूपं मनः; निश्चयरूपा बुद्धिः; अस्वरूपे स्वरूपमतिरहङ्कारः; अनात्मन्यात्माभिमानस्य अस्वतन्त्रे स्वतन्त्राभिमानस्य च हेतुः। स्मरणहेतुः चित्तम्[2]। चेतसो व्याप्तिः बहुस्मरणहेतुः चेतना' इति।

**पौराणिकास्तु**—'अनिरूप्यमदृश्यं च ज्ञानभेदं मनः स्मृतम्[3]'इति वदन्तः अदृश्यत्वं ज्ञानात्मत्वं च मनसः अभिलषन्ति। मनसो व्यापारा अपि केचन निर्दिष्टा वर्तन्ते। 'धैर्योपपत्ती व्यक्तिश्च विसर्गः कल्पना क्षमा। सदसच्चाऽऽशुता चैव मनसो नव वै गुणाः' इति **महाभारते** मोक्षधर्मे[4]।

गीतायां च भगवता मनः अधिकृत्य बहूक्तं वर्तते। मनः त्रिगुणात्मकं चञ्चलं दुर्निग्रहं प्रसभहारि इत्युक्त्वा, तन्निग्रहोपायाश्च, 'तत्रैकाग्रं मनः कृत्वा' (6-12) 'मनः संयम्य मच्चित्तः' (6-14) 'आत्मसंस्थं मनः कृत्वा' (6-25) 'मय्यावेश्य मनः' (12-2) 'मन्मना भव' (9-34) 'मय्येव मन आधत्स्व' (12-8) 'अभ्यासेन तु' (6-36) इत्यादिभिः कथिताः।

'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा। ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणा' इति मनसः सप्तगुणकत्वं **हेमचन्द्रः** कथयति। धीः (धारणावती) मेधा, संकल्पः (कर्म मानसम्), चित्ताभोगः, मनस्कारः, चर्चा, संख्या, विचारणा,

---

1. जयतीर्थप्रमाणपद्धतिः P.22
2. मध्वसिद्धान्तसारे P.40.
3. ब्रह्मवैवर्ते प्रकृतिखण्डे - अध्यायः 23.
4. धैर्यम्-निश्चयः; उपपत्तिः-ऊहापोहौ, व्यक्तिः-स्मरणम्; विसर्गः-विपरीतसर्गः; भ्रमः, कल्पना-मनोरथवृत्तिः; सत्-वैराग्यादि; असत्-रागद्वेषादि; आशुता-अस्थिरत्वम्।

विचिकित्सा, निश्चयः, व्यापादः, भ्रान्तिः, संवित्, ज्ञानम्, विज्ञानम्, स्मरणम्, विस्मरणम् इति **अमरसिंहस्य** मनोव्यापारपट्टिका ।

एतावता प्रबन्धेनेदं ज्ञातं स्यात्, यत् आधुनिकमनोविज्ञानिन इव भारतीयाः अपि शास्त्रकाराः मनोविषये एकमतित्वं न बिभ्रति इति । सावयवम्, निरवयवम्, क्रियात्मकम्, अणु, विभु, इति सिद्धान्तभेदाः भारतीयेष्वेव वर्तन्ते । अरूप-सरूप-क्रियारूप-शक्तिरूपमनस्कानां नव्यसिद्धान्तानां बीजं प्राचीनभारतसिद्धान्तेष्वपि दृश्यत इति चित्रमिदं भाति ।

प्राचीनभारते मनः केवलमधिकृत्य निबद्धं पृथक् शास्त्रं पातञ्जलं योगसूत्रं विहाय नान्यदुपलभ्यते । मनसः स्वरूपं तत्कार्यं सर्वमपि मुक्तिसाधनज्ञानाङ्गतया परिशीलितं पूर्वतनैः स्वस्वदर्शनेषु प्रसंगात् । सर्वेषामपि शास्त्राणां मुख्योद्देश्यं तु इह मनःशान्तेः प्राप्तिः, परत्र सुखावाप्तिश्चेतीदं द्वयमेव । महाभारते, 'शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिः । स एव सर्वशास्त्रज्ञः यस्य शान्तं मनः सदा ॥' इति शमस्य प्राधान्यम्, तत्र शास्त्राणामुपकारकत्वं चोक्तम् । "मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धाय विषयासक्तं मुक्त्यै निर्विषयं मनः[1] ।" इति शमप्राप्तौ साधनमपि अभिहितम् । **पातञ्जलं** योगसूत्रं च समाधि-साधन-विभूति - कैवल्याख्यैः चतुर्भिः पादैः समाधिं, तत्साधनं, अन्तरा प्राप्यं ऐश्वर्यम्, आत्मानं पृथक्कृत्य तद्दर्शनरूपं साक्षात्कारं च निरूपयति । अत्रेदमवधातव्यं वर्तते यत्, किन्नाम मनः? तत्स्वरूपं किमित्यादिकमधिकृत्य अत्र योगसूत्रे किमपि नोक्तमिति । अत्र मनःपदस्थाने बहुशः चित्तपदमुपयुक्तम् । प्रथमं योगं निर्दिश्य तल्लक्षणमुक्तम् - 'योगः चित्तवृत्तिनिरोध' (1-2) इति । 'अभ्यासवैराग्याभ्यां तन्निरोधः' इति (1-12) उपायोऽपि निर्दिष्टः । 'यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारण-ध्यान-समाधयोऽष्टावङ्गानि' (2.29) इति योगसाधन-भूतानि अङ्गानि च निर्दिष्टानि ।

---

1. विष्णुपुराणम् 6-7-28.

क्षिप्त-मूढ-विक्षिप्तत्वादयोऽवस्थाश्च वर्णिता मनसः । अविद्या, अस्मिता, रागद्वेषौ अभिनिवेशश्च एकाग्रताविरोधिनः । व्याधि-स्त्यान-संशय-प्रमाद-आलस्य-अविरति-भ्रान्तिदर्शन-अलब्धभूमिकत्व-अनवस्थितत्वानि चित्तविक्षेपाः अन्तरायाः इति, एतादृशान्तरायप्रतिषेधश्च अभ्यासवैराग्याभ्यां कर्तुं शक्यः इति च ।

**आलङ्कारिकाः** नाट्यशास्त्रकर्तारश्च रसानुभवस्य मूलभूतानि तत्त्वानि अष्टौ निर्दिशन्ति, येषां सामान्यं नाम स्थायिनो भावा इति । 'रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा । जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः'[1] इति । एते मक्डूगल्निर्दिष्टमूलप्रवृत्तितुल्याः वर्तन्ते । एते एव स्थायिनो भावा विभावादिभिः परिपोषिताः स्वादुतामानीताः रसाभिधेयत्वं प्राप्नुवन्ति । काव्यपठने, नाटकादिदर्शने योऽयमानन्दः पूर्वोक्तस्थायिभावान्यतममूलः अनुभूयते सः अलौकिको भवति ; ब्रह्मानन्दसब्रह्मचारी चेत्यभिप्रयन्ति ।

अलौकिकत्वादेव पुनः पुनस्तदनुभवे प्रवृत्तिः, लौकिकत्वे तु शोकादिषु प्रवृत्तिः न स्यात् । स्थायिनो भावा विभावैरनुभावैः सात्त्विकैः व्यभिचारिभिश्च स्वादुत्वं आनीयमानाः रस्यतां प्राप्नुवन्ति । अस्मिन्नेव प्रसङ्गे आलङ्कारिकाः संवेगादीनां (Emotions) भावानां च (Sentiments), चित्तवृत्तिविशेषाणां स्वरूपमधिकृत्य विचारं कृतवन्तः ; न तु मनःस्वरूपमधिकृत्य । निर्वेदादयस्तु व्यभिचारिणो भावाः[2] ।

---

1. भरतनाट्यशास्त्रम् 6-17.

2. निर्वे[illegible]ः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥
व्रीडा चपलता हर्षः आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ।
सुप्तं विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ।
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥
भरतनाट्यशास्त्रम् 6,18-21.

स्थायिनो भावस्य रसत्वकरणे बाह्यप्रेरणानि यानि वर्तन्ते ते विभावा अनुभावाश्च व्यपदिश्यन्ते । स्तम्भ-प्रलय-रोमाञ्च-स्वेद-वैवर्ण्य-वेपथु-अश्रु - विस्वरता - नामकाः सात्त्विकभावाश्च शारीरा विकाराः समायुक्तमनसा पुंसा अभिव्यज्यमाना भवन्ति नाट्ये ।

एते सर्वेऽपि मनःसंबद्धाः अंशाः यावन्तो यादृशाश्च वर्णिताः **भरतेन,** तावन्तः तादृशा एव वर्ण्यन्ते पश्चात्तनैरालङ्कारिकैः । रेखामात्रमपि भरतमार्गात् ते न व्यतियन्ति । पूर्वोक्तं सिद्धान्तं आत्मनः अनुभवेन सह सन्तोल्य, किं उक्तम् सर्वं साधु? उत असाध्विति विचार्य तत्त्वान्वेषणं नैव चक्रुः । केवलपिष्टपेषणमेव कृतवन्त इति खेदस्थानमिदम् । 'नटः किं रसाश्रयः?' इति समस्यामुद्भाव्य केवलयुक्त्या विचारितवन्तः । न तु 'अभिनयकाले किं भवतोऽपि रसानुभवो भवति' इति कमपि नटं पृष्ट्वा तदनुभवानुगुणं निश्चयमकुर्वन्[1] ।

---

1. "केचन विद्वांसः अश्वस्य कति दन्ता वर्तन्ते इति केवलयुक्त्या शब्दप्रमाणेन च दन्तसंख्यां निश्चेतुं प्रयतमानाः चिरं वादरताः आसन । तदा कश्चित् 'किमर्थमेवं वाक्कलहः क्रियते, साक्षादेव कश्चनाश्वः आनीयताम् ; तदास्यं व्यादाप्य गणने कृते ज्ञायते एव दन्ताः कति इति' इत्युक्तवान् । सद्यः अन्ये ते सर्वेऽपि शब्दाप्रामाण्यं कथयन्नयं द्रुह्यति शास्त्रप्रमाणायेति तमनिन्दन्" इति पाश्चात्यदेशीया कापि कथा जागर्ति । आलङ्कारिका अप्यस्मदीया वैयक्तिकानुभवविषये प्रत्यक्षे श्रद्धामकुर्वाणाः केवलगतानुगतिकत्वरूपं एडपद्धतिमनुसृतवन्तः । पञ्चषेभ्यः वर्षेभ्यः पूर्वं प्रयुक्ते शाकुन्तले नाटके शकुन्तलावेषं गृहीतवती कापि युवतिः, रसिकतल्लजेन **श्रीमता के. बालसुब्रह्मण्यार्येण,** 'अभिनयकाले भवत्याः रसानुभवो भवति किम्' इति पृष्टा एवमुत्तरं अदात्-'शकुन्तलाप्रत्याख्यानप्रेक्षणके शकुन्तलाविषादः मयानुभूतः' इति । अयमनुभवस्तु न लौकिकः ; किन्तु अलौकिक एव । अत एव शकुन्तलातादात्म्येन विषादे स्वयं निमज्जन्ती अपि पश्चात् कर्तव्यमभिनयादिकं स्वयं कृतवती । अयं च मनसः स्वभावः यत् क्षणे एव भावात् भावान्तरगमनम् ।

पुङ्खानुपुङ्खविषयेक्षणतत्परोऽपि ब्रह्मावलोकनधियं न जहाति योगी ।
संगीततालल्यवाद्यवशंगतापि मौलिस्थकुम्भपरिरक्षणधीर्नटीव ॥

इति वासिष्ठोक्तमवगन्तव्यम् अस्मिन् संदर्भे ।

अथापि अलङ्कारशास्त्रेषु मनस्संवेगसंबद्धाः विषया बहवः प्रतिपादिताः प्राचीनभारतमनोविज्ञानज्ञाने साहाय्यमाचरेयुरेव । काव्यनाटकादिष्वपि मनोविज्ञानांशा बहवः निर्दिष्टाः कविभिः । प्राचीनभारतमनोविज्ञानमधिकृत्य, आधुनिकस्य जगद्विख्यातस्य मस्तिष्कमहाभिषजः **डाक्टर् श्रीराममूर्तिमहाभागस्य** आशयो-[1]ऽपि अत्र निर्देष्टव्यो वर्तते । "योगिनः, भूतं वर्तमानं भविष्यं च ज्ञातुं शक्यमिति कथयन्ति । अतीन्द्रियप्रत्यक्षमपि सुशकमिति च । मानवस्य संपूर्णमपि तन्त्रिकामण्डलं क्रियाशीलं कर्तुं यदि कोऽपि प्रभवेत् तर्हि मनसः पूर्णां शक्तिं ज्ञातवतस्तस्येदं भायात्, यत्, यद् योगिभिरुच्यते तन्नासंभाव्यम् इति । मनुजमस्तिष्कस्य पूर्णामपि शक्तिं न वयमिदानीं जानीमहे । न च वयं तदवगतेः दवीयसि पथि वर्तामहे । भविष्यन् कालः मनसः मस्तिष्कस्य च कृत्स्नमपि कार्यं अस्मभ्यं प्रदर्शयेदिति विश्वसितुं अवकाशो वर्तते" इति ।

## प्राचीनभारते शिक्षामनोविज्ञानम्—

अस्मिन् ग्रन्थे तत्र तत्र शिक्षामनोविज्ञाननिरूपणावसरे भारतीयशिक्षामनोविज्ञानांशाः अपि निर्दिष्टा इति, अत्र पुनः संग्रहेण निर्दिश्यते । 'शिष्यशिष्टिरवधेन, अशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्याम्' (1-3-48, 49) इति नातिपीडनं कुर्वद्भिरुपाध्यायैः छात्राणां दण्डनं विधेयमिति **गौतमः** कथयति । विद्यार्थिषु वैयक्तिको भेदः विद्याग्रहणे वर्तते इति **भवभूतिः** 'वितरतिगुरुः' (उ. रा. 2-4) इत्यनेन श्लोकेन निरूपयति । 'मन्दोऽपि' (मा-2.7) इत्यनेन परिवेषप्राधान्यं, 'पात्रविशेषन्यस्तं' (मा-1-6) इत्यनेन वंशधर्मप्राधान्यं

---

**लोकज्ञो भगवान् पतञ्जलिः भाष्यकारः 'रसादिभ्यश्च' इति मतुप्विधायकं पाणिनीयं सूत्रं व्याख्यान्, 'रसिको नटः' इति उदाहरंश्च इदं सुस्पष्टं भाषते यत् नटस्य अभिनयकाल एव रसो वर्तत इति । अन्यथा नट इति पदमत्र प्रयुक्तवान्न भवेत् ।**

1. Dr. B. Ramamurti, Professor of Neuro-Surgery, General Hospital, Madras.

चोररीकरोति **कालिदासः** । 'सुशिष्यपरिदत्तविद्येवाशोचनीयासि', (शा-4 ) 'अद्रव्यपरिग्रहोऽपि उपाध्यायस्य बुद्धिलाघवं प्रदर्शयति' (मा-I) इति कथयन् सुशिष्याय विद्या दातव्या[1], बुद्धिमन्त एव शिष्यत्वेन ग्राह्या इति च द्योतयति। केवलविषयज्ञानं आचार्यकाय न पर्याप्तम्। किन्तु प्रवचनशक्तिरपि उपाध्यायस्यापेक्ष्यते इति 'श्लिष्टा क्रिया' (मा-1 16) इत्यनेन, भृतकाध्ययनं न कर्तव्यमिति 'तं ज्ञानपण्यं वणिजं वदन्ति' (मा-1-17) इत्यनेन च सूचयति ।

आगमनप्रणाल्या क्रियमाणस्याध्यापनस्य विशिष्टता छान्दोग्ये प्रतिपादिता । भगवतः सर्वव्यापित्वमदृश्यत्वं च नीरप्रलीनलवणप्रयोगादध्यापयति आरुणिः पुत्रम् । (220-तमः पुटः विलोक्यताम् ।) बालाय न केवलं ज्ञानदानं किन्तु तद्गुणवर्धनमपि आचार्यस्य कार्यमेवेति तैत्तिरीयोपनिषदाचार्येण क्रियमाणः 'सत्यं वद' इत्याद्युपदेशः सूचयति। उपाध्यायाः शिष्येषु प्रीतिपूर्वकमध्यापनमकुर्वन्नित्यत्र सान्दीपनिः[2] उदाहरणम् । 'प्राप्ते तु षोडशे वर्षे पुत्रे मित्रवदाचरेत्' इत्यपि वर्तते। इदं शिष्यविषयेऽपि समानम् । केचित् आचार्याः कठिना आसन्[3] इति च ज्ञायते । प्राचीनभारतीयं मनोविज्ञानं शिक्षामनोविज्ञानं चाधिकृत्य पृथगेव ग्रन्था निर्मातुं शक्याः । भगवतो वेङ्कटेश्वरस्य कृपयाऽयं मनोरथः कदाचित् संपद्येतापि । अथाप्यत्र नातिविस्तर एव शोभते ।

**समासेनोदितमिदं धीखेदायैव विस्तरः ।**
**असंगृहीतमप्यन्यदभ्यूह्यमनया दिशा ॥[4]**

---

1. (a) ऊषरे निवपेत् बीजं षण्डे कन्यां प्रदापयेत्।
   सृजेद्वा वानरे मालां नापात्रे शास्त्रमुत्सृजेत् ॥
   (b) विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना ।
   आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत् ॥ मनु. 2-113.
   (c) विद्यया सार्धं म्रियेत न विद्यामूषरे वपेत् , छान्दोग्यब्राह्मणम् ।
2. श्रीभागवते, 10-80-40.
3. लालने बहवो दोषाः ताडने बहवो गुणाः ।
   तस्मात् पुत्रं च शिष्यं च ताडयेत् न तु लालयेत् ॥
4. भामहस्य 7-2-95.

प्रज्ञा विवेकं लभते भिन्नैरागमदर्शनैः ।
कियद्वा शक्यमुन्नेतुं स्वतर्कमनुधावता ॥[1]

नव्यविज्ञानसन्दर्भकुतुकेन मयाऽधुना ।
रचितेयं कृतिः प्रीत्या भवतात् सुधियां मुदे ॥

श्रीवेङ्कटाद्रिवासोऽयं श्रीशो भक्तेष्टदायकः ।
अनया सेवया तुष्टः प्रीतो भवतु मे सदा ॥

---

1. वाक्यपदीये, 2-492.

# अनुबन्धः—१

## पारिभाषिकशब्दसङ्ग्रहः

### आङ्ग्लेयी — संस्कृतम्

Ability - योग्यता - कुशलता - क्षमता
Ability grouping - योग्यतानुसारिवर्गीकरणम्
Abnormal - अपसामान्यम्
Accommodation - स्वतः समायोजनम्
Accuracy - विशुद्धिः
Acquisition - अर्जनम्
Activity - क्रिया
Adolescence - किशोरावस्था - कैशोरम्
Adrenalin - अड्रेनेलिन्
Afferent - अभिवाहिनी
Aggression - आग्रहः
Alertness - जूर्तिः
Ambivert - उभयमुखः
Anecdote - वृत्तान्तः
Antidote - प्रतीकारि
Apperception - अभिबोधः
Apperceptive mass-अभिबोधपुञ्जः
Aptitude - अभिवृत्तिः
Assignment - दत्तकार्यम्
Assimilation - आत्मीकरणम्
Association of idea - भावसंश्लेषः
Attendance - सान्निध्यम्
Attention - अवधानम्
Attitude - अभिवृत्तिः
Axon - अक्षतन्तुः

Backward child - मन्दबुद्धिः
Behaviour - व्यवहारः
Behaviourism - व्यवहारवादः
Boredom - जामिता
Brain - मस्तिष्कम्

Cathartic theory (Play) - रेचनसिद्धान्तः
Cell - कोशिका
Cerebellum - अनुमस्तिष्कम्
Cerebrum - प्रमस्तिष्कम्
Character - शीलम्
Childhood - शैशवम् - बाल्यम्
Chromosomes - क्रोमोसोमानि (गुणसूत्राणि)
Chronological age (C.A.) - कालवयः (जन्मवयः)
Citizenship Training-नागरिकताप्रशिक्षणम्

Club - संघः
Clumsiness - सौन्दर्यविहीनता - असुन्दरता
Cognition - संज्ञानम्
Community - समाजः - समुदायः
Compensation - प्रतिपूरणम्
Competition - स्पर्धा
Complex - ग्रन्थिः, जटिलता
Conation - कृतिः
Concentric method-चक्रकप्रणाली
Concept - भावः - प्रतिपत्तिः
Condition - उपाधिः
Conscience - अन्तःकरणम्-अन्त-विवेकः
Conditioning - उपाधिकरणम् - अनुकूलीकरणम्
Conflict - सङ्घर्षः
Connector - संयोजिका (तन्त्रिका)
Conciousness - चैतन्यम्
Co-operation - सहयोगः
Correlation - सहसम्बन्धः
Cortex - बाह्यत्वचिका
Cortin - कोर्टिन्
Counselling - परामर्शदानम्
Craft - शिल्पम्
Cretinism - वामनत्वम्
Criticism - विमर्शः
Crowd - केवलगणः - गुम्फः
Culture - संस्कृतिः
Curiosity - कौतूहलम्
Curriculum - पाठ्यचर्या

Day - dreaming - दिवास्वप्नः
Deconditioning - उपाधि(कार्य) - निवर्तनम्
Deduction - निगमनम्
Delinquent - अपचारी (बालः)
Dendrites - प्रतानिकाः
Developmental method -विकास-प्रणाली
Diagnosis - निदानपरीक्षा
Discipline - अनुशासनम्
Distraction -अवकर्षणम्-विकर्षकम्
Drive - अभिप्रेरणम्
Dynamic - क्रियाशीलम्-ऊर्जस्वि

Effector - प्रतिक्रियाकारिणी
Efferent - अपवाहिनी
Ego - अहंमतिः
Embryo - भ्रूणः
Emotion - संवेगः
Endocrine gland - अन्तःस्रावी ग्रन्थिः
Environment - परिवेषः - वातावरणम्
Evaluation - अङ्कनिर्धारणम्
Examination - परीक्षा
Experience - अनुभवः
Cognitive - ज्ञान-
Feeling - विभावन-
Conative - कृति-
Experiment - प्रयोगः
Experimental method-प्रायौगिक-प्रणाली

Extra sensory perception - अतीन्द्रियप्रत्यक्षम्
Extraspection - बाह्यावेक्षणम्
Extrovert - बहिर्मुखः

Factor - गौणं कारणम्
Fatigue - श्रान्तिः
Feeling - संवेदनम् - विभावनम्
Field-study method - सम्भवद्रंगदर्शनप्रणाली
Forgetting-विस्मृतिः - विस्मरणम्
Frustration - भग्नाशता
Functionalism - (मनः) कार्यपरिशीलनवादः

Genes - निश्चायकद्रव्यम्
Gestalt School - सविकल्पमनःपरिशीलनसिद्धान्तः
Gifted child - प्रतिभावान् बालः
Glands - ग्रन्थयः
Grade - पर्व - क्रमः
Grade acceleration - पर्वान्तरणम्
Gregarious instinct - गणवृत्तिः
Group - गणः - वर्गः
Group (In) - अन्तरङ्गीयत्वम्
Group (Out) - बहिरङ्गीयत्वम्
Group (Primary) - मूलसमाजः
Group (Secondary) - मध्यसमाजः
Group (Tertiary) - गौणसमाजः
Guidance - निर्देशनम्

Habit - अभ्यासः
Hallucination-निर्मूलभ्रमः-निरधिष्ठानभ्रमः
Heredity - आनुवंशिकता
Heuristic method - शोधनप्रणाली
Hormism - हार्मिसम्-अन्तरूर्जासिद्धान्तः
Hormone - ग्रन्थिस्रावः
Hypo Thalamus - हैपो तालमस्

'Id' - इद्
Idea - भावः
Ideal - आदर्शः - लक्ष्यभूतः
Identification - अभेदबुद्धिः
Illusion - भ्रमः
Image - बिम्बनम् - बिम्बः
Image (Eidetic)-अतिविशदबिम्बम्
Imagery - बिम्बनम्
Imagination - कल्पना
Aesthetic - सौन्दर्यात्मक-
Pragmatic - फलमूलक-
Productive - उत्पादक-
Reproductive - पुनरुत्पादन-
Imitation - अनुकरणम्
Impulse - आवेगः
Incentive - प्रोत्साहन-प्रोत्साहक
Incubation - आविर्भावकालः
Indiscipline - अनुशासनाभावः
Individual Difference - वैयक्तिकभेदः
Induction – आगमनम्
Inferiority feeling - नीचभावना
Ink Blot Test-मषीविन्यासपरीक्षा
Insight - सूक्ष्मेक्षिका
Instinct - मूलप्रवृत्तिः

Instruction - अनुदेशनम्
Intelligence - बुद्धिः
Intelligence Quotient (I, Q.) - बुद्धिलब्धिः
Interest - अभिरुचिः
Interaction - पारस्परिकक्रिया
Interview - साक्षाद्दर्शनम्
Introspection - अन्तरवेक्षणम्
Introvert - अन्तर्मुखः

Judgement - निश्चयकरणम्

Law - नियमः
Leader - नेता
Learning - शिक्षणम्
Learning curve - अधिगमरेखा
Left Handedness - सव्यकारित्वम्
Lobe - दलम्

Maladjustment - कुसामञ्जस्यम् - कुसमञ्जनम्
Maturation - परिपाकः-परिपक्वता-विकासः
Maze - व्यूहयन्त्रम्
Medulla Oblongata - मेरुशीर्षम्-मुकुलम्
Memory - स्मृतिः
Mental Age (M. A.) - मनोवयः
Mental health - मनः स्वास्थ्यम्
Mental hygiene - मनस्स्वास्थ्य-विज्ञानम्
Mind - मनः
Mnemonics - स्मरणोपकारिणः
Mob - गणः
Mood - भावदशा
Motivation - कार्योद्देश्यम् - कार्ये प्रेरकम्
Multi-purpose School-बह्वुद्देश्यक-पाठशाला
Muscle - पेशी
Mutation - उत्परिवर्तनम्- विकारः

Need - अपेक्षा
Nervous System - तन्त्रिकातन्त्रम्
Autonomic - स्वतन्त्र-
Central - केन्द्र-
Peripheral - प्रान्त-
Neighbourhood - परिसरः

Observation - सम्यगवेक्षणम्
Organism - जीवः
Overy - अण्डाशयः
Ovum - अण्डाणुः

Perception - प्रत्यक्षम्
Personality - व्यक्तित्वम्
Personality profile - व्यक्तित्वरूप-रेखा
Trait - (व्यक्तित्व) प्रकृतिविशेषः
Phobia - भीतिः-भयम्
Physiology - शारीरतन्त्रम्
Plateau - पीठभूमिः
Prejudice - अकारणप्रद्वेषः
Projection - प्रक्षेपः -परत्र दर्शनम्
Projective Technique - प्रक्षेप-मूलतन्त्रम्

Propaganda - प्रचारः
Psychiatrist - मनोरोगभिषक्
Psycho Analysis - मनोविश्लेषणम्
Psychology - मनोविज्ञानम्
Animal - पशु-
Child - बाल-
Educational - शिक्षा-
Genetic - विकासमूलक [लन-
Gestalt सविकल्पकमनःपरिशी-
Physiological - शारीर-
Social - सामाजिक-
Purposivism - प्रयोजनवादः

Questionnaire - प्रश्नावली

Rating Scale - क्रमनिर्धारणमानम्
Rationalization - हेतुचिन्तनम्
Readiness - सज्जता
Reasoning - तर्कणम्
Recall · पुनराह्वानम्
Receptor - संवेदिनी
Recessive - अकार्यकारि
Recognition - प्रत्यभिज्ञानम्
Reflex Action - प्रतिक्रिया
Reflex arc - प्रतिवर्तचापः
Reformatory School - चारित्र-
वर्धनपाठशाला
Rejectees - परित्यक्ताः
Reliabiliy - विश्वसनीयता
Religion - धर्मः
Remembering - स्मरणम्
Repression - नियन्त्रणम्-निग्रहणम्
Response - प्रतिक्रिया
Retention - धारणम्
Reverie - मनोविलासः

Self - abasement - आत्महीनता
Self-assertion - स्वाग्रहिता
Senescence - जरा - वार्धकम्
Sense Training-इन्द्रियप्रशिक्षणम्
Sentiment - अर्जितमनोभावः
Society - समाजः
Sociology - समाजविज्ञानम्
Edcational - शिक्षा-
Social acceptance - समाजाङ्गी-
करणम्
Sociometry - समाजमापनम्
Sociogram - समाजमितिः
Spinal column - मेरुदण्डः
Spinal cord - मेरुरज्जुः
Sperm - शुक्राणुः
Standardization - मानाङ्कनम्
Stimulus - प्रेरकम्-प्रेरणम्
Straight (logical) thinking- ऋजु-
चिन्तनम्
Structuralism - (मनो)रचना-
सिद्धान्तः
Sub-conscious mind-अचैतन्यं मनः
Sublimation - उदात्तीकरणम् -
शोधनम्
Suggestion - संसूचनम्
Suggestion (Contra) - विपरीत-
सूचनम्
Super-Ego - विशिष्टाहंमतिः

Suppressed - प्रतिरुद्धः
Syllabus - पाठ्यविवरणम्
Symmetry - सममितिः
Sympathy - सहानुभूतिः
Synapse - अन्तर्ग्रथनम्

Temperament - स्वभावः
Test - परीक्षा
  Achivement - उपलब्धि-
  Attitude - अभिवृत्ति-
  Group - गण-
  Individual - व्यक्ति-
  Performance - निष्पादन-
  Verbal - शब्द-
Thalamas - मध्यमस्तिष्कम्
Thinking - चिन्तनम्
Toxins - विषांशाः
Transfer of training - प्रशिक्षणान्तरणम्
Transition period - अन्तराळदशा
Trial and error method - प्रयत्न - पराजयप्रणाली
Truant - अपसारी
Twins (Fraternal) - समानपितृकयमलौ
Twins (Identical) - समानलिङ्गौ यमलौ

Unconscious mind - अवचैतन्यं मनः

Validity - प्रामाण्यम्
Verification - संवाददर्शनम्

Will - कृतिः - सङ्कल्पः - इच्छा

—: * :—

# अनुबन्धः—२

## ग्रन्थे निर्दिष्टानां ग्रन्थकर्तॄणां अन्येषां च नामानि

# अनुबन्धः—३

## विषयसूची